॥ श्रीः ॥

काशी-संस्कृत-ग्रन्थमाला

१५१





( काव्यविभागे (१५) पञ्चदशं पुष्पम् )



महाकवि-श्रीबाणभट्टविरचिता

# कादम्बरी



काशीस्थ-भवानीशङ्करसंस्कृतमहाविद्यालय-प्रधानाध्यापकेन

चिदानन्द-संस्कृतमहाविद्यालयाध्यापकेन च

व्याकरण-साहित्याचार्य-मीमांसा-वेदान्त-शास्त्रिठकुरोपनामक-

पण्डित श्री कृष्णमोहन शास्त्रिणा



'चन्द्रकला' 'विद्योतिनी' संस्कृतहिन्दीटीकाद्वयेन

समलङ्कृत्य सम्पादिता।





प्रकाशकः

जयकृष्णदास-हरिदास-गुप्तः,

चौखम्बा संस्कृत सीरिज आफिस,

विद्याविलास प्रेस, बनारस।

००७ ]






[ सन् १९५०

# प्रस्तावना

अथेदं विचार्यते किं लक्षणं नामेदं काव्यम् । तत्र खलु जनानां श्रवणपुटेषु सुधाधारां प्रवाहयत्, सहृदयानां मनसि कमप्यानन्दोल्लासं जनयत्, कामपि परां निर्वृत्तिं सद्यः सम्पादयत् सकलजगन्मनोज्ञं काव्यम् । तच्च ध्वनिगुणीभूतत्वेन दृश्यश्रव्यत्वेन च चतुर्विधम् । श्रव्यं पुनः पद्यगद्यमयत्वेन द्विविधम् । तत्र छन्दोबद्धमयं पद्यम्, वृत्तबन्धोज्झितं गद्यम् । तदपि गद्यं कथाख्यायिकारूपद्वयम् । तत्र कादम्बरी कथारूपं गद्यकाव्यम् । तत्र चैव नियमः—यत्तस्य कस्यापि सरसवस्तुनो गद्यैरेव निर्माणं भवति । तथात्रार्यावक्त्रापवक्त्रकच्छन्दसामेव समावेशः, अपिचारम्भे पद्यैर्नमस्कारोऽनन्तरं खलादेर्वृत्तकीर्त्तनं भवति । गद्यानि च मुक्तकचूर्णक-वृत्तगन्धि-उत्कलिकाभिधानानि चतुर्विधान्येव । तत्र प्रकृतग्रन्थे चोत्कलिकाप्रायमेव गद्यम् । तथा चाहुर्दर्पणकाराः—

"कथायां सरसं वस्तु गद्यैरेव विनिर्मितम् । क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके ।
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तनम् ॥" इति च ।

"वृत्तबन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च । भवेदुत्कलिकाप्रायं चूर्णकञ्च चतुर्विधम् ॥
आद्यं समासरहितं वृत्तभागयुतं परम् । अन्यदीर्घसमासाढ्यं तूर्यञ्चाल्पसमासकम् ॥" इति ।

संस्कृतसाहित्ये गद्यकाव्यनिर्माता महाकविर्बाणभट्ट एव प्रधानाचार्यः, अयमेवास्य ग्रन्थरत्नस्य निर्माता । 'गद्यं कवीनां निकषं वदन्ति' इत्युक्तिः सर्वत्र प्रथितैव । कवेः काव्यकौशलं गद्येनैव पूर्णतया परीक्ष्यत इति सर्वथा सत्यं वचः । यतो हि पद्यं श्लोकचरणसौन्दर्येण कामपि शोभां जनयत्येव, किन्तु गद्यं सर्वतः सौन्दर्यं विना स्वनिर्मातृभ्यो न प्रददाति पाण्डित्यपरिचयमनायासादेव ।

तत्र संस्कृतभाषायां गद्यकाव्यं पुरा नासीदिति न वक्तव्यं कदापि । यतः संहिता-ब्राह्मणकालादेवास्य प्रादुर्भावः सञ्जातः । तत्तद्दर्शनव्याकरणादिसूत्रभाष्यप्रणयनसमये तु गद्यलेख एव प्राचुर्येणाभवत् । यद्यपि तदनन्तरं महाभाष्ये महाभारतसम्बद्धानां गद्यांशानां वासवदत्ता-सुमनोत्तरा-भैमरथीत्यादिकथाख्यायिकादीनां नामान्युपलभ्यन्ते तथापि साहित्यनियमानुसारी विकासोऽस्मादेकस्मादेव समजनीत्यत्र न मनागपि सन्देहलेशः । तत्र या हि सुबन्धुप्रणीता 'वासवदत्ता' तत्र श्लेषातिरिक्तं न चमत्कारित्वं किञ्चिदपि जायते । रसभावपूर्णायाः अभिनवार्थकल्पनायाः कवितायास्तत्र स्पर्शोऽपि नास्तीति कथं साहित्यनियमानुसारिणीयमिति वक्तुं शक्यामः । एतत्क्रमेणान्यत्रापि तथैवेति न तत्सहृदयहृदयसन्तोषप्रदं केनापि प्रकारेण ।

गद्यकवीनामेव नायं बाणः मूर्द्धन्यः, किन्तु महाकवीनां चूडामणिरिति सर्वैरेव सहर्षं मन्यते ।

कादम्बरी चेयं संस्कृतगद्यसाहित्यस्य समुज्ज्वलं हीरकं विद्यते । तथा हि ग्रन्थेऽस्मिन् भावाभावयोः तथा शब्दार्थयोश्च समुचितः समावेशो दृश्यते । वर्णनसौन्दर्यं तु कीदृशमिति निरीक्ष्यतां तावत्—यदि क्वचित् विन्ध्याचलविकटाटव्या वर्णनं तथा साहसप्रेमवतः शबरसैन्यस्य रोमाञ्चकारिवर्णनं रञ्जयति चित्तं तर्हि क्वचित् धर्मस्य साक्षान्मूर्त्तेः, सदयतायाः परमावतारस्य, आध्यात्मिकतायाः ज्वलन्निदर्शनस्य, जाबालिमहामुनेः स्वरूपनिरूपणं तथा तस्य परमपावनीभूता मनोरमा चाश्रमस्य सुभगशोभा च दर्शकानां चेतांस्याकर्षयतीति । क्वापि यदि बाल्यकाले गन्धर्वक्रोडे विहरन्त्या कलभाषिण्या वीणाया इव मधुवादिन्या स्निग्धहृदयायाः महाश्वेताया विरहविधुरा मूर्त्तिः समासादयति प्रमोदातिशयम्, तर्हि क्वापि अलोकसामान्यसौख्यमनुभवन्त्याः गन्धर्वराजकन्यायाः सरसहृदयायाः कमनीयकलेवरायाः कादम्बर्याः प्रेममयी कथा श्रोतॄणां चित्तचञ्चरीकं स्वाभिमुखमाकर्षयतीति ।

अत्र सर्वत्रैव चालङ्काराणां मधुरझङ्काराः श्रोतॄणाममन्दमानन्दं जनयन्तीति न तिरोहितं केषाञ्चिदपि विपश्चिताम् । इह च रागात्मिकावृत्तेः सुभगव्यञ्जना हृदयं विकासयति । परमार्थतस्तु रसालङ्कारयोः मधुर-

मिलने भाषाभावयोः परस्परसंपर्के कल्पनावर्णनयोरनुरूपसंघटने संस्कृतसाहित्ये कादम्बरी चानुपमाऽद्वितीयैवेति निर्विवादमेतत्। रसिकहृदयानां मदमत्ततावियायिनी सुमधुरा कादम्बरी मदिरेति विभावयन्ति सहृदयाः। अत एवैतदुत्तरार्द्धप्रणेतुः भूषण( पुलिन्द )भट्टस्योक्तिः चरितार्था भवति—

'कादम्बरीरसभरेण समस्त एव मत्तो न किञ्चिदपि चेतयते जनोऽयम्।'

इह हि हृदयग्राहिण्या उपमायाः, चमत्कारिणः श्लेषस्य, सुन्दरपरिसंख्यायाश्चाधिक्येन विलक्षणः समावेशः उपलभ्यते। भव्यार्थस्य कमनीयत्वमतीव मनोहारि। महाकवेर्बाणस्य कविता हि मौलिकार्थानां निधिः, न तत्रार्थानां पिष्टपेषणं क्वचिदप्यवलोक्यते, सर्वत्रैवाभिनवाऽर्थाः समुल्लसन्ति। प्राकृतिकदृश्यवर्णनायां बाणभट्टस्य नैपुण्यमत्युन्नतमित्यत्र न मनागपि सन्देहलेशः। यत्र तत्राभिनवरङ्गेण प्रपूर्य प्रत्येकचित्राण्यतीव विचित्राणि रचितानि। महाकवेः कवितायाः कश्चिन्निर्देश स्तावत् क्रियते। तत्र प्रथमं पद्यं यथा—

कटु क्वणन्तो मलदायकाः खलास्तुदन्त्यलं बन्धनशृङ्खला इव।
मनस्तु साधुध्वनिभिः पदे पदे हरन्ति सन्तो मणिनूपुरा इव॥

इह खलानां शृंखलया सज्जनानां मणिनूपुरेण योपमा सात्यन्तं हृदयं चमत्करोतीति स्पष्टमेव। पुण्डरीको महाश्वेतायां यदातीवासक्तो नितरां विक्षिप्त इवासीत्तदा तत्सख्युः कपिञ्जलस्य कीदृशं वचस्तदिह गद्येन दर्शितं महाकविना—

"का वा सुखाशा साधुजननिन्दितेष्वेवंविधेषु प्राकृतजनबहुमतेषु विषयेषु भवतः?। स खलु धर्मबुद्ध्या विषलतावनं सिञ्चति, कुवलयमालेति निस्त्रिंशलतामालिङ्गति, कृष्णागुरुधूमलेखेति कृष्णसर्पमवगूहते, महारत्नमिति ज्वलन्तमङ्गारमभिमृशति, मृणालमिति दुष्टवारणदन्तमुषलमुन्मूलयति, मूढो विषयोपभोगेष्वनिष्टानुबन्धिषु यः परिपातविरसेषु सुखबुद्धिमारोपयति।" इति।

जाबाल्याश्रमवर्णने यथा—

'यत्र च महाभारते शकुनिवधः, पुराणे वायुप्रलपितं, वयःपरिणामे द्विजपतनम्, उपवनचन्दनेषु जाड्यम्, अग्नीनां भूतिमत्त्वम्, एणकानां गीतव्यसनं, शिखण्डिनां नृत्यपक्षपातः, भुजङ्गमानां भोगः, कपीनां श्रीफलाभिलाषः, मूलानामधोगतिः"। इति।

इह अनुकूलो धीरोदात्तलक्षणश्चन्द्रापीडो नायकः। कादम्बरी तु कन्या परकीया मुग्धा नायिका परिणयात्प्राक्। परिणयानन्तरं तु ( उत्तरार्द्धे ) स्वकीया मध्या चेत्यवगन्तव्या।

अत्र प्रधानरसो विप्रलम्भः शृङ्गारः। तत्र च पूर्वभागे उत्तरभागस्य कस्मिंश्चिद्भागे च पूर्वरागरूपः उत्तरभागे च करुणरूपः। क्वचित् सम्भोगशृङ्गारोऽपि। यत्र तत्र करुणहास्यप्रभृतयश्चान्येऽपि रसा उपलभ्यन्ते। आधिक्येन माधुर्यमत्र गुणः। यत्र तत्र प्रसादगुणोऽपि। बाहुल्येन पाञ्चाली रीतिः, तत्र हि अर्थानुरूपैव शब्दगुम्फना भवतीति नियमः। अन्या अपि गौड्यादयो यथासम्भवं समुपलभ्यन्त एव।

सेयं कादम्बरीकथा बृहत्कथासरित्सागरोपनिषद्धितमतरङ्गगतं मकरन्दिकाया वृत्तान्तमेव यत्र तत्राविकलीकृत्य पात्राणां नामान्तराणि च विधाय निर्मिता श्रीमता बाणभट्टेन। यथात्र किञ्चिन्निर्दिश्यते—

| बृहत्कथासरित्सागरगतनामानि— | कादम्बरीगतनामानि— |
|---|---|
| काञ्चनपुरी | विदिशा |
| सुभागः | शूद्रकः |
| मुक्तालता | चाण्डालकन्यका |
| शास्त्रगञ्जः ( शुकः ) | वैशम्पायनः |
| हिमालयपादे रोहिणतटः | विन्ध्याटव्यां शाल्मलीतरुः |
| मरीचिः | हारीतः |
| पौलस्त्यः | जाबालिः |

एवमन्येऽपि।

## महाकविजीवनवृत्तान्तः समयादिकञ्च

महाकवेः स्वेतिवृत्तं प्रायो हर्षचरिताख्ये स्वनिर्मितप्रबन्धे विस्तरशः प्रतिपादितं विद्यते। तद्दिशा एतन्महानुभावस्य पूर्वजाः शोणापरपर्यायहिरण्यवाहोस्तीरे प्रीतिकूटाख्ये ग्रामे न्यवसन्। सम्प्रति स्थानमिदं सम्भवतो विहारप्रान्ते 'आरा' मण्डलान्तर्गतमासीदिति प्रतीयते। एतत्कुलं प्राचीनकालादेव धर्मस्य विद्यायाश्च कृते सुप्रसिद्धमेव। वात्स्यायनगोत्रे समुत्पन्नश्चास्य पूर्वजः सकलगुणवरिष्ठः कुबेरो नाम। तस्य चत्वारः पुत्राः समभवन्। तेषु सर्वानुजः पाशुपतः समभवत्। तत्पुत्रोऽर्थपतिः तत्पुत्रश्च चित्रभानुः तस्माच्च महाकविर्बाणभट्टः*। बाल्य एवास्य राजदेवी नाम्नी माता परलोकमगमत्। पितापि चित्रभानुरस्य चतुर्दशवर्ष एव सायुज्यमलभत्। पैतृकी सम्पत्तिश्चास्य प्रचुरतमासीत्। तादृशसुयोग्याभिभावकाभावात् भट्टबाणो हि वयस्यैः सहायैश्च सह ग्रामाद् ग्रामं पर्यटन् देशान्तरदर्शनकुतूहलाकृष्टचित्तः बहोः कालात् पुनर्ब्राह्मणाधिवासं प्रीतिकूटं प्रत्याजगाम। तत्समये तस्य बुद्धिविकाशः सांसारिकानुभवश्च सम्यक्तया सञ्जात आसीत्। अस्य हि चन्द्रसेनमातृषेणौ पारशवौ भ्रातरावास्ताम्।

अथैकस्मिन् व्यतीते निदाघदिवसे मध्यमह्नो दिनाधिपे कृताहारोपविष्टस्य भट्टबाणस्य पारशवो भ्राता चन्द्रसेनः श्रीहर्षभ्रात्राकृष्णराजेन प्रेषितं मेखलकनामानं पत्रवाहकं प्रावेशयत्। तदग्रे चेदं लिखितमासीत् "केनापि पिशुनेन श्रीहर्षराजस्य चित्तं त्वद्विषये कलुषीकृतम्, किन्तु परिज्ञातभूतार्थेन कृष्णराजेन श्रीहर्षदेवस्तथानुनीतो यथा यौवनसुलभं विकारमुत्सृज्य भट्टबाणेन न किमप्यपराद्धं न वा किमपि लोकविरुद्धमाचरितम्" इत्यस्मिन् विषये महाराजः प्रत्ययमाधापितोऽतोऽयमेव समुचितः कालो भवतः सभां प्रवेष्टुमिति। ततस्त्वरितं बाणः प्रीतिकूटात् प्रस्थानं विधाय श्रीहर्षसविधे समुपागमत्। राज्ञा प्रथमन्त्ववहेलितः पुनर्जातविद्वत्तापरिचयेन निरतिशयं दानमानेन सन्तोषितः। अनन्तरं स्वभवनमागत्य जनैः हर्षचरितं पृष्टो हर्षचरितं रचयामास। एतन्निर्मिताः चण्डीशतकम्, पार्वतीपरिणयः, मुकुटताडितकः, इत्येते ग्रन्थाः सन्तीति श्रूयते, परमिदानीं केवलं चण्डीशतकमेवोपलभ्यते। नितरां प्रसिद्धितमावुपरितनौ द्वावेव।

अयं हि महाकविः कादम्बरीकथामुद्दिश्य किमपि काव्यं निर्मितवानिति क्षेमेन्द्रविरचितौचित्यवि-

---

* महाकवेः वंशवृक्षः



चारचर्यातोऽवगम्यते । यथा "यथा वा भट्टबाणस्य—

'हारो जलार्द्रवसनं नलिनीदलानि प्रालेयशीकरमुचस्तुहिनांशुभासः ।
यस्येन्धनानि सरसानि च चन्दनानि निर्वाणमेष्यति कथं स मनोभवाग्निः ॥'

अत्र विप्रलम्भभरभग्नधैर्यायाः कादम्बर्या विरहव्यथावर्णना ।"

## महाकवेः कालनिर्णयः

तत्र भवान् **बाणभट्टो** मातङ्गदिवाकरो मयूरश्चेति त्रय श्रीहर्षसभायां प्रथिततमाः कवयो बभूवुरिति बहुभिस्तदुत्तरवर्त्तिभिः विद्वत्कुलकमलदिवाकरैर्निर्णीतम् । तथा च सुभाषितावलीस्थे शार्ङ्गधरपद्धतिस्थे च राजशेखरीये—

**अहो प्रभावो वाग्देव्याः यन्मातङ्गदिवाकरः । श्रीहर्षस्याभवत्सभ्यः समो बाणमयूरयोः ॥**

नवसाहसाङ्कचरिते द्वितीयसर्गे च-

**सचित्रवर्णविच्छित्तिहारिणोरवनीपतिः । श्रीहर्ष इव सङ्घट्टं चक्रे बाणमयूरयोः ॥ इति ।**

श्रीहर्षदेवकालनिर्णये तु चीनदेशीययात्रिकस्य **'ह्वेनसांग'** इत्यभिधेयस्य प्रवासवृत्तमेव बलवत्प्रमाणम् । स हि ६२९ तमं खिष्ट्रीयवत्सरमारभ्य ६४५ तमं यावत् भारतस्य परिभ्रमणं कृतवान् । स्वकीयलेखे हि स स्फुटमिदं लिखितवान् यत्—'उत्तरभारते तस्मिन्समये श्रीहर्ष एवैकमात्रोऽधिपतिर्बभूव, नासीदन्यः कश्चित् प्रशासकः' इति ।

तथा च श्रीहर्षदेवः खिस्ताब्दगणनया षडधिके षट्शते (६०६) वर्षे स्थानेश्वरे सिंहासनमारूढः, अष्टचत्वारिंशदधिकषट्शतपर्यन्तं च (६४८) राज्यमकरोत् ।

संस्कृतसाहित्ये श्रीहर्षनाम्ना पञ्चजनाः समुपलभ्यन्ते समालोचनकुशलानां समक्षे । तत्र **प्रथमः** श्रीहर्षो हि मैथिलकुलकमलदिवाकरस्य काव्यप्रदीपकर्त्तुर्गोविन्दठक्कुरस्यानुजः समासीत् । **द्वितीयः** श्रीहीरसूनुरनुपमनैषधमहाकाव्यनिर्माता । **तृतीयः** कश्मीरमण्डलभूपतिरासीत् यस्य पट्टराज्या अनुनयाय सोमदेवेन कथासरित्सागरो निबद्धः । **चतुर्थो** धारानगर्यधिपस्य सकलगुणिजनकल्पद्रुमस्य भोजस्य पितामहो मुञ्जमहीपतेः पिता चासीत् । **पञ्चमश्च** स्थाण्वीश्वरस्यासीन्महीपतिः यस्य हि चरितं हर्षचरितनाम्ना महाकविना बाणभट्टेन गद्यकाव्यं व्यरचि ।

एवञ्चास्य प्रणेता महाकविर्बाणः खिष्टीयषष्ठ्याः शतब्द्याश्चरमे तत्सप्तमशताब्द्याः पूर्वार्द्धे समभवदित्यवधार्यते ।

इतोऽपि हेतोरयमेवास्य समय इत्यवगम्यते यद् बाणभट्टेन स्वयमेव पूर्वकालवर्त्तिनां कवीनामालङ्कारिकाणाञ्च स्वीये **हर्षचरित**प्रस्तावे—'व्यासः, वासवदत्ता, भट्टारहरिचन्द्रः, सातवाहनः, सेतुकृत्प्रवरसेनः, भासः, कालिदासः, बृहत्कथा, आढ्यराजश्च' इत्येतेषां नामान्युल्लिखितानि ।

अथैतदुत्तरकालवर्त्तिनो ये महाकवयः स्वकीयग्रन्थे महाकविनामग्रहणं कृतवन्तस्तथा तदीयग्रन्थस्योदाहरणं दत्तवन्तस्तेषां तेषां प्रातिस्विकरूपेण नामानि निर्दिश्यन्ते—

अष्टमशताब्द्यां समुत्पन्नो **वामनो** हि काव्यालङ्कारसूत्रवृत्तौ—"अनुकरोति भगवतो नारायणस्य' इत्यत्रापि—"मन्ये, स्मशब्दः कविना प्रयुक्तो लेखकैस्तु प्रमादान्न लिखितः" इति लिखति ।

नवमशताब्द्या उत्तरार्द्धे काश्मीरिकावन्तिवर्मणः सभायां विद्यमान **आनन्दवर्धना**चार्यः स्वकीये ध्वन्यालोके कादम्बर्याः हर्षचरितस्य च बहुशो नामग्रहणं कृतवान् ।

तदनन्तरं कादम्बरीसारकर्त्तुः **आनन्दस्य** क्षेमेन्द्रेण स्वकीये सुवृत्ततिलकाख्ये ग्रन्थे—

**'अनुष्टुप्सततासक्ता साभिनन्दस्य नन्दिनी । विद्याधरस्य वदने कुलिकेव प्रभावभूः' ॥**

इति नामोल्लेखः कृतः ।

एकादशशताब्द्याः प्रथमार्धे राज्यं प्रशासतो **भोजराजस्य** कृतौ सरस्वतीकण्ठाभरणे—'यादृग्गद्यविधौ बाणः पद्यबन्धे न तादृशः' इति दृश्यते।

भोजपितृव्यमुञ्जराजसभापण्डितो **धनञ्जयो** स्वीये दशरूपके—"यथा हि महाश्वेतावर्णनावसरे भट्टबाणस्य" "यथा कादम्बर्यां वैशम्पायनस्य" इति भट्टबाणं कादम्बरीं च स्मरति। एकोनसप्तत्यधिकसहस्रपरिमिते खिस्ताब्दे **नमिसाधुर्हि** रुद्रटीयकाव्यालङ्कारस्य व्याख्यायां कथाख्यायिकयोर्भेदप्रदर्शनार्थं कादम्बरीहर्षचरितयोर्नामग्रहणं निर्दिशति।

एकादशशताब्द्या उत्तरार्द्धस्थः काश्मीरिक**क्षेमेन्द्रो** हि स्वीयौचित्यविचारचर्चायां कादम्बरीस्थां 'स्तनयुगमश्रुस्नातम्' इत्यार्या श्लोकं तथा तत्स्थ एव 'जयत्युपेन्द्रः स चकार दूरतः' इति श्लोकंचोदाहृतवान्।

द्वादशशताब्द्याः प्रथमार्धस्थेन **रुय्यकेन** हर्षचरितोपरि वार्तिकं रचितम्। तथा स्वीयालङ्कारसर्वस्वे 'यस्तपोवनमिति मुनिभिः' इत्यादि हर्षचरितीयं गद्यमुदाहृतम्।

यथा चास्य श्रेष्ठतमत्वं सर्वैरप्युत्तरकालीनैः कविभिरङ्गीकृतं तथोदाहरामः।

तत्र राजशेखरः—

सहर्षचरितारब्धाद्भुतकादम्बरीकथा। बाणस्य वाण्यनार्येव स्वच्छन्दा भ्रमति क्षितौ॥

नलचम्पूकारः—

शश्वद्बाणद्वितीयेन नमदाकारधारिणा। धनुषेव गुणाढ्येन निःशेषो रञ्जितो जनः॥

कीर्त्तिकौमुदीकारः—

युक्तं कादम्बरीं श्रुत्वा कवयो मौनमाश्रिताः। बाणध्वनावनध्यायो भवतीति स्मृतिर्यतः॥

आर्यासप्तशतीकारः—

जाता शिखण्डिनी प्राग्यथा शिखण्डी तथावगच्छामि। प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति॥

तिलकमञ्जरीकारः—

केवलोऽपि स्फुरन् बाणः करोति विमदान् कवीन्। किं पुनः कृतसन्धानपुलिन्ध्रकृतसन्निधिः॥

राघवपाण्डवीयकारः—

सुबन्धुर्बाणभट्टश्च कविराज इति त्रयः। वक्रोक्तिमार्गनिपुणा चतुर्थो विद्यते न वा॥

श्रीचन्द्रदेवः—

श्लेषे केचन शब्दगुम्फविषये केचिद्रसे चापरेऽलङ्कारे कतिचित्सदर्थविषये चान्ये कथावर्णने।
आः सर्वत्र गभीरधीरकवितविन्ध्याटवीचातुरी सञ्चारी कविकुम्भिकुम्भभिदुरो बाणस्तु पञ्चाननः॥

त्रिलोचनः—

हृदि लग्नेन बाणेन यन्मन्दोऽपि पदक्रमः। भवेत्कविकुरङ्गाणां चापलं तत्र कारणम्॥

श्रीकण्ठः—

'मेण्ठे स्वर्द्विरदाधिरोहिणि वशं याते सुबन्धौ विधेः
शान्ते हन्त च भारवौ विघटिते बाणे विषादस्पृशः।'

एवञ्च यः समयो महाकवेः पूर्वमुक्तस्तत्स्वीकारे न काचन विप्रतिपत्तिरिति सुधय एव प्रमाणम्।

अस्य च ग्रन्थरत्नस्य प्राचीना अर्वाचीनाश्च बह्वष्टीकाः साम्प्रतं विलसन्ति। तासु म० म० **हरिदास**सिद्धान्तवागीशविनिर्मिता सर्वतोऽभिनवा छात्रहितैषिणी विद्वन्मनोहारिणी च विवृतिः स्वल्पेनैव समयेन परां कीर्त्तिराशिं प्रतिदिशं विस्तारयामास। मयापि ताभ्य एव सारमाहृत्य प्रकृतग्रन्थोपयोगिबहुविषयान् समालोच्य 'चन्द्रकला'नामिकया टीकया ग्रन्थोऽयं संपादितः। मोहमयीस्थराजकीयसंस्कृतग्रन्थमालायां '**पीटर्सन**'महाशयेन तथा पूनास्थ '**काणे**'महाशयेन च संस्कृतस्यास्य ग्रन्थस्य यावन्तः परिच्छेदा-

स्तान् यथामति निरीक्ष्य समुचितो ग्रन्थांशः पाठभेदश्च संस्थापितः। विरामचिह्नादिसंयोजनं यावच्छक्यं विहितम्, तथा सामासिकशब्दानां पङ्क्त्यन्ते विश्लेषपद्धतिश्च यथा वाचनसौकर्यमर्थावबोधसौलभ्यञ्च भजेत तथा विहिता। विषयस्य शब्दस्य चातिकाठिन्यमनुभूय 'विद्योतिनी'नामिकया हिन्दीभाषयाऽप्युनूदितः। कस्याप्यनुवादस्य भागत्रयं भवितुमर्हति। यथा—उपाख्यानानुवादः, भावानुवादस्तथा भाषानुवादश्चेति। तत्रोपाख्यानानुवादे ह्यनुवादकः स्वातन्त्र्येण प्रचलतीति सर्वापेक्षया सुगमः सः, किन्तु तेन प्रत्यक्षरं मूल-ग्रन्थावबोधः सम्यक्तया न भवतीति तस्मान्नोपकारस्तादृशो यादृशोऽभिलषितः। एतदपेक्षया मौलिक-भावमादाय प्रवृत्तो भावानुवादो मूलार्थबोधने किञ्चित्सौलभ्यं सम्पादयति। भाषानुवादो हि मूलभावस्य तथा भाषायाश्च द्वयोरपि साधु स्फोरकोऽनुवादकस्य महत्काठिन्यं जनयति। एवंस्थितेऽपि मया भाषानु-वाद एव कृतो गरीयान् प्रयत्नः। यत्र च कोऽप्युपायो न लक्षितस्तत्र भावानुवाद एव कृतः। बहुषु स्थलेषु यत्र तत्र संस्कृतटीकया साधुस्फोरणे कृतेऽपि भाषानुवादे चोपायान्तराभावाद्भावानुवाद एव गृहीतः। एतेनानुवादेन कियत्साफल्यं सञ्जातमिति प्रेक्षकाणां पुरतोऽतिरोहितमेव।

अत्र ग्रन्थे मूलपाठसंशोधनादिकार्येऽस्मत्प्रियसुहृद्वरैः काशीस्थ **'श्रीचिदानन्द संस्कृत विद्यालय'** प्रधानाध्यापकैः न्यायाचार्य-वेदान्तशास्त्रि-काव्यतीर्थ-**श्रीसुरेन्द्रनाथशास्त्रि**महोदयैः महानुपकारः सञ्जा-तस्तदर्थं धन्यवादार्हास्तेः स महानुभावाः।

ग्रन्थस्यास्य प्रूफसम्पादनादिसाहाय्ये **'मिथिलाग्रन्थमाला'** सम्पादकैरहर्निशमस्मच्छुभचिन्तकैः सोदरकल्पैः व्याकरणाचार्य**श्रीरामचन्द्रझाजी**महोदयैस्तथा व्याकरण-साहित्याचार्य-पण्डित-**श्रीहरगो-विन्द**शास्त्रिप्रभृतिभिश्च महानुपकारः सञ्जातस्तदर्थं तेऽपि धन्यवादार्हाः। सर्वथा दुस्थितिसंकुलेऽपि काले कृतपरिश्रमैः गोलोकवासि-बाबू हरिदासगुप्तात्मज-**श्रीजयकृष्णदास-महोदयैः** चौखम्बा संस्कृत-ग्रन्थमालाध्यक्षैः ग्रन्थमेनं प्रकाशयित्वा संस्कृतसमाजस्य महानुपकारः कृतोऽतस्ते सर्वथा धन्यवादार्हाः।

यद्यपि 'आत्मनः प्रियतया तनुभाजां नात्मनः कृतिषु दूषणदृष्टिः' इति न्यायान्मत्सदृशसरागाणां स्वविरचितसंदर्भे दोषदृष्टिर्नैव जायते, तथापि स्वप्रेमपूर्णनयनावलोकनमात्रेण कस्यचित्सगुणत्वं न सम्भ-वितुमर्हतीत्येतत्प्रबन्धासमीचीनत्वासमीचीनत्वविचारणायां निष्पक्षन्यायभाजः सहृदया विद्वद्वरा एव प्रमाणम्। अपि च—

'मर्त्यैरसर्वविदुरैर्विहिते क नाम ग्रन्थेऽस्ति दोषविरहः सुचिरन्तनेऽपि।'

इति न्यायात् प्रमादस्य स्वाभाविकत्वात् शीशकाक्षरदोषाद्वा यदत्र स्खलनं सञ्जातं तत् क्षमासारा विपश्चिद्वरा दयोदयमधुरदृशा निरीक्षमाणाः ससूचनं क्षमिष्यन्ते मामिति सप्रश्रयं निवेदयति—

"तद्विद्वांसोऽनुगृह्णन्तु चित्तश्रोत्रैः प्रसादिभिः। सन्तः प्रणयवाक्यानि गृह्णन्ति ह्यनसूयवः॥
न चात्रातीव कर्त्तव्यं दोषदृष्टिपरं मनः। दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते॥
निर्दोषत्वैकवाक्यत्वं क वा लोकस्य दृश्यते। सापवादा यतः केचिन्मोक्षस्वर्गावपि क्वचित्॥"

इत्यादिसूक्तयो ह्यत्र स्मरणीयाः सुधीवरैः। व्याख्यामेनां समादाय विषमामपि चेतसि॥

आश्विनकृष्ण ५
वि० सं० २००७

भावत्कः—
—श्री कृष्णमोहन शास्त्री

॥ श्रीः ॥

# कादम्बरी

## चन्द्रकला–विद्योतिनी–टीकाद्वयोपेता

### मङ्गलाचरणम् ।

रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे ।
अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः ॥१॥

---

ध्यायेत्सत्यं परमगहनं शुद्धमद्वैततत्त्वं मायातीतं सुरवरनुतं सर्वलोके विभान्तम् ।
स्थूलं मूलं सकलमहसां सच्चिदानन्दरूपं सृष्ट्यारम्भे गुणगणयुतं तत्त्वबोधैकगम्यम् ॥
या चैतन्यस्वरूपिणी भगवती नारायणी मायया विश्वं कृत्स्नमिमं विधाय समये तत्पालयन्ती तथा ।
लोकांश्चैव तयैव नूनमखिलान् संहारयन्ती शिवा सा मन्मातृस्वरूपिणी सुजयदा पायादपायात्सदा ॥
भूताधिपाय सकलार्थसुसिद्धिदाय संरक्षकाय मुनिभिश्च सुपूजिताय ।
संसेविताय विबुधैश्च नमोऽस्तु तस्मै प्रत्यूहव्यूहशमनाय गजाननाय ॥
सरस्वतीं तां भुवने विभास्वतीं वीणां समादाय च वादयन्तीम् ।
भासा समन्तात्खलु द्योतयन्तीं नमामि नित्यं प्रणतार्थदात्रीम् ॥
श्रीलोकनाथशर्माणं तातं दैवज्ञभूषणम् । यशसा द्योतितं शश्वत् प्रणमामि महाशयम् ॥
साहित्यतत्त्ववेत्तारं विद्वत्कुलविभूषणम् । भट्टाचार्यं सद्गुरुं तं 'ताराचरण' संज्ञकम् ॥
ग्रन्थग्रन्थिविभेदाय व्याख्याने सुलभाय च । सत्तत्त्वाधिगमायापि नमामि ब्रह्मरूपिणम् ॥
कादम्बर्याश्च व्याख्यानं हृद्यं 'चन्द्रकला'न्वितम् । 'कृष्णमोहन' शर्माहं यथामति करोमि तत् ॥
गुणगुम्फितबह्व्यस्तु टीकाः सन्ति मनोरमाः । ग्रन्थस्यास्य न सन्देहस्तथाप्यभ्यर्थनामम ॥
कदाचित्किं न लोकैस्तु कद्वरास्वाद्यते मुदा । व्याख्यानं च तथैवैनं जिघृक्षिष्यन्ति किन्न हि ? ॥

अथ तत्रभवान् ग्रन्थकारः निर्विघ्नपूर्वकं प्रारिप्सितपरिसमाप्तिकामः 'समाप्तिकामो मङ्गलमाचरेत्' इति शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकं जगत्कारणसगुणब्रह्मनमस्कारात्मकं मङ्गलं शिष्यशिक्षार्थं ग्रन्थादौ निबध्नाति—रजोजुष इति । प्रजापदमत्र 'प्रजायन्त' इति व्युत्पत्त्या अनित्यपदार्थमात्रोपलक्षकम् । एवञ्च प्रजानां संसाराणां जन्मनि प्रादुर्भावसमये रजोजुषे रजोगुणावलम्बिने हिरण्यगर्भाय विरञ्चिरूपिणे, स्थितौ प्रजानां परिपालनकाले सत्त्ववृत्तये सत्त्वगुणयुक्ताय विष्णुरूपिणे, तथा प्रलये प्रजानां संहारसमये तमःस्पृशे तमोगुणयुक्ताय रुद्ररूपिणे, सर्गः सृष्टिः, स्थितिः पालनं, नाशः संहारः तेषां हेतवे निमित्तकारणाय, त्रयी ऋग्यजुःसामरूपाणां वेदानां त्रयी तत्स्वरूपाय, यथा मृद उत्पन्नेऽपि घटे मृन्मय इति व्यवहारस्तथा त्रयाणां ब्रह्मण उत्पादकत्वेऽपि त्रयीमयत्वव्यवहार इति केचित् । त्रिगुणात्मने त्रिगुणं माया आत्मनि स्वस्मिन् यस्य तस्मै मायावते, अजाय जन्मादिषड्विकाररहिताय नित्याय कूटस्थाय परब्रह्मण इत्यर्थः नमः नमस्कारः अस्त्विति शेषः ।

---

जो संसारके उत्पत्तिके समय रजोगुण वाले ब्रह्मा, तथा परिपालनके समय सत्त्वगुण वाले विष्णु और इन दोनोंके विनाशके समय तमोगुण वाले रुद्र, सृष्टि स्थिति प्रलयके कारण स्वयं जन्मरहित वेदमय मायाशाली उस परब्रह्मको ( निर्विघ्नपूर्वकग्रन्थ समाप्तिके लिये ) मैं ( बाणभट्ट ) प्रणाम करता हूँ ॥ १ ॥

जयन्ति बाणासुरमौलिलालिता दशास्यचूडामणिचक्रचुम्बिनः ।
सुरासुराधीशशिखान्तशायिनो भवच्छिदस्त्र्यम्बकपादपांसवः ॥ २ ॥

---

यथैकस्मिन् स्फटिके नीलपीतादिगुणयोगान्नीलः पीत इति व्यपदेशस्तथैकस्मिन्नपि परब्रह्मणि सृष्टिसमये रजोगुणयोगात्प्रजापतिरिति स्थितिसमये सत्त्वयोगाद्विष्णुरिति विनाशसमये तमोगुणयोगाद् रुद्र इति व्यपदेशः। ननु परब्रह्म तु निर्गुणं तदा तस्य त्रिगुणात्मकत्वं यदुक्तं तत्कथमिति चेत्? सत्यम्,—

"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाम्।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥" इति श्रुत्या,
मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्। अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥

इति स्मृत्या च मायायुक्तसमये तस्य त्रिगुणात्मकत्वाऽभ्युपगमात्। ब्रह्मणः सृष्ट्यादिनिमित्तत्वे बीजन्तु—'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म इति श्रुतिः,

'ब्रह्मत्वे सृजते लोकान् विष्णुत्वे पालयत्यपि।
रुद्रत्वे संहरत्येव तिस्रोऽवस्थाः स्वयम्भुवः ॥" इति स्मृतिश्च।

तथा श्रीमद्भागवतेऽपि—

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट् तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो महान् धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥"

इति स्कन्धारम्भ एव निरूपितम्। अमीषां गुणानां लक्षणन्तु सांख्यकारिकायाम्—

"सत्त्वं लघुप्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः। गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः" ॥

'चत्वारि शृङ्गास्त्रयोऽस्य पादाः द्वे शीर्षे सप्तहस्तासोऽस्य त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्याम् आविवेश', इति श्रुत्या 'वेद एव परं ब्रह्म' इति स्मृत्या च त्रयीमयत्वं ब्रह्मणो वेदितव्यम्।

अत्र प्राचा तु केवलमनेन प्रजापतिनमस्कार एव योजयित्वा व्याख्यातम्, तत्तु 'विधेः सृष्टिमात्रकर्तृत्वेन केवलं रजोगुणस्यैव सम्बन्धात्त्रिगुणात्मकत्वमतिविरुद्धम्' इति भानुचन्द्रेणैव समाहितम्। युक्तञ्चैतत्, अन्यथा पौराणिकानां 'गुणभेदेनैव मूर्त्तिभेद' इति सिद्धान्तो व्याकुप्येत।

अत्र रजोजुषे सर्गहेतवे, सत्त्ववृत्तये स्थितिहेतवे, तमःस्पृशे नाशहेतवे, इति यथासङ्ख्येन सम्बन्धसम्भवात् यथासङ्ख्यमलङ्कारः। तदुक्तं दर्पणे—'यथासङ्ख्यमनूद्देश उद्दिष्टानां क्रमेण यत्'।

इतः प्रभृतिषु निखिलपद्येषु वंशस्थं छन्दस्तल्लक्षणन्तु—'जतौ तु वंशस्थमुदीरितं जरौ' ॥ १ ॥

'ज्ञानमिच्छेत्तु शङ्करात्' इति स्मृत्या चिकीर्षितकाव्यविधानोपयोगिज्ञानप्राप्तये पादरज उत्कर्षप्रतिपादनमुखेन महेश्वरस्मरणमाचरति—जयन्तीत्यादिना। बाणासुरस्य बाणाख्यपरमशिवभक्तस्य दैत्यस्य मौलिना मुकुटेन मूर्ध्ना वा लालिताः प्रणामकाले आदरेण स्वीकृताः, दशास्यो रावणस्तस्य चूडामणयः किरीटरत्नानि तेषां चक्रं समूहं चुम्बन्ति नमस्कारकाले स्पृशन्ति ये ते तथोक्ताः, सुष्ठु परब्रह्मणि रमन्ते ये ते सुरा देवाः तद्भिन्ना असुरा दैत्याः तेषामधीशाः स्वामिनः तेषां शिखाः चूडास्तासाम् अन्तेषु अग्रभागेषु शयितुं नमनकाले स्थातुं शीलं येषां ते तथोक्ताः, तथा भवच्छिदः संसारनिवर्त्तकाः, मोक्षोपयोगितत्त्वज्ञानोत्पादनद्वारा भवदुःखविच्छेदिन इत्यर्थः, त्रीणि अम्बकानि नयनानि यस्य तस्य तथोक्तस्य शिवस्य 'अम्बकं नयनं दृष्टिः' इति हलायुधः, त्रयाणां लोकानामम्बकस्य पितुरिति वा, यद्वा त्रीन् वेदान् अम्बते शब्दायते 'अबिशब्दे' इत्यस्मात् कर्मण्यणि 'संज्ञायाम्' ५।३।८७ इत्यनेन के कनि वा तस्येति विग्रहो विधेयः, पादपांशवः चरणरेणवः जयन्ति सर्वोत्कर्षेण वर्त्तन्त इत्यर्थः। 'जि जये' अस्माल्लटि रूपम्। अत्र जय उत्कर्षप्राप्तिः, एवञ्चोत्कर्षप्रतिपादनेन नमस्कारो व्यञ्जनयाऽवगम्यते, तथाहि—उत्कर्षो हि विशेषानुपादानात्सर्वप्रतियोगिको लभ्यत इति त्र्यम्बके सर्वोत्कृष्टत्वज्ञाने तुल्यवित्तिवेद्यत्वन्यायेन प्रकारान्तरेण वा त्र्यम्बकापेक्षया सर्वस्यापकृष्टत्वज्ञाने सर्वान्तःपाति स्वस्मिन्नप्याराध्यापेक्षयापकृष्टत्वज्ञानं भवति, तथा च 'अपकृष्टत्वज्ञानबोधानुकूलो व्यापारः स्वरादिपठितनमः शब्दार्थः, इति मञ्जूषोक्तिदिशा नमस्कारमत्र स्फुटमेव प्रतीयत इति।

---

जो दैत्यराज बाणद्वारा श्रद्धापूर्वक मस्तकसे परिगृहीत, राक्षसराज रावणके मुकुटको स्पर्श करनेवाली, देवाधिपति और असुराधिपति गणके केशसमूहवर्त्तिनी एवं संसाररूपी बन्धनको मिटानेवाली शङ्करकी चरणधूलियां सबको अतिक्रमण कर विद्यमान है (ऐसे भगवान्को मैं प्रणाम करता हूँ) ॥ २ ॥

जयत्युपेन्द्रः स चकार दूरतो बिभित्सया यः क्षणलब्ध-लक्ष्यया।
दृशैव कोपारुणया रिपोरुरः स्वयं भयाद्भिन्नमिवास्रपाटलम् ॥ ३ ॥
नमामि भर्तुश्चरणाम्बुजद्वयं सशेखरैर्मौखरिभिः कृतार्चनम्।
समस्तसामन्तकिरीटवेदिका-विटङ्कपीठोल्लुठितारुणाङ्गुलि ॥ ४ ॥

---

अत्र उत्कर्षकथनकार्यं प्रति बाणासुरमौलिलालनादिहेतुचतुष्टयप्रदर्शनेन समुच्चयालङ्कारः। तदुक्तं दर्पणे—"समुच्चयोऽयमेकस्मिन् सति कार्यस्य साधके।
खले कपोतकन्यायात् तत्करः स्यात्परोऽपि चेत्।
गुणौ क्रिये वा युगपत् स्यातां यद्वा गुणक्रिये ॥"

तथा अनेकलकार-चकार-शकारादिव्यञ्जनवर्णानां स्वरूपतः क्रमतश्च साम्यात् वृत्त्यनुप्रासश्च तदुक्तं दर्पणे—'अनेकस्यैकधा साम्यमसकृद्वाऽप्यनेकधा। एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते ॥' एवञ्चा-नयोर्मिथोऽनपेक्षत्वात्संसृष्टिरलङ्कारः ॥ २ ॥

इष्टदेवताध्यानेन सकलकामनासिद्धिर्भवतीति नरसिंहरूपं विष्णुं ध्यायति—जयतीत्यादिना। स वि-ख्यातः अनुजत्वेन इन्द्रमुपगत इत्युपेन्द्रः। 'कुगतिप्रादयश्च' इत्यनेन समासः, नृसिंहरूपधारी विष्णुः जयति सर्वोत्कर्षेण वर्तते। यो नृसिंहो बिभित्सया भेत्तुमिच्छया दूरतः दूरात् क्षणं क्षणकालं लब्धं प्राप्तं लक्ष्यं तदेव वक्षःस्थलं यया तया क्षणं तदुरःस्थलमवलोकयन्त्या इत्यर्थः, अत एव कोपेन क्रोधेन अरुणया लोहि तरूपया दृशैव दृष्ट्यैव न तु नखद्वारा भेदनेनेत्येवकारार्थः, रिपोः वैरिणो हिरण्यकशिपोः उरो वक्षःस्थलं भयात् नृसिंहत्रासात् स्वयम् आत्मना भिन्नमिव विदीर्णमिव अस्रपाटलं स्वीयारुणलोचनरश्मिनिपातेन शोणितवत् श्वेतरक्तं चकार कृतवान् 'श्वेतरक्तस्तु पाटलः' इत्यमरः। अनेन ग्रन्थकारस्येष्टदेवो नृसिंह आसी-दित्यवगम्यते।

इह हिरण्यकशिपूरःस्थलस्य स्वीयश्यामगुणराहित्यात् श्वेतरक्तगुणोपादानेन तद्गुणालङ्कारः तदुक्तं दर्पणे—'तद्रूपाननुहारस्तु हेतौ सत्यप्यतद्गुणः' इति।

तथा अस्रपाटलमित्यत्र लुप्तोपमा। तथा भावाभिमानिनी क्रियोत्प्रेक्षा, सा च भयात् स्वयं भिन्नमिवे त्यनेन वाच्या, इत्येतेषामङ्गाङ्गिभावेन सङ्करालङ्कारः। यद्यप्यत्रापाततो यच्छब्दस्य पूर्वमनुपादानाद्वाक्यगत-विधेयाविमर्शदोषः प्रतीयते तथाप्यत्र तच्छब्दस्य प्रसिद्धपरामर्शित्वेन यच्छब्दस्य तूत्तरवाक्यगतत्वेन तच्छ-ब्दापेक्षाभावान्न दोष इति विभावनीयम् ॥ ३ ॥

अथ गुरुनमस्कारं विदधाति—नमामीत्यादिना। शेखरैः शिरःस्रग्भिः वा मुकुटैः सह वर्तमानाः इति सशेखराः तैः, मुखरस्य वेदाद्युच्चारणेन शब्दायमानस्य भावो मौखरं तदेषामस्तीति मौखरिणः 'अत इन् ठनौ' इतीन्प्रत्ययः तैः वेदादिध्वनिविधायिभिः छात्रैः। भानुचन्द्रस्तु क्षत्रियविशेषैरिति व्याख्यातवान्। कृतम् अनुष्ठितम् अर्चनं पूजनं यस्य तत्। समस्ताः सकला ये सामन्ता अधिकृता नृपतयः तेषां किरीटानि मुकुटान्येव वेदिकाः परिष्कृतभूमयः तासु यानि विटङ्कपीठानि कपोतपालिकाभूमयः मध्यगतोन्नतभागा इत्यर्थः, तेषु उल्लुठिता अभिवादनकाले संलग्नाः, अरुणाः मुकुटरत्नरश्मिसम्पर्कात् स्वभावाच्च लोहितवर्णा अङ्गुल्यः करशाखा यस्य तत्, भर्तुः भर्चुसंज्ञकगुरोः चरणाम्बुजद्वयं पादकमलयुगलं नमामि अभिवाद-यामि। एतेन प्रतिदिनाध्यापकत्वं चक्रवर्तिनृपामात्यत्वञ्च सूच्यते।

नन्वत्र 'कपोतपालिकायान्तु विटङ्कं पुन्नपुंसकम्' इत्यमरोक्तदिशा विटङ्कशब्दस्य कपोताधारभूतकाष्ठ वाचित्वेन किरीटमध्यगतोन्नतभागार्थे कथं प्रवृत्तिरिति चेत्? सत्यम्, तत्रार्थे अत्युन्नतत्वप्रतिपादनाय

---

जो हिरण्यकशिपुके कलेजेको टुकड़े करनेकी इच्छासे दूर होकर ही क्षणभर देखकर कोपसे रक्तवर्ण अपने आंखों द्वारा मानो भयसे ही अपनेसे टुकड़े हो जानेके समान शोणिततुल्य रक्तवर्णकी वह संसार प्रसिद्ध नरसिंह भगवान्‌की मूर्त्ति सबको अतिक्रमण करके विराजमान है ( उसे प्रणाम करता हूँ ) ॥ ३ ॥

जिनके शिरपर फूलोंकी मालाओंको चढ़ानेवाले तथा हर समय वेदध्वनि करनेवाले छात्रगण पूजा करते हैं, एवं सब छोटे २ अपने अधीन राजाओंके मुकुटरूपी परिष्कृतभूमिके उन्नतस्थान संस्पर्शमें जिनकी अंगुलियां रक्त-वर्ण होती हैं, उन 'भर्चु' नामक गुरुदेवके दोनों चरणकमलको नमस्कार करता हूँ ॥ ४ ॥

---

१ वक्षः। २ लक्ष्यया। ३ भर्त्सोः, भर्त्सोः।

## सज्जनदुर्जनयोः स्तुतिनिन्दे—

अकारणाविष्कृतवैरदारुणादसज्जनात् कस्य भयं न जायते ।
विषं महाहेरिव यस्य दुर्वचः सुदुःसहं सन्निहितं सदा मुखे ॥ ५ ॥
कटु क्वणन्तो मलदायकाः खलास्तुदन्त्यलं बन्धनशृङ्खला इव ।
मनस्तु साधुध्वनिभिः पदे पदे हरन्ति सन्तो मणिनूपुरा इव ॥ ६ ॥
सुभाषितं हारि विशत्यधो गलान्न दुर्जनस्यार्करिपोरिवामृतम् ।
तदेव धत्ते हृदयेन सज्जनो हरिर्महारत्नमिवातिनिर्मलम् ॥ ७ ॥

---

लक्षणया प्रयोगात्, अतो नात्र नेयार्थत्वदोषः । यद्यपि—

'आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयात् ज्येष्ठापत्यकलत्रयोः ॥'

इति स्मृत्या गुरोर्नामग्रहणनिषेधात् प्रकृते कथं तन्नामग्रहणमित्याक्षेपः समापतति तथाप्ययं निषेधो राशिनामोच्चार एवेति शास्त्रकारैरुक्तत्वेन तदभावात् । अत्र गुरोरेकवचनमेकस्मादेव सर्वविद्यालाभ इति द्योतनार्थमित्यवधेयम् । पद्येऽस्मिन् समन्तात् समानताद्योतनाय किरीटेषु वेदिकात्वारोप इति यथाकथञ्चित् निरङ्गं केवलरूपकमलङ्कारः । तदुक्तं दर्पणे—'निरङ्गं केवलस्यैव रूपणम्' इति ॥ ४ ॥

अथ सज्जनदुर्जनयोः स्तुतिनिन्दे प्रतिपादयति—अकारणेति । अकारणम् अनिमित्तमेव आविष्कृतम् उद्भावितं यद्वैरं निन्दादिना विरोधः तेन दारुणात् भीषणस्वभावात् असज्जनात् दुष्टपुरुषात् कस्य सज्जनस्य भयं त्रासो न जायते नोत्पद्यते अपि तु सर्वस्यैवोत्पद्यत इत्यर्थः । महाहेः महासर्पस्य विषं गरलमिव यस्य दुर्जनस्य मुखे वदने सुदुःसहम् अतीवोद्वेगजनकत्वेन सहनीयं दुर्वचः कटुवाक्यं सदा निरन्तरं सन्निहितं समीपस्थं विद्यमानं विद्यते । एवञ्च करिष्यमाणकाव्येऽस्मिन् कादाचित्कोऽपि दुर्जनो मह्यं द्रुह्येत तस्मान्मे भयं भवतीत्याशयः । इह पूर्वार्द्धे अर्थापत्तिः उत्तरार्द्धे चोपमालङ्कारः । तदुक्तं दर्पणे—
'दण्डापूपिकयाऽन्यार्थागमोऽर्थापत्तिरिष्यते ।' इति । 'साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमाद्वयोः ।' इति ।
एवञ्चानयोर्मिथोऽनपेक्षत्वात् संसृष्टिरलङ्कारः ॥ ५ ॥

कट्विति । कटु दुःश्रवत्वं यथा स्यात्तथा क्वणन्तः रटन्तः कुत्सितं शब्दायमानाश्च मलदायकाः मिथ्याकलङ्काविष्कारिणः स्वसंसक्तदेशे मलोत्पादकाश्च खला दुर्जनाः, बन्धनशृङ्खला इव मनुष्यादेर्बन्धनलोहनिगडा इव 'शृङ्खला पुंस्कटीवस्त्रबन्धे च निगडे त्रिषु' इति मेदिनी । अलम् अत्यर्थं तुदन्ति चित्तं बन्धनदेशञ्च पीडयन्ति 'तुद् व्यथने' अस्माल्लटि बहुवचनम् । एवं पूर्वार्द्धेन दुर्जनान् सन्निन्द्योत्तरार्द्धेन सज्जनान् स्तौति—मनस्त्विति । तु किन्तु सन्तः सज्जनाः मणिनूपुरा इव रत्नखचितमञ्जीराणीव पदे पदे शब्दे शब्दे सर्वत्रैवेत्यर्थः प्रतिपदक्षेपे च साधुध्वनिभिः सन्तोषदायिवचनैः मनोहारिशब्दैश्च मनश्चित्तं हरन्ति आकर्षन्ति । एवञ्च मम काव्यनिन्दया दुर्जनचित्तव्यथा सज्जनस्य तत्प्रशंसया चानन्दो भविष्यतीति सम्भावयामीति कवेराशयः । एतेन स्वकाव्योत्तमत्वं विज्ञापयति । इह पूर्वार्द्धे तथोत्तरार्द्धे च पूर्णोपमालङ्कारः, उभयोश्चापि परस्परनैरपेक्ष्यात् संसृष्टिरलङ्कारः ॥ ६ ॥

सुभाषितमिति । हारि मनोहरं सुभाषितं प्रशस्तसन्दर्भं सुकाव्यादि (कर्तृ) अर्करिपोः राहोः अमृतं पीयमानं पीयूषमिव दुर्जनस्य असज्जनस्य गलात् कण्ठात् अधो न विशति प्रवेशं न प्राप्नोति । यथा राहोः गलादधः स्थानाभावेन पीयमानस्याऽपि चन्द्रस्यामृतं न कचित्तिष्ठति तथा दुर्जनस्यापि हृदयशून्यत्वेन

---

किसी कारणके बिना जो अपनी शत्रुता प्रगट करे, तथा भयङ्कर सर्पके मुखस्थविषके समान अपने मुखमें हर समय अत्यन्त असह्य दुर्वचनोंको उपस्थित रक्खे ऐसे क्रूरस्वभाववाले दुर्जनसे किसे भय उत्पन्न नहीं होता है ? ( अर्थात् सभी ऐसे लोगोंसे अवश्य डरते रहते हैं ) ॥ ५ ॥

कडुवे वचन बोलनेवाले एवं दूसरेके छिद्रको ढूंढनेवाले दुर्जनलोग कटुशब्द करनेवाली और मलको देनेवाली बन्धनशृङ्खला ( साँकर ) के समान अत्यन्त कष्टको पहुँचाते हैं; परन्तु रत्नोंसे जड़ा हुआ नूपुर जिस प्रकार प्रत्येक पादक्षेपमें सुननेसे मधुरशब्दद्वारा हृदयको आकर्षण करता है उसी प्रकार सज्जनगण मधुरवचनोंसे हृदयको आकर्षित करते हैं ॥ ६ ॥

जिस प्रकार चन्द्रमाका अमृत राहुके कण्ठके नीचे प्रवेश नहीं करता है उसी प्रकार दुर्जनका मनोहरवचन कण्ठके नीचे प्रवेश नहीं करता है; परन्तु भगवान् विष्णु जिस प्रकार अत्यन्त स्वच्छ कौस्तुभमणि हृदयमें धारण

## कथाप्रशंसा—

स्फुरत्कलालापविलासकोमला करोति रागं हृदि कौतुकाधिकम्।
रसेन शय्यां स्वयमभ्युपागता कथा जनस्याभिनवा वधूरिव ॥ ८ ॥
हरन्ति कं नोज्ज्वलदीपकोपमैर्नवैः पदार्थैरुपपादिताः कथाः।
निरन्तरश्लेषघनाः सुजातयो महास्रजश्चम्पककुड्मलैरिव ॥ ९ ॥

---

परिश्रमेण पाठ्यमानमपि सुकाव्यादि बोधयोग्यो न भवतीति स्पष्टार्थः। किन्तु तद्वैपरीत्यं सज्जने दर्शयति—तदेवेति। सज्जनः गुणग्राहकः पुरुषः हरिः विष्णुः अतिनिर्मलम् अतिस्वच्छं महारत्नं कौस्तुभमणिमिव तदेव हारि सुभाषितं हृदयेन चेतसा धत्ते गृह्णाति, स हृदयगतत्वान्न कदाचिदपि विस्मरतीत्याशयः। एवञ्च ममाप्येतत्काव्यमज्ञायमानो दुर्जनस्त्यजेदपि किन्तु सज्जनस्त्वामूलं ज्ञायमानमवश्यमेव सत्क्रियेतेति ग्रन्थकर्त्तुराशयः। इहापि मिथो निरपेक्षतया पूर्ववदेवालङ्कारः ॥ ७ ॥

कथाकाव्ये जनमनः प्रवेशयितुं पूर्वं तत्प्रशंसामाचरति स्फुरदित्यादिना। स्फुरन्तः प्रकाशमानाः स्फुटं प्रतीयमाना ये कलालापा गीतवाद्यादिचतुःषष्टिविद्यासम्बन्धिवचनानि तेषां विलासेन विन्यासेन कोमला मृद्वी संग्रामवर्णनादिवदौद्धत्यरहितेत्यर्थः, पक्षे स्फुरन्तौ द्योतयन्तौ कलालापविलासौ मधुरवचन-व्यापारौ ताभ्यां कोमला हृदयाकर्षिणी, 'कोमलं मृदुसुन्दरे' इति विश्वः। तथा रसेन शृङ्गारादिना शय्यां शब्दगुम्फं स्वप्राकरणिकत्वेनाऽवान्तरप्रबन्धानां सम्बन्धमिति तात्पर्यम्। स्वयम् ।आत्मना अभ्युपागता सान्निध्यं प्राप्ता, पक्षे—रसेन आश्लेषप्रेम्णा स्वयम् आत्मनैव शय्यां तल्पं शयनीयमिति यावत्। 'शय्या तल्पं शब्दगुम्फे' इत्यनेकार्थः, अभ्युपागता प्राप्ता, अभिनवा नवीना कथा गद्यपद्यमयप्रबन्धः अभिनवा वधूरिव युवती भार्येव जनस्य पुंसः हृदि चेतसि कौतुकं कुतूहलम् अधिकं बहुलं रागं श्रवणस्य आश्लेषस्य च प्रीतिं करोति जनयति। एवञ्च मद्रचिताऽपीयं कादम्बरी कथा जनस्य श्रवणानुरागं करिष्यतीत्यभिप्रायः। इह साधारणधर्मादिसद्भावात्पूर्णोपमालङ्कारः।

यद्यप्यत्र 'रसस्योक्तिः स्वशब्देन' इत्यादिदर्पणोक्तदिशा रसशब्दस्य साक्षादुपादानेन 'तामुद्वीक्ष्य कुरङ्गाक्षीं रसो नः कोऽप्यजायत' इत्यादाविव दोषः प्रतीयते तथापि स्वरूपेणानुभूयमानस्यैव रसस्य तत्तच्छब्देन प्रतिपादने तद्दोषस्वीकारेणात्र तथात्वाभावात् ॥ ८ ॥

हरन्तीति। उज्ज्वलाः प्रकटाः दीपकालङ्कारविशेषा उपमालङ्कारविशेषाश्च येषु तैः तथोक्तैः, नवैः स्वमनीषयैव निर्मितत्वेनापूर्वैः पदार्थैः शब्दानामभिधेयैः, उपपादिता विनिर्मिताः निरन्तरेण अव्यवधानेन प्रतिपदेन वा प्रायेण सर्वत्रैव वर्त्तमानेन श्लेषेण तदाख्यालङ्कारेण घना बहुलतराः दुर्बोधा इत्यर्थः, सुष्ठु शोभना जातिः छन्दोविशेषो यासु ताः सुजातयः कथा गद्यपद्यादिप्रबन्धाः, उज्ज्वला दीपकाः प्रदीपा उपमाः सादृश्यानि येषां तैः, उज्ज्वलप्रदीपसदृशैरित्यर्थः; नवैर्नूतनैः अम्लानैरित्यर्थः, पदार्थैः उपादेय-पदार्थभूतैः चम्पककुड्मलैः हेमपुष्पकमुकुलैः उपपादिताः सम्पादिता ग्रथिता इत्यर्थः, निरन्तरम् अव्यवधानं यः श्लेषः संयोगस्तेन घनाः सान्द्राः, तथा सुष्ठु शोभना जातयः जातीपुष्पाणि यासु ताः तथोक्ताः, महास्रजो महामाला इव कं जनं न हरन्ति न वशीकुर्वन्ति अपि तु सर्वमेवेत्यर्थः। एवञ्च मामकीनाऽप्येषा कथा समस्तमेव लोकं वशीकुर्यादित्याशयः। इह पूर्णोपमा अर्थापत्तिश्च, अनयोरङ्गाङ्गिभावेनैकाश्रयानुप्रवेशरूपः सङ्करालङ्कारः ॥ ९ ॥

---

करते हैं, गुणग्राही साधुगण उसी प्रकार मनोहर वचनोंको हृदयमें धारण करते हैं ॥ ७ ॥

अनायासगम्य कलाविद्यासम्बन्धी वाक्यरचनाओं द्वारा सुननेमें रमणीय शृङ्गारादि किसी एक रसको अनुसरण कर अवान्तर कथाओंसे युक्त अच्छे इत्यर्थक कथावाक्य लोगोंके हृदयमें कौतुकवश अत्यधिकप्रेम उसी प्रकार उत्पन्न करता है कि जिस प्रकार मधुरालाप करने में अत्यन्तपटु हावभावमें अत्यन्तमनोहर एवं प्रेमवश अपनेसे ही पलङ्गपर उपस्थित हो युवती स्त्री प्रेमको उत्पन्न करती है ॥ ८ ॥

अनायास अर्थको देनेवाली दीपक तथा उपमालङ्कारयुक्त अपूर्व पदार्थोंके समावेशसे बनायी हुई एवं निरन्तर श्लेषालङ्कार होनेसे थोड़ी दुर्बोध्य मनोहर कथा, देदीप्यमान दीपक (प्रकाश) के समान अभिनव वस्तुके ग्रहण करनेमें योग्य चम्पाके फूलोंको कलियोंद्वारा गूँथी हुई चमेलीके फूलोंसे युक्त एवं आपसमें सघन मिली हुई महामालाके तुल्य किस व्यक्तिको आकर्षण नहीं करती है ? ॥ ९ ॥

## कविवंशवर्णनम्—

बभूव वात्स्यायनवंशसम्भवो द्विजो जगद्गीतगुणोऽग्रणीः सताम् ।
अनेकगुप्तार्चितपादपङ्कजः कुबेरनामांश इव स्वयम्भुवः ॥ १० ॥
उवास यस्य श्रुतिशान्तकल्मषे सदा पुरोडाशपवित्रिताधरे ।
सरस्वती सोमकषायितोदरे समस्तशास्त्रस्मृतिबन्धुरे मुखे ॥ ११ ॥
जगुर्गृहेऽभ्यस्तसमस्तवाङ्मयैः ससारिकैः पञ्जरवर्त्तिभिः शुकैः ।
निगृह्यमाणा वटवः पदे पदे यजूंषि सामानि च यस्य शङ्किताः ॥ १२ ॥

---

इत्थं कथां प्रशंसयित्वा कीर्त्यनुवृत्त्यर्थं स्वकुलजान्निर्दिशति—बभूवेत्यादिना । वत्सस्यापत्यं पुमान् वात्स्यः स अयनं कुलप्रवर्त्तकत्वेन आश्रयः यस्य स तथोक्तो यो वंशः कुलं तत्र सम्भवः समुत्पन्नः, वत्सवंशीय इत्यर्थः । जगति संसारे गीता जनैः गानविषयीकृताः गुणाः दयादाक्षिण्यादयो यस्य सः तथोक्तः, सतां सज्जनानाम् अग्रणीः अग्रेसरः तन्मध्ये उत्तम इत्यर्थः । अनेकैः अधिकैः गुप्तैः गुप्तनामाङ्कितैः वैश्यैः, तदुक्तम्—'शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु । गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥'

अर्चिते पूजिते पादपङ्कजे चरणकमलयुगले यस्य सः । तथा स्वयंभुवः प्रजापतेः अंश अंशावतार इव अतिवैदिकत्वादित्याशयः, कुबेरनामा कुबेराभिधेयः द्विजो विप्रो बभूव आसीत् 'दन्ता विप्राण्डजा द्विजाः' इत्यमरः, अत्रोत्कृष्टद्विजत्वद्योतनाय द्विजपदोपादानम्, हस्तिमात्रस्य दन्तवत्त्वेऽपि उत्कृष्टदन्ते दन्तीति पदस्य यथा प्रयोगस्तद्वदिव ।

इह भावाभिमानिनी द्रव्योत्प्रेक्षा, सा च स्वयम्भुवोंऽश इव इत्यनेन वाच्या ॥ १० ॥

उवासेति । श्रुतिभिः वेदैः तदध्ययनैरित्यर्थः 'श्रुतिस्तु वेद आम्नायः' इत्यमरः, शान्तं विलीनं कल्मषं पापं यस्य तस्मिन्, नित्यवेदाध्ययनेन वाचनिकपापरहित इत्यर्थः । पुरोडाशेन अग्निहोत्रादौ देवेभ्यो हुतहविरवशिष्टेन हविषा 'पुरोडाशो हविर्भेदे हुतशेषे च कीर्त्तितः' इति विश्वः, पवित्रितौ भक्षणसमये संबन्धेन पावनीकृतौ अधरौ ओष्ठौ यस्य तस्मिंस्तथोक्ते । सोमेन सोमयागे सोमनामकलतारसपानेन कषायितं किञ्चित्कटुकीभूतम् उदरम् अभ्यन्तरं यस्य तस्मिन् तथोक्ते । तथा समस्तानि सकलानि यानि शास्त्राणि व्यासादिरचितब्रह्मसूत्रादीनि स्मृतयश्च मन्वादिरचितनिबन्धाः तैः तदध्ययनैः बन्धुरं मनोहरं तस्मिंस्तथोक्ते । यस्य कुबेरद्विजस्य मुखे वदने सरस्वती वाग्देवी सदा सर्वस्मिन् काले उवास वासं करोतिस्म । अनेनास्य महात्मनः प्रत्यहं वेदाध्ययनत्वं नित्याग्निहोत्रादिकर्मानुष्ठापकत्वं समग्रशास्त्रज्ञातृत्वञ्च स्पष्टीकृतम् ॥ ११ ॥

जगुरिति । यस्य कुबेरद्विजस्य गृहे भवने बटवः छात्रभूता ब्रह्मचारिणो ब्राह्मणशिशवः, अभ्यस्तं बहुधा श्रवणाज्जिह्वाग्रवर्त्ति समस्तं सम्पूर्णं वाङ्मयं चतुर्दशविद्यात्मकं शास्त्रं यैस्तैः तथोक्तैः, पञ्जरवर्त्तिभिः लोहशलाकानिर्मितपक्षिगृहे विद्यमानैः, सारिकाभिः सहेति ससारिकैः शुकैः कीरपक्षिभिः पदे पदे प्रतिपदाभ्यासे निगृह्यमाणाः 'भवद्भिरशुद्धमभ्यस्यते अत्रैवं भवितव्यम्' इत्थं निर्भर्त्स्यमानाः, अत एव शङ्किताः यद्यशुद्धं स्यात्तदा पुनरपि मम दोषप्राकट्यं नूनं शुकाः करिष्यन्तीति भययुताः सन्तः, यजूंषि यजुर्वेदान् सामानि सामवेदांश्च जगुः अपठन् । अतिर्यग्योनीनां शुकानामपि समस्तविद्यापारङ्गतत्वमिति दर्शनादद्भुतमेतन्माहात्म्यमिति द्योतितम् । इह तथाविधशुकैः तादृक्पराभवासम्बन्धेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्त्यलङ्कारः ॥ १२ ॥

---

ब्रह्माके अंशावतारके समान वात्स्यवंशमें सज्जन लोगोंमें अग्रगण्य संसारके लोगों द्वारा गुणगान किये जाने वाले अनेक धनीमानियोंद्वारा चरणकमलसेवित कुबेरनामक एक ब्राह्मण उत्पन्न हुए ॥ १० ॥

नित्य वेदपाठ करनेसे जहाँ वाचनिक पाप नष्ट हो गया है तथा यज्ञके अवशिष्टद्रव्यभक्षणसे जहाँ दोनों ओष्ठ पवित्र हो गया है एवं यज्ञसमयमें सोमरस पानकरनेसे मध्यभाग सुगन्धयुक्त हो गया है और समस्तशास्त्रोंके उच्चारण करनेके समयमें देखनेमें अत्यन्त सुन्दर ऐसे मुखमें सरस्वती देवी स्वयं वास करती थी ॥ ११ ॥

निरन्तर श्रवण करनेसे जिन सबोंको समस्त शास्त्र अभ्यस्त हो गया था इस प्रकारके पिंजरेमें रहनेवाले शुक तथा सारिकागणद्वारा प्रत्येकपदमें त्रुटिको दिखाये जानेसे सब ब्राह्मण बालक भयभीत मन होकर यजुर्वेद एवं सामवेद पाठ किया करते थे ॥ १२ ॥

---

१ प्रस्त'''।

हिरण्यगर्भो भुवनाण्डकादिव क्षपाकरः क्षीरमहार्णवादिव।
अभूत् सुपर्णो विनतोदरादिव द्विजन्मनामर्थपतिः पतिस्ततः॥ १३॥
विवृण्वतो यस्य विसारि वाङ्मयं दिने दिने शिष्यगणा नवा नवाः।
उषस्सु लग्नाः श्रवणेऽधिकां श्रियं प्रचक्रिरे चन्दनपल्लवा इव॥ १४॥
विधानसम्पादितदानशोभितैः स्फुरन्महावीरसनाथमूर्त्तिभिः।
मखैरसंख्यैरजयत् सुरालयं सुखेन यो यूपकरैर्गजैरिव॥ १५॥

---

हिरण्येति। भुवनस्य भूर्भुव-इत्यादि-चतुर्दशजगतः अण्डकं ब्रह्माण्डं तस्मात् द्विजन्मनां ब्राह्मणानां पतिः अधिपतिः हिरण्यगर्भः प्रजापतिरिव, क्षीरमहार्णवात् दुग्धसागरात् द्विजन्मनां पतिः द्विजराजः क्षपाकरः सुधांशुरिव, विनतायाः तन्नामिकायाः कश्यपपत्न्या उदरात् कुक्षेः द्विजन्मनां पतिः पक्षिराजः सुपर्णः गरुड इव, ततः कुबेरद्विजात् द्विजन्मनां ब्राह्मणानां पतिः श्रेष्ठः अर्थपतिः अर्थपतिसंज्ञकः कश्चित् पुत्रः अभूत् उत्पन्नः। इह हिरण्यगर्भसादृश्येन वेदपारगामित्वम्, क्षीरसमुद्रोत्थचन्द्रतुलनया सकलजनाह्लादकत्वम्, गरुडोपमया च नारायणपरायणत्वं द्योतितम्। चतुर्दशभुवनपदेन—

भूः भुवः स्वः महः जनः तपः सत्यमित्येते सप्त उपरितना लोकाः, अतलं वितलं सुतलं तलातलं रसातलं महातलं पातालमित्येते सप्त अधस्तना लोका ज्ञेयाः। तदुक्तमग्निपुराणे—

'चतुर्दशविधं ह्येतद्भूतवृन्दं सुकीर्त्तितम्। भूर्भुवस्वर्महश्चैव जनश्च तप एव च॥
सत्यलोकश्च सप्तैते लोकास्तु परिकीर्त्तिताः। अतलं वितलञ्चैव सुतलञ्च रसातलम्।
महातलं रसातलं पातालं सप्तमं स्मृतम्'॥ इति।

ब्रह्माण्डतः प्रजापतेरुत्पत्तौ प्रमाणं यथा मनुः—

'तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिन् यज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः॥

इहालङ्कारश्च मालोपमा॥ १३॥

विवृण्वत इति। दिने दिने प्रतिदिनम् उषस्सु प्रातःसमयेषु नवा नवा नूतना नूतना उत्तरोत्तरं धीमन्त इति तात्पर्यम्, एवंविधाः शिष्यगणाः छात्रसमूहाः चन्दनपल्लवाः मलयजवृक्षकिसलयानि इव 'पल्लवोऽस्त्री किसलयम्' इत्यमरः, श्रवणे शास्त्रविचाराकर्णने योषितां कर्णे च लग्ना आसक्ताः सन्तः, विसारि विस्तृतं वाङ्मयं चतुर्दशविद्यात्मकं शास्त्रं विविण्वतः व्याख्यानेनार्थः स्पष्टीकुर्वतः पाठयत इत्यर्थः यस्य अर्थपतेः गुरोः अधिकाम् अत्यर्थां श्रियं शोभां प्रचक्रिरे वितेनिरे। इह वाच्योपमाऽलङ्कारः॥ १४॥

विधानेति। यः अर्थपतिः विधानेन वेदप्रतिपादितमार्गेण सम्पादितं विहितं यद्दानं विप्रेभ्यः सुवर्णादिवितरणं तेन शोभितैः मण्डितैः, अन्यत्र तु विधानेन मदाविर्भावार्थं दीयमानभक्ष्यग्रासेन सम्पादितं निष्पन्नं यद्दानं मदजलं तेन शोभितैः भूषितैः। स्फुरन्तो देदीप्यमाना ये महावीरा हवनवह्नयः तैः सनाथा युक्ता मूर्त्तयः स्वरूपाणि येषां तैः 'होमाग्निस्तु महाज्वालो महावीरः प्रवर्ग्यवत्' इति भानुचन्द्रोद्धृतकोशः, अन्यत्र स्फुरन्तः सक्रियाः ये महावीरा महाशूराः तैः सनाथा अधिष्ठिता मूर्त्तयः शरीराणि येषां तैः। यूपा यज्ञे पशुबन्धनाय स्थाणुविशेषाः त एव करा हस्ता येषां तैः, अन्यत्र तु यूपा इव कराः शुण्डादण्डा येषां तैः। गजैः करिभिरिव असंख्यैः अगण्यैः मखैः यज्ञैः सुखेन अक्लेशेन सुरालयं स्वर्गम् अजयत् स्ववशमकरोत् स्वर्गप्राप्तीच्छया विहितानेकयज्ञैरनायासेन तत्प्राप्तिमवश्यंभाविनं कृतवानिति निष्कर्षः। इह कार्येण हस्तिसैन्यैरन्यदेशविजयिनः कस्यचिद्राज्ञो व्यवहारसमारोपात् समासोक्त्यलङ्कारः स च पूर्णोपमयानुप्राणितेति भावुकाः॥१५॥

---

ब्रह्माण्डद्वारा हिरण्यगर्भ (ब्रह्मा) के समान क्षीरसागरद्वारा चन्द्रमाके समान तथा विनताके उदरद्वारा गरुड़के समान उस कुबेरसे ब्राह्मणश्रेष्ठ 'अर्थपति' उत्पन्न हुए॥ १३॥

सुन्दरी स्त्रियोंके कानके ऊपर रक्खा हुआ चन्दनपल्लव जिस प्रकार शोभा सम्पादन करता है उसी प्रकार प्रतिदिन प्रातःकालमें नये नये शिष्य लोगोंका शास्त्रार्थ सुननेमें तत्पर हो विशाल शास्त्रसमूहके अध्ययन करानेमें व्यस्त हुए अर्थपति अधिक शोभाको प्राप्त किये॥ १४॥

शास्त्रानुकूल द्रव्य देनेसे अत्यन्त शोभित, देदीप्यमान होमाग्निसे सम्पन्न एवं यूपविशिष्ट, चाराभक्षण करनेपर निकले हुए मदजलसे जिस प्रकारकी शोभा हाथी प्राप्त करता है, लड़नेके उत्साहमें बड़े बड़े योद्धा लोग जिसके ऊपरमें चढ़ते हैं, और यूपकाष्ठके समान जिसके सूँड़ है उसी हाथीके समान असंख्य यज्ञद्वारा जो बिना प्रयत्नके ही स्वर्गको अपने वश कर लिये—॥ १५॥

स चित्रभानुं तनयं महात्मनां सुतोत्तमानां श्रुतिशास्त्रशालिनाम् ।
अवाप मध्ये स्फटिकोपलामलं[1] क्रमेण कैलासमिव क्षमाभृताम् ॥ १६ ॥
महात्मनो यस्य सुदूरनिर्गताः कलङ्कमुक्तेन्दुकलामलत्विषः ।
द्विषन्मनः प्राविविशुः कृतान्तरा गुणा नृसिंहस्य नखाङ्कुशा[2] इव ॥ १७ ॥
दिशामलीकालकभङ्गतां गतस्त्रयीवधूकर्णतमालपल्लवः ।
चकार यस्याध्वरधूमसञ्चयो मलीमसः[3] शुक्लतरं निजं यशः ॥ १८ ॥

स इति । सः अर्थपतिः क्रमेण सुतोत्पत्तिपरम्परया क्षमाभृतां पर्वतानां मध्ये स्फटिकोपलैः स्फटिकमणिभिः अमलं स्वच्छं कलङ्करहितमित्यर्थः कैलासं हिमालयमिव क्षमाभृतां क्षान्तिगुणयुक्तानां महात्मनां जितेन्द्रियाणां महामनीषिणां श्रुतिशास्त्रशालिनां वेदशास्त्राध्यापकानां सुतोत्तमानाम् उत्कृष्टात्मजानां मध्ये चित्रभानुं चित्रभानुनामानं तनयम् आत्मजम् अवाप लब्धवान् । 'क्षितिक्षान्त्योः क्षमाः' आत्मजस्तनय सूनुः' इति चामरः । इहोपमा ।

अर्थपतेरेकादश पुत्रा आसन्निति हर्षचरिते ग्रन्थकृता स्वयमेवोल्लिखितम्, तथाहि—"सोऽजनयद् १. भृगुं २. हंसं ३. शुचिं ४. कविं ५. महीदत्तं ६. धर्मं ७ जातवेदसं ८. चित्रभानुं ९. त्र्यक्षम् १०. अहिदत्तं ११. विश्वरूपञ्चेत्येकादशरुद्रानिव सोमामृतरसशीकरच्छुरितमुखान् पवित्रान् पुत्रान्" इति । एष्वष्टमश्चित्रभानुरिति स्फुटमवगम्यते ॥ १६ ॥

महात्मन इति । सुदूरनिर्गता अधिकदूरदेशव्यापाः, पक्षे आधिक्येन नखराग्राद्बहिर्भूताः कलङ्केन मृगलाञ्छनेन मुक्ता वर्जिता या इन्दुकला चन्द्रषोडशांशाः तद्वत् अमला स्वच्छा त्विट् छविर्येषां ते, पक्षान्तरेऽप्येवमेव । तथा कृतं स्वप्रभावान्निष्पादितम् अन्तरं प्रवेशावकाशो यैस्ते, पक्षे तु कृतम् अन्तरं भेदः यैस्ते 'अन्तरमवकाशावधिपरिधानान्तर्भेदतादर्थ्ये' इत्यमरः । यस्य महात्मनः महाबुद्धिमतः चित्रभानोर्गुणाः दयादाक्षिण्यादयः अपिपदाध्याहारेण पितुस्तुल्या अपि नृसिंहस्य नृसिंहस्वरूपधारिणो विष्णोः नखाङ्कुशा सृणिवद्विस्तृताः 'अङ्कुशोऽस्त्री सृणिः स्त्रियाम्' इत्यमरः, नखराः पुनर्भवा इव द्विषतां शत्रूणां मनोऽपि पक्षे द्विषतो वैरिणो हिरण्यकशिपोः मनोऽन्तःकरणं वक्षश्च प्राविविशुः प्रवेशं विदधुः । यद्गुणा वैरिणामपि चित्ताकर्षकाः, तत्प्रभावः कथं वर्णनीयः ? इत्याशयः । साधारणधर्मादिसद्भावात्पूर्णोपमालङ्कारः ॥ १७ ॥

दिशामिति । दिशां पूर्वादीनां वधूस्वरूपाणामिति यावत्, अलीकेषु ललाटदेशेषु 'अलीकमप्रिये भाले' इति हैमः, ये अलकाश्चूर्णकुन्तलाः तेषां भङ्गतां रचनाविशेषत्वं गतः प्राप्तः । त्रयी वेदत्रयी ऋग्यजुःसामरूपेत्यर्थः सैव वधूः स्नुषाः तस्याः कर्णे श्रवणे तमालपल्लवः तापिच्छद्रुमकिसलयस्वरूपः, स्थलद्वयेऽपि प्राकृतिकश्यामरूपत्वादित्याशयः 'तापिच्छोऽपि तमालः स्यात्' इत्यमरः । मलीमसः प्राकृतिकमलिनो यस्य चित्रभानोः अध्वरधूमसञ्चयः यज्ञधूमराशिः निजं स्वीयं यशः प्राकृतिकस्वच्छां सुकीर्तिं शुक्लतरम् अतिशयेनोज्ज्वलं चकार विदधे । इह प्रथमचरणेनाजस्रं यज्ञसमूहसम्पादनेन धूमस्य दिगन्तव्यापित्वं ध्वनितम् । एवञ्च नियतक्रतुविधानात् धर्माचारतत्परताया अपि द्योतने गुणजनिता सुकीर्त्तिरधिका सञ्जातेति निष्कर्षः ।

इह दिशासु वधूत्वारोप आर्थः, अध्वरधूमसञ्चये केशरचनाविशेषत्वारोपस्तु शाब्द इत्येकदेशविवर्त्तिरूपकम्, धूमसञ्चये तमालपल्लवत्वारोपः, त्रय्यां वधूत्वारोपो निमित्तमिति परम्परितरूपकम्, तथा मलिनधूमसञ्चयेन शुक्लतरयशसो जननात् कारणगुणविपरीतकार्यगुणोत्पत्तेः विषमालङ्कारश्च इति परस्परमेतेषामङ्गाङ्गिभावेन सङ्करालङ्कार इति तत्त्वविदः ॥ १८ ॥

वे अर्थपति, पर्वतोंके बीच स्फटिकमणिसम अतिस्वच्छ कैलाशपर्वतके समान बड़े बुद्धिमान्, क्षमाशील- एवं वेदशास्त्रको जाननेवाले सब लड़कोंके बीच उत्कृष्ट 'चित्रभानु' नामक लड़केको प्राप्त किये ॥ १६ ॥

जिस महात्माके अधिक दूरदेश जानेवाली तथा कलङ्करहित चन्द्रकलाके समान स्वच्छ शोभायुक्त गुणसमूह अपने प्रभावके प्रवेशमार्गको पाकर अंकुश समान भेदन करनेवाले नरसिंहके नखसमूहके तुल्य शत्रुओंके हृदयमें प्रवेश कर गया ॥ १७ ॥

जिनके यज्ञीय अग्निके मलिनधूमसमुदाय दिग्वधूगणके भालप्रदेशमें केशरचनास्वरूप, तथा श्रुतिवधूके कानमें तम्बाकूके पत्तेके स्वरूप होकर अत्यधिक श्वेतवर्ण कर दिया—॥ १८ ॥

१ स्फटिकोपलोपमम् । २ नखाङ्कुरा । ३ मलीमासम् ।

सरस्वतीपाणि-सरोजसम्पुट-प्रमृष्टहोमश्रमशीकराम्भसः।
यशोंऽशुशुक्लीकृतसप्तविष्टपात्ततः सुतो बाण इति व्यजायत ॥ १९ ॥
द्विजेन तेनाक्षतकण्ठकौण्ठ्यया महामनोमोहमलीमसान्धया।
अलब्धवैदग्ध्यविलासमुग्धया धिया निबद्धेयमतिद्वयी कथा ॥ २० ॥

---

सरस्वतीति। सरस्वत्या भारतीदेव्याः पाणिसरोजसम्पुटेन करकमलद्वयेन मृष्टानि प्रमार्जितानि होमश्रमस्य होमादिकर्मसम्बन्धिक्लेशस्य शीकराम्भांसि प्रस्वेदजलानि यस्य तस्मात्, तथा यशसः सुकीर्तेः अंशुभिः मयूखैः शुक्लीकृतानि शुभ्रीकृतानि सप्त विष्टपानि भूप्रभृतीनि सप्त भुवनानि येन तस्मात् 'विष्टपं भुवनं जगत्' इत्यमरः, ततः चित्रभानोः सकाशात् 'बाण' इति बाणनामधेयः सुतः पुत्रः व्यजायत अभवत्। इह भारत्याः करकमलयुगलेन स्वेदजलबिन्दूनां प्रोञ्छनासम्बन्धेऽपि तत्सम्बन्धप्रतिपादनात् प्रथमातिशयोक्त्यलङ्कारः, तथा कीर्त्तिराशिभिः सप्तभुवनानां शुभ्रीकरणासम्बन्धेऽपि तत्सम्बन्धप्रतिपादनाद् द्वितीयातिशयोक्त्यलङ्कारश्चेत्युभयोः परस्परमपेक्षाभावेन संसृष्टयलङ्कार इत्यवधेयम् ॥ १९ ॥

सम्प्रति स्वाहङ्कारं परिहरति—द्विजेनेति। तेन द्विजेन ब्राह्मणेन बाणेन, अक्षतम् अविनष्टं कण्ठकौण्ठ्यं वचनव्यापारे गलस्य मान्द्यं यस्याः सा तया, महान् उत्कृष्टो यो मनोमोहः शिशुत्वेन चित्तवैकल्यं तेन मलीमसा मलिना प्रशंसितुमयोग्या अत एव अन्धा सदसत्प्रतिपादनासमर्था तया, तथा अलब्धोऽप्राप्तो यो वैदग्ध्यविलासः वैदुष्यचातुर्यं तेन हेतुना मुग्धा मूढा तया वैदुष्यचातुर्यासत्त्वेनात्यन्तकोमलत्वेत्यर्थः 'मुग्धः सुन्दरमूढयोः' इत्यमरः, धिया प्रज्ञया इयं मद्बुद्धिस्था कादम्बरीरूपा, गर्हितत्वे द्वयीं बृहत्कथां वासवदत्तां च अतिक्रान्तेति अतिद्वयी अधमत्वे अद्वितीया (अत्यादयः क्रान्ताद्यर्थे द्वितीया) इत्यनेन समासः, व्यङ्ग्यार्थस्तु उत्तमत्वे अद्वितीया कथा गद्यपद्यादिप्रबन्धः निबद्धा ग्रथिता; पूर्वमपरिणतबुद्ध्या विपर्यीकृत्य पश्चाद्विनिर्मितेत्यर्थः, एतेन शैशवचापल्यजातदोषा धीधनैर्मनीषिभिः शोधनीया इत्यभिप्रायः।

इह—'छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा। अनेकस्यैकधा साम्यमसकृद्वाप्यनेकधा।
एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते ॥'

इति साहित्यदर्पणोक्तदिशा प्रथमचरणे छेकानुप्रासः, शेषे तु वृत्त्यनुप्रास इत्यनयोर्मिथोऽनपेक्ष्य स्थितत्वात् संसृष्टिरलङ्कारः ॥ २० ॥

---

वाग्देवी अपने करकमलद्वारा जिनको हवनपरिश्रमसे उत्पन्न पसीनेके जलबिन्दुओंको पोंछ देती थी, तथ जिनके कीर्त्तिराशि समस्त संसारको श्वेतवर्ण करदीं उन्हीं चित्रभानुसे 'बाण' नामका पुत्र उत्पन्न हुआ ॥ १९ ॥

जिसके कण्ठकी जड़ता नष्ट नहीं हो पाती, एवं मनके अत्यन्त चञ्चलता वशसे मलिन एवं सदसद्विवेचनारहित और वैदुष्य चातुर्यको नहीं प्राप्त करनेसे जो अत्यन्त कोमल बुद्धि है उसी बुद्धिके अनुसारसे ब्राह्मण बाणभट्ट यह अद्वितीया कथा काव्यको निर्माण किया ॥ २० ॥

# कथा-मुखम्

## शूद्रकवर्णनम्

आसीदशेष-नरपति-शिरः-समभ्यर्चित-शासनः पाकशासन इवापरः, चतुरुदधि-माला मेखलाया भुवो भर्त्ता, प्रतापानुरागावनत-समस्त-सामन्तचक्रः, चक्रवर्त्तिलक्षणोपेतः, चक्रधर इव करकमलोपलक्ष्यमाण-शङ्ख चक्र-लाञ्छनः, हर इव जितमन्मथः, गुह इवाप्रतिहतशक्तिः,

---

अथ सम्प्रति (१) कथां प्रस्तौति—आसीदिति । आसीदिति भूतक्रियापदस्य "राजा शूद्रको नाम" इति दूरस्थेन कर्त्तृपदेन सम्बन्धः । राजानं विशिनष्टि–अशेषेति। अशेषैः समग्रैः नरपतिभिर्महीपतिभिः (कर्त्तृभिः) शिरोभिरुत्तमाङ्गैः (करणैः) समभ्यर्चितं सादरतया गृहीतं शासनम् आदेशो यस्य स तादृशः। समस्तजनाज्ञापको न त्वाज्ञाकर इत्याशयः, अत एव अपरः सुरराजाद्भिन्नो द्वितीयः पाकशासन इन्द्र इव। इन्द्रो हि पाकनामानं दैत्यं हतवानिति पुराणीयवार्त्ता। पाकं शासितवानिति पाकशासनः "बिरौजाः पाकशासनः" इत्यमरः । इह शासनपदावृत्त्या यमकालङ्कारः, भावाभिमानिनी वाच्या द्रव्योत्प्रेक्षाचेत्युभयोः शब्दार्थालङ्कारयोरेकाश्रयानुप्रवेशरूपः सङ्करः। अत्र हि शासनपदावृत्त्या लाटानुप्रासो नाशङ्कनीयः शक्यार्थाभिन्नत्वे केवलतात्पर्यतो व्यतिरेक एव तदभ्युपगमेन प्रकृते शक्यार्थस्यापि व्यतिरेकात्।

चतुरिति । चत्वारश्च भूमण्डलचतुर्दिक्षु विद्यमानास्त उदधयश्च समुद्राश्च चतुरुदधयस्तेषां माला श्रेणिः सैव मेखला काञ्ची अवधिरिति यावत् यस्यास्तथाभूतायाः, भुवो वसुधायाः भर्त्ता नायकः। इह वसुधाशूद्रकयोर्नायकनायिकाव्यवहारसमारोपात् समासोक्तिरलङ्कारः।

प्रतापेति। प्रतापः कोशदण्डजतेजः अनुरागः प्रेम ताभ्याम् अवनतं वशीभूतं समस्तं कृत्स्नं सामन्तचक्रं स्वाधीननृपतिसमूहो यस्य स तादृशः । अन्यदपि लोहचक्रमग्निप्रतापातापादवनतं जायते। तथा च न केवलं तत्प्रभाववशाद्वशीभूताः सामन्तनृपतयः किन्तु तदीयप्रेमवशादपीति ध्वनितम्।

चक्रवर्त्तीति । चक्रवर्त्ती सार्वभौमस्तस्य लक्षणैश्चिह्नैः सामुद्रिकशास्त्रोक्तकरतललौहित्यादिभिः उपेतो युक्तः। तथाचोक्तं सामुद्रिकरहस्ये—

"अतिरक्तः करो यस्य ग्रथिताङ्गुलिको मृदुः। चापाङ्कुशाङ्कितः सोऽपि चक्रवर्त्ती भवेद् ध्रुवम् ॥"

पुनरपि तमेव विशिनष्टि—चक्रधर इति। चक्रमलातक्रं धरतीति चक्रधरो विष्णुरिव करकमले पाणिपद्मतले उपलक्ष्यमाणम् अवलोक्यमानं शङ्खचक्रलाञ्छनं शङ्खचक्राकाररेखोपरेखास्वरूपं चिह्नं पक्षे वस्तुतः शङ्खचक्रस्वरूपं चिह्नं यस्य स तादृशः। "चिह्नं लक्ष्म च लक्षणम्" इत्यमरः।

इहोपमानोपमेयभावस्य साधारणधर्मस्य चोपादानात् पूर्णोपमा, चक्रपदस्यासकृदुक्तत्वाद् वृत्त्यनुप्रासश्चेत्युभयोः परस्परमनपेक्षत्वात्तिलतण्डुलवत्संसृष्टिः।

हर इवेति। हरति पापं यः स हरो महेश्वरः तद्वदिव जितं पराभूतं मन्मथं कन्दर्पं येन स तथोक्तः एकत्र भाललोचनाग्निना नामशेषकरणात्, अपरत्रात्यन्तलावण्यवत्त्वादित्याशयः। उभयोः पूर्णसाम्यात्पूर्णोपमालङ्कारः।

गुह इवेति। गुहः कार्त्तिकेय इव "सेनानीरग्निभूर्गुहः" इत्यमरः, अप्रतिहता केनाप्यकुण्ठिता शक्तिः

---

द्वितीय देवराज (इन्द्र) के समान शूद्रक नामका एक राजा थे। उनकी आज्ञाको समस्त राजगण गौरवपूर्वक शिरोधार्य करते थे। वे चारों समुद्र (मालारूप मेखला) से परिवेष्टित समस्त पृथिवीमण्डल के मालिक थे। अधीनस्थ समस्त राजगण उनके प्रभाव और स्नेहमें वशीभूत रहते थे। वे सम्राट् (शाहन शाह बादशाह) के योग्य समस्त लक्षणसे युक्त थे। चक्रपाणि भगवान् विष्णुके समान उनके करकमलमें शङ्ख और चक्र चिह्न देखनेमें आरहे थे। वे शङ्करके समान कामविजयी, और कार्तिकेयके तरह अप्रतिहत

---

(१) कथालक्षणं साहित्यदर्पणे —

"कथायां सरसं वस्तु गद्यैरेव विनिर्मितम्। क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके।
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तनम् ॥"

दिग्विभागमिव जलधरदिवसम्, अवलम्बितस्थूलमुक्ताकलापस्य कनकशृङ्खला-नियमित-मणिदण्डिकाचतुष्टयस्य गगन-सिन्धु-फेन-पटल-पाण्डुरस्य नातिमहतो दुकूलवितानस्याधस्तादिन्दुकान्तमणिपर्य्यङ्किकानिषण्णम्, उद्धूयमान-कनकदण्डचामरकलापम्, उन्मयूख-मुख-कान्तिनिचय-पराभवप्रणते शशिनीव स्फटिकपादपीठे विन्यस्तवामपादम्, इन्द्रनील-मणि-कुट्टिम-प्रभासम्पर्क-श्यामायमानैः प्रणत-रिपु-निश्वासमलिनीकृतैरिव चरण-नखमयू-

---

भूयो राजानं विशिनष्टि—अनेकेति। अनेकानि नानाविधानि रत्नाभरणानि मणिखचितालङ्काराः तेषां यानि किरणजालकानि रश्मिसमूहाः स्वार्थे कप्, तैरन्तरिता आवृता अवयवा अङ्गानि यस्य तं तथोक्तम्, अत एव इन्द्रायुधसहस्रेण शक्रधनुःसमूहेन 'इन्द्रायुधं शक्रधनुः' इत्यमरः, सञ्छादिता अन्तरिता अष्टौ दिग्भागा दिशां प्रदेशा यस्मिंस्तत्तादृशम्, जलधरदिवसमिव मेघावृतदिनमिव (वर्तमानम्) अनेन राजा मेघवर्ण आसीदित्यवधार्यते। इहाऽप्युपमाऽलङ्कारः।

पुनस्तमेव राजानं विशेषयितुं प्रथमं वितानं विशिनष्टि—अवलम्बितेति। अवलम्बिताः शिल्पिभिरधोलम्बितत्वेन आश्रिताः स्थूलानां स्थविष्ठानां मुक्तानां रसोद्भवानां कलापाः पङ्क्तयो यत्र तस्य तथोक्तस्य, कनकं सुवर्णं तस्य याः शृङ्खला बन्धनगभस्तयस्तैर्नियमिताः चतुर्षु कोणेषु बद्धा मणिदण्डिका रत्नखचिता यष्टयस्तासां चतुष्टयं यस्मिंस्तस्य, गगनसिन्धोर्मन्दाकिन्याः फेनपटलवत् अब्धिकफसमूहवत् 'डिण्डीरोऽब्धिकफः फेनः' इति कोशः, पाण्डुरं शुभ्रवर्णं तस्य एतानि षष्ठ्यन्तानि वितानविशेषणानि।

अथ राजानं विशिनष्टि—नातीति। नातिमहतः किञ्चिद्बृहतः स्थानोचितप्रमाणस्य दुकूलवितानस्य क्षौमवसननिर्मितोल्लोचस्य 'उल्लोचो वितानं कदकोऽपि' इति कोशः, तस्य अधस्तात् निम्नप्रदेशे इन्दुकान्तमणिपर्यङ्किका चन्द्रकान्तमणिरचितमञ्चिका तत्र निषण्णम् उपविष्टम्। 'फेनपटलपाण्डुरे'त्यत्र लुप्तोपमा।

भूयो राजानं विशिनष्टि—उद्धूयेति। उद्धूयमानो भृत्यैः संवीज्यमानः सुवर्णदण्डः कनकाऽवलम्बनयष्टिर्येषु तथाविधश्चामरकलापः प्रकीर्णकसमूहो यस्य तं तादृशम्।

उन्मयूखेति—उत् ऊर्ध्वं गता मयूखा रश्मयो यस्य तथाविधस्य मुखस्य यः कान्तिनिचयो दीप्तिसमूहस्तेन यो विजयो जयः पराभवः पराजयस्तेन प्रणते चरणतलसंलग्ने शशिनि चन्द्रमसीव। इह 'शशिनीव' इति द्रव्योत्प्रेक्षा।

अथ राज्ञश्चरणकिरणं विशेषयितुमाह—इन्द्रनीलेति। इन्द्रनीलमणीनां या कुट्टिमप्रभा वेदिकाकान्तिः तस्याः सम्पर्केण मिश्रणेन श्यामायमानैः श्यामवदाचरमाणैः, अत्रोपमानादाचारे क्यङ् अत एव क्यङन्तोपमा। कीदृशैरिव इत्यत आह—प्रणतेति। प्रणतानां पराजयेन स्वाधीनानां रिपूणां वैरिणां ये निश्वासाश्चेतनाः तैर्मलिनीकृतैर्मालिन्यमुपगतैरिव। लुप्तोपमालङ्कारेण क्रियोत्प्रेक्षा सङ्कीर्यते। चरणनखानां पादपुनर्भवाणां ये मयूखा रश्मयस्तेषां जालानि समूहास्तैरुपशोभमानं विराजमानम्।

---

इन्द्रधनुषसे आठों दिशामें आच्छादित हुए मेघाच्छन्न दिनके तरह वे देखनेमें आ रहे हैं; आकाशगङ्गाके फेनसमूहके समान श्वेतवर्ण स्थानप्रमाण पट्टवस्त्ररचित एक चन्द्रातप ( चनवा ) ऊपरमें टंगा हुआ है जिसमें बड़ी बड़ी मोतीकी मालायें झूल रहीं हैं, इस प्रकार उसके चारों कोनेमें चार मणिमयदण्ड सोनेके सीकड़में बंधे हुए हैं, सुवर्णमयदण्डयुक्त चामरसमूह आन्दोलित हो रहा है, जिस स्फटिकमय चरण पीठपर महाराज शूद्रक वामचरण रक्खे हुए हैं, उस स्फटिकमय चरणपीठके ऊर्ध्वगामी कान्तिसमूहसे पराजित हो चन्द्रमा इनके चरणतलमें प्रणत हो रहा है, इस समय उनके चरणोंके नखसमूह किरणजालोंकी शोभा को पा रहे हैं, वह किरणजाल नीलकान्तिमणिनिर्मित आसनवेदिकाप्रभाके साथ मिलित हो श्यामवर्ण हो रहा है, इससे मालुम पड़ता है कि शत्रुओंके निश्वासवायु उन अङ्गुलियोंको मलिन किया हो, पहले समयमें तत्काल कटा हुआ मधु और कैटभ दैत्यके शोणितसे रक्तवर्ण

---

१. जलधरसमयदिवसम्। २. आलम्बित…। ३. पाण्डरस्य। ४. इन्दुकान्तपर्य्यङ्किका। ५. सुवर्णदण्ड…। ६. उन्मयूखमुखविजयपराभवप्रणते, उन्मयूखमुखकान्तिविजिते पराभवप्रणते। ७. स्फाटिके पादपीठे। ८. …निःश्वास…।

खर्जालैरुपशोभमानम्, आसनोल्लसित-पद्मराग-किरण-पाटलीकृतेनाचिरमृदितमधु-कैटभ-रुधिरारुणेन हरिमिवोरुयुगलेन विराजमानम्, अमृतफेन-धवले गोरोचना-लिखित-हंस-मिथुन-सनाथ-पर्य्यन्ते चामर-पवनप्रनर्त्तितान्तदेशे दुकूले वसानम्, अति-सुरभि-चन्दनानुलेपन-धवलितोरःस्थलम्, उपरि-विन्यस्त-कुङ्कुम-स्थासकम्, अन्तरानिपतितबालातपच्छेदमिव कैलासशिखरिणम्, अपर-शशि-शङ्कया नक्षत्रमालयेव हारलतया कृतमुखपरिवे-

---

राज्ञ ऊरुयुगलं विशिनष्टि—आसनोल्लसितेति । आसन उपवेशनस्थले उल्लसिताः प्रकाशमाना ये पद्मरागकिरणाः लोहितमणिरश्मयस्तैः पाटलीकृतेन श्वेतरक्तीकृतेन 'श्वेतरक्तस्तु पाटलः' इत्यमरः, अत एव अचिरमृदितयोः तत्कालमर्दितयोः सद्यः कृत्तकण्ठयोरित्यर्थः, मधुकैटभयोः तन्नामकयोरसुरविशेषयोः रुधिरेण शोणितेन अरुणं रक्तवर्णं तेन तथोक्तेन, ऊरुयुगलेन जङ्घाद्वयेन विराजमानं शोभमानं हरिं मधुसूदनमिव । उपमालङ्कारः ।

पुरा क्षीरशायिनो भगवतः श्रीविष्णोः कर्णमलोत्पन्नौ मधुकैटभाख्यौ असुरविशेषौ भगवत एव नाभिकमलसम्भूतं ब्रह्माणं हन्तुं समुद्यतौ जातौ । ततः आत्मरक्षणाय व्याकुलः कमप्यलभमानः योगनिद्रया स्थितां जगद्धात्रीं तुष्टुवे, प्रसन्ना सा नारायणमुत्थापितवती उत्थाय च भगवान् ताभ्यां सह पञ्चवर्षसहस्राणि युद्ध्वा स्वमायया मोहितौ तौ वरं दिदित्सू आस्ताम् । नारायणो हि तयोर्वधं याचितवान् । ततो जलमग्नां भूमिमालोक्य आहतुस्तौ 'यत्र सलिलेन परिप्लुता पृथिवी न विद्यते तत्रावां जहि' इति । भगवांस्तु पार्थिवांशसंयुक्ते निजोरौ संस्थाप्य तयोर्मूर्धनी चक्रेणाच्छिनदिति मार्कण्डेयपुराणीयकथा प्रायः सर्वत्र प्रसिद्धैव ।

पट्टवसनद्वयं विशिनष्टि—अमृतेति । अमृतस्य पीयूषस्य यः फेनस्तद्वत् धवले श्वेतवर्णे गोरोचनया गोपित्तनामकपदार्थेन लिखितानि चित्रितानि यानि हंसमिथुनानि सितच्छदयुगलानि तैः सनाथाः सहिताः पर्यन्ताः प्रान्तप्रदेशा ययोस्ते, तथा चामराणां बालव्यजनानां 'चामरा चामरं बालव्यजनं रोमगुच्छकम्' इति रभसः, पवनेन वायुना प्रनर्त्तितौ आन्दोलितौ अन्तदेशौ प्रान्तभागौ ययोस्ते दुकूले पट्टवसने वसानं दधानम् । इह 'अमृतफेनधवले' इत्यत्र लुप्तोपमा ।

अतीति । अतिसुरभिचन्दनस्य अतिसुगन्धिमलयजस्य अनुलेपनेन अङ्गरागेण धवलितं शुभ्रीकृतम् उरःस्थलं वक्षःस्थलं यस्य तं तादृशम् ।

उपरीति । उपरि तच्चन्दनलेपनोपरि विन्यस्ता विहिताः कुङ्कुमस्य केसरस्य स्थासका हस्तबिम्बा यस्य तम् 'स्थासकं हस्तबिम्बम्' इति कोशः, अपरे तु 'चर्च्चा तु चार्चिक्यं स्थासकम्' इति । अत एव अन्तरान्तरा मध्ये मध्ये निपतिताः पर्यस्ता बालातपच्छेदा अभिनवोदितसूर्यमयूखखण्डा यस्य तं कैलासशिखरिणं हिमाचलमिव ( वर्तमानम् ) । इहोपमा ।

भूयस्तमेव प्रकारान्तरेण विशिनष्टि—अपरेति । अपरोऽन्यो यः शशी चन्द्रस्तस्य शङ्कया भ्रान्त्या प्राप्ता या नक्षत्रमाला तारापङ्क्तिस्तयेव हारलतया लतावल्लम्बमानया मुक्तास्रजा कृतो मुखस्य वदनस्य परिवेषः परिधिः परिवेष्टनमिति यावत्, यस्य स तम्, 'परिवेषस्तु परिधिः' इत्यमरः ।

इह मुखे शशिभ्रान्त्या भ्रान्तिमानलङ्कारः, 'नक्षत्रमालयेवे'त्युत्प्रेक्षा, अङ्गाङ्गिभावेन चानयोः सङ्करः तेन च मुखस्य चन्द्रसाम्यं हारलताया अत्यन्तनैर्मल्यं च ध्वनितमित्यलङ्कारेण वस्तुध्वनिः ।

---

ऊरुद्वय द्वारा (दोनों जङ्घोंसे) भगवान् विष्णु जिस प्रकार शोभा प्राप्त की थी, महाराज शूद्रक भी उसी प्रकार आसनस्थ पद्मरागमणिके किरणसे रक्तवर्ण ऊरुयुगलद्वारा शोभा को प्राप्त किये है; राजा शूद्रक अमृत फेनके समान श्वेतवर्ण दो पट्टवस्त्र धारण किये हुए हैं, उसके प्रान्तभाग (किनारे) में गोरोचनाद्वारा दो हंसचित्र बनाया हुआ है, और चामरके हवासे उसके अञ्चलदेश कम्पित हो रहा है; अत्यन्तसुगन्ध चन्दनलेप होनेसे वक्षःस्थल (कलेजा) श्वेतवर्ण हो रहा है, उस चन्दनलेपके ऊपर हस्तबिम्बके स्वरूपमें कुङ्कुम लिप्त है, उसपर अभिनवोदित सूर्यके किरणसमूह बीच २ में निपतित हो रहा है जिससे कैलाशपर्वतके समान महाराज देखनेमें आ रहे हैं, दूसरे चन्द्रमाके भ्रमसे उपस्थित नक्षत्रपंक्तिके समान मुक्तामालाओंसे राजाका मुखमण्डल परिवेष्टित (घिरा हुआ)

---

१ जालकैः । २ ''' मृत ''' । ३ परिवेषम् ।

शम् , अतिचपल-राज[1]-लक्ष्मी-बन्ध[2]ननिगड़-शङ्कामुपजनयतेन्द्रनील[3]-केयूरयुगलेन मलयज-रस-गन्धलुब्धेन भुजङ्गद्वयेनेव वेष्टितबाहुयु[4]गलम् , ईषदालम्बि[5]-कर्णोत्पलम् , उन्नत-घोणम् , उत्फुल्लपुण्डरीक-लोच[6]नम् , अमलकलधौतपट्टाय[7]तम् , अष्टमीचन्द्र-शकलाकारम् , अशेष-भुवन-राज्याभिषेकसलिल[8]पूतम् , ऊर्णासनाथं ललाटदेशमुद्वहन्तम् , आमोदित-मालतीकुसुम-शेखरम् ऊषसि-शिखर-पर्य्यस्त-तारकापुञ्जमिव पश्चिमाचलम् , आभरण-प्रभा-पिशङ्गिता[9]ङ्गतया लग्न–हर–हुताशमिव मकरध्वजम् , आसन्नवर्त्तिनीभिः सेवार्थमागताभि-

अतीति । अतिचपला अत्यन्तं चञ्चला या राजलक्ष्मीराधिपत्यश्रीः तस्या बन्धो बन्धनं नियमनमिति यावत् तदर्थं यो निगडः शृङ्खला तस्य शङ्कां भ्रान्तिम् उपजनयता कुर्वता, एवम्भूतेन इन्द्रमणिर्नीलकान्तमणिः तेन युक्तं खचितं यत्केयूरयुग्मम् अङ्गदद्वयं तेन तथोक्तेन, अत एव मलयजश्चन्दनसक्तो यो द्रवस्तस्य गन्धेन परिमलेन लुब्ध आसक्तस्तेन तादृशेन भुजङ्गद्वयेन सर्पयुगलेनेव वर्तमानेन वेष्टितं परिक्षिप्तं बाहुयुगलं भुजद्वयं यस्य तं तादृशम् । इह राज्यलक्ष्मीस्थिरीकरणाय शृङ्खलाशङ्कामुपजनयतीति भ्रान्तिमानलङ्कारः, 'भुजङ्गद्वयेनेवे'त्युत्प्रेक्षा च, अनयोरङ्गाङ्गिभावेन सङ्करालङ्कारः ।

ईषदिति । ईषत्किञ्चित् आलम्बिनी लम्बमाने कर्णोत्पले पङ्कजाकारकर्णभूषणे यस्य तं तथोक्तम्, उन्नता उच्चा घोणा नासिका यस्य स तम्, 'घोणा नासा च नासिका' इत्यमरः, उत्फुल्लं विकसितं यत्पुण्डरीकं सिताम्भोजं तद्वत् लोचने नयने यस्य स तम्, इह लुप्तोपमा । अमलं स्वच्छं यत्कलधौतं कनकं तस्य यः पट्टः फलकं तद्वत् आयतं विस्तीर्णम्, अष्टमीचन्द्रस्य अष्टमीतिथावुदितसुधांशोः यत् शकलं तदर्धभागस्तद्वदाकार आकृतिर्यस्य तम् । इह द्वे अपि लुप्तोपमे । अर्धभागत्वन्तूभयोरपि अष्टम्यामष्टावेव कलाभागित्वमित्यभिप्रेत्येत्यवधेयम् ।

अशेषाणि समस्तानि यानि भुवनानि भूमण्डलानि तेषां राज्यम् आधिपत्यं तस्य अभिषेकोसलिलं मङ्गलस्नानजलं तेन पूतं पवित्रम्, तथा ऊर्णा भ्रूयुग्ममध्यवर्ती लोमावर्त्तः तेन सनाथं युक्तम्, 'ऊर्णा मेषादिलोम्नि स्यादावर्त्तस्वन्तरा भ्रुवोः' इत्यमरः, 'ऊर्णा भ्रूमध्यगावर्त्ते मेषादीनाञ्च लोमनि' इति हेमचन्द्रश्च, अयञ्च चक्रवर्त्यादीनामेव न त्वरिक्तस्य कस्याऽपि । तदुक्तम्—'भ्रूद्वयमध्ये मृणालतन्तुसूक्ष्मं शुभ्रायतमेकं प्रशस्तावर्त्तं महापुरुषलक्षणम्' इति ।

अथ पुनस्तमेव विशिनष्टि—आमोदीति । आमोदीनि सुरभीणि यानि मालतीकुसुमानि जातीपुष्पाणि तैः शेखरः शिरोभूषणं यस्य स तं तथोक्तम्, अत एव उषसि प्रातःकाले शिखरे शृङ्गे पर्यस्ताः पतित्वा समवेता तारकाणां नक्षत्राणां पुञ्जा राशयो यत्र तं तथोक्तम्, पश्चिमाचलम् अस्ताद्रिमिव ( वर्तमानम् )।

अत्र शैलशिखरराजोत्तमाङ्गयोः पुष्पपुञ्जनक्षत्रयोश्च स्फुटमेवोपमानोपमेयभावादुपमालङ्कारः।

कामदेवतुल्यत्वं प्रकटयति—आभरणेति । आभरणानाम् अलङ्काराणां या प्रभा दीप्तिस्तया पिशङ्गितानि पिङ्गलवर्णीकृतानि अङ्गानि अवयवा यस्य तस्य भावस्तत्ता तया तथोक्तया हेतुना, लग्नः संसक्तः हरस्य महेश्वरस्य हुताशस्तृतीयनेत्रवह्निर्यत्र तं तादृशं मकरध्वजं जलजन्तुविशेषचिह्नं कामदेवमिति यावत् इव (वर्त्तमानम्)। इहापि आभरणप्रभाहरनयनोत्पन्नानिलयोर्नृपमकरध्वजयोश्चोपमानोपमेयभावादुपमालङ्कारः।

आसन्नेति । आसन्नवर्त्तिनीभिः समीपस्थायिनीभिः सर्वतश्चतुर्दिक्षु सेवार्थं परिचर्यार्थम् आगताभिः

है; चन्दन सुगन्धिके लोभसे आये हुए दो सर्पके समान अवस्थित, एवं अत्यन्त चञ्चला राजलक्ष्मी के शृङ्खलाबन्धनका भयोत्पादक नीलकान्तिमणि–खचित दो केयूरसे राजाकी दोनों भुजायें परिवेष्टित हैं; पद्माकारमें रचित कर्णभूषणद्वय राजाके कर्णयुगलमें कितने ही परिमाणमें आलम्बित हैं, राजाकी नासिका उन्नत है, विकसित–कमलयुगलके समान लोचनद्वय है ललाटदेश सुवर्णफलकके समान विस्तृत तथा अष्टमी चन्द्रखण्डके समान आधा गोल है, समस्त पृथिवीमण्डलराज्यके अभिषेकजलसे अत्यन्तपवित्र, एवं दोनों भौंके बीच रहनेवाले टेढ़े रोमपंक्तियोंसे संयुक्त हैं; सुगन्ध मालतीफूलोंसे चोटी परिवेष्टित है, उससे प्रातःकालमें चोटी पर गिरे हुए नक्षत्रसमूह पुञ्जीभूत हो अस्ताचलके समान राजा देखनेमें आ रहे हैं; सुवर्णमय नानाप्रकार आभूषणोंकी कान्तिसे राजाका समस्त अङ्ग पिङ्गलवर्ण हो गया है, इस समय निश्चित ये शङ्करके लोचनज्वालासे परिवेष्टित कामदेवके

१ राज्य । २ बन्ध । ३ क्वापि 'मणि' इत्यधकः पाठः । ४ बाहुशिखरम् । ५ आलम्बित । ६ नेत्रम् । ७ पट्टायितम् । ८ अभिषेकपूतम् । ९ अङ्गरागतया ।

रिवं[1] दिग्वधूभिर्वारविलासिनीभिः परिवृतम्, अमल-मणिकुट्टिमसंक्रान्त-सकल-देह-[2]
प्रतिविम्बतया पतिप्रेम्णा वसुन्धरया हृदयेनेवोह्यमानम्, अशेषजनभोग्यतामुपनीतयाप्यसा-
धारणया राजलक्ष्म्या समालिङ्गितम्,[3] अपरिमित-परिवारजनमप्यद्वितीयम्, अनन्त-गज-
तुरग-साधनमपि खड्गमात्रसहायम्, एकदेशस्थितमपि व्याप्तभुवनमण्डलम्, आसने[4] स्थित-
मपि धनुषि निषण्णम्, उत्सादिताशेषद्विषदिन्धनमपि[5] ज्वलत्प्रतापानलम्, आयतलोचनमपि

---

प्राप्ताभिः अत एव व्यापकत्वाद्दिश एव वध्वः स्त्रियो दिग्वध्वस्ताभिरिव वारविलासिनीभिर्गणिकाभिः परिवृतं परिवेष्टितम्। इह 'दिग्वधूभि' रिवेत्यत्र रूपकस्योत्प्रेक्षायाश्च सत्त्वादेकाश्रयानुप्रवेशसङ्कररूपः सङ्करालङ्कारः।

अमलेति। अमला अतिनिर्मला ये मणयश्चन्द्रकान्ताद्यास्तेषां बद्धभूमिकास्तत्र सङ्क्रान्तं सञ्चरितं यत्सकलदेहप्रतिविम्बं समस्तशरीरप्रतिच्छायस्तस्य भावस्तत्ता तया हेतुना, पतिप्रेम्णा स्वामिप्रीत्या वसुन्धरया भूम्या हृदयेन चेतसा उह्यमानं वहमानमिव वर्त्तमानम्। इह हृदयेनेवेत्युत्प्रेक्षा।

अशेषेति। अशेषजनानां समग्रलोकानां भोग्यतां दानादिना भोगयोग्यताम् उपनीतया प्राप्तयापि सर्व-साधारणयेति यावत्, असाधारणया साधारणभोग्यताशून्यया इति विरोधः, अन्येषामेतादृशी राजलक्ष्मीर्न विद्यत इत्यतः सर्वोत्कृष्टयेति तत्परिहारः, राजलक्ष्म्या राज्यश्रिया समालिङ्गितम् उपगूढं देहं शरीरं यस्य तं तादृशम्। इह साधरणाऽसाधरणयोर्विरुद्धधर्मत्वेऽपि तत्परिहाराद्विरोधाभासोऽलङ्कारः। एवमग्रे सर्व-स्मिन्नपि द्वितीयान्ते विरोधाभासोऽलङ्कारः।

अपरिमितेति। अपरिमिता अगणिताः परिवारजनाः सेवकलोका यस्य तं तथाभूतमपि अद्वितीयं द्वितीयजनरहितमिति विरोधः, स्वतुल्य-द्वितीयरहितमिति तत्परिहारः।

अनन्तेति। अनन्तानि अपरिमितानि गजा हस्तिनस्तुरगा अश्वास्तेषां साधनानि उपकरणानि सहाया यस्य तम् 'निर्वर्तनोपकरणानुव्रज्यासु च साधनम्' इत्यमरः, एवम्भूतमपि खड्गमात्रसहायमिति विरोधः, युद्धे सर्वविधसैन्यानपेक्षत्वेन केवलतरवारिसहायेनैव विजयिनमिति तत्परिहारः।

एकदेशेति। एकदेशः सभामण्डपादिस्तत्र एकस्मिन् जनपदे वा स्थितमपि वर्तमानमपि व्याप्तं समाक्रान्तं भुवनमण्डलं मर्त्यभुवनं येन तमिति विरोधः, व्याप्तं ख्यातं भुवनमण्डले येन तमिति तत्समा-धानम् 'व्याप्तं ख्याते समाक्रान्ते' इति विश्वः।

आसन इति। आसने राजसिंहासने स्थितं निषण्णमपि धनुषि चापे निषण्णं स्थितमिति विरोधः, धनुषि विजयविश्वासिनमिति यद्वा धनुःसंज्ञके स्थितमिति परिहारः 'धनुः संज्ञा प्रियालाद्रौ' इति विश्वः।

उत्सादितेति। उत्सादितानि व्यापादितानि अशेषाणि समग्राणि द्विषन्तो रिपव एव इन्धनानि काष्ठानि येन तं तथाविधमपि ज्वलनप्रतापः प्रभाव एवानलो वह्निः यस्य तं तादृशमिति इन्धनाभावे कथं ज्वलनमिति विरोधः, ज्वलद् दीप्यत् सर्वत्र प्रबलभावेन वर्त्तमान इति तत्समाधानम्। शत्रुषु काष्ठत्वारोपः प्रतापे अनलत्वारोपस्य कारणमिति परम्परितरूपसङ्कीर्णो विरोधाभासः।

आयतेति। आयते विस्तीर्णे लोचने चक्षुषी यस्य तं तथाविधमपि सूक्ष्मेऽविपुले दर्शने लोचने यस्य तमिति विरोधः, सूक्ष्मे अध्यात्मविषये दर्शनं ज्ञानं यस्येति परिहारः। 'सूक्ष्मं स्यात्कैतवेऽध्यात्मे पुंस्यणौ

---

समान देखनेमें आ रहे हैं; सेवाके लिये उपस्थित दिग्वधूगणके समान वाराङ्गनागण समीवर्ती हो राजाको परिवेष्टित की हुई हैं, स्वच्छ मणिमयबद्धभूमिमें राजाके समस्त अङ्गोंका प्रतिविम्ब पर रहा है, इस लिए मालुम पड़ रहा है कि पतिदेवके प्रति अनुरागवश स्वयं पृथिवी देवी राजाको हृदयमें धारण कर रक्खी है; अन्यलोगोंको ऐसी राजलक्ष्मी न होनेसे असाधारण राजलक्ष्मी उनको आलिङ्गन की, हुई है असंख्य परिजनोंके बीच ये अद्वितीय हैं, अनेक हाथी और घोड़े आदि सैन्य सहायक रहते हुए भी संग्राममें केवल तलवार ही इनका सहायक है। राजा एकदेशस्थायी होते हुए भी समस्त भूमण्डल व्यापी हैं, आसन पर बैठकर भी धनुषमें ही विजयका विश्वास रखते हैं, शत्रुरूपी काष्ठगणके भस्म होने पर भी इनका प्रतापानल प्रज्वलित है, विस्तृतलोचन होने पर भी अध्यात्मविषयक सूक्ष्मदर्शी

---

१ सेवासङ्गताभिरिव। २ संक्रान्तप्रतिविम्बतया, संक्रान्तदेहप्रतिविम्बतया। ३ समालिङ्गितदेहम्।
४ आसनगतम्, आसनस्थितम्। ५ उत्सादितद्विषदिन्धनमपि।

सूक्ष्मदर्शनम्[1], महादोषमपि सकलगुणाधिष्ठानम्, कुपतिमपि कलत्रवल्लभम्[2], अविरत-प्रवृत्त-दानमप्यमदम्, अतिशुद्ध[3]-स्वभावमपि कृष्णचरितम्, अकरमपि हस्तस्थित-[4]सकल-भुवनतलं राजानमद्राक्षीत्।

आलोक्य च सा दूरस्थितैव प्रचलितरत्नवलयेन रक्त-कुवलयदल-कोमलेन पाणिना जर्जरितमुखभागां वेणुलतामादाय नरपतिप्रबोधनार्थं[5] सकृत् सभाकुट्टिममाजघान। येन सकलमेव तद् राजकम्[6] एकपदे वनकरियूथमिव तालशब्देन तेन वेणुलताध्वनिना[7] युग-पदावलितवदनमवनिपालमुखादाकृष्य चक्षुस्तदभिमुखमासीत्।

---

त्रिषु चालपके। 'दर्शनं नयन-स्वप्न-बुद्धि-धर्मोपलब्धिषु' ॥ इति विश्वः। महान् बहुः दोषोऽवगुणो यस्मिन् स तं तादृशमपि सकलगुणाधिष्ठानं समस्तगुणाश्रयमिति विरोधः, महान्तौ दीर्घौ बाहू यस्य तमिति परिहारः 'दोर्दोषा च भुजो बाहु'रिति धनञ्जयः। कुत्सितो निन्दितश्चासौ पतिर्भर्त्ता चेति कुपतिरेवम्भूतमपि कलत्रवल्लभं स्त्रीजनप्रियमिति विरोधः, कुः पृथिवी तस्याः पतिः स्वामीति परिहारः 'गोत्रा कुः पृथिवी पृथ्वी' इत्यमरः। अविरतं निरन्तरं प्रवृत्तं दानं मदजलं यस्य तमेवम्भूतमपि अमदं मदजलशून्यमिति विरोधः, अयञ्च विरोधो हस्तिसादृश्ये, अविरतं सन्ततं दानम् अर्थिभ्यो द्रव्यादिवितरणं यस्य तं तादृशमपि अमदं गर्वशून्यमिति तत्परिहारः। 'दानं गजमदे त्यागे पालनच्छेदशुद्धिषु' इति विश्वः, 'मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः' इति च मेदिनी। अत्यन्तमतिशयेन शुद्धः स्वच्छः स्वभावः प्रकृतिर्यस्य तं तथाविधमपि कृष्णं मलिनं चरितमाचारो यस्य तमिति विरोधः, कृष्णस्य वासुदेवस्य चरितमिव चरितं यस्य तमिति तत्समाधानम्। 'कृष्णः सत्यवतीपुत्रे वायसे केशवेऽर्जुने' इति विश्वमेदिन्यौ। न विद्यते करः पाणिर्यस्य तं तादृशमपि हस्ते करे स्थितं शासनेनाधीनं समग्रं भुवनतलं यस्य तमिति विरोधः, न विद्यते चक्रवर्तित्वेन नास्ति कर अन्यस्मै भागधेयः राजग्राह्यद्रव्याद्यर्पणमिति यावत् यस्य तमिति तत्समाधानम्। 'बलिः करो भागधेयः' इति कोशः। इहाशेषजनभोग्यतामित्यादिकेषु अकरमपीत्यन्तेषु द्वादशसु श्लेषेण विरोधपरिहारात् सर्वत्रैव विरोधाभासालङ्कारा बोध्याः।

आलोक्येति। आलोक्य राजानं दृष्ट्वा सा चण्डालकन्यका दूरस्थितैव चण्डालजातित्वान्नृपसन्निधौ गमनं नोचितमिति दविष्ठप्रदेश एव वर्तमाना प्रचलितं पूर्वावस्थितिप्रदेशात् किञ्चित् प्रकम्पितं रत्नवलयं मणिखचितकटकं यस्य तेन 'कटकं वलयोऽस्त्रियाम्' इत्यमरः, रक्तं लोहितं यत्कुवलयम् उत्पलं तद्वत् कोमलेन मृदुलेन। अनेन करस्य लक्षणोपेतत्वं व्यञ्जितम्। इह लुप्तोपमा। जर्जरितो जीर्णः मुखभाग अग्रभागो यस्याः सा तां तथोक्तां वेणुलतां वंशयष्टिम् आदाय गृहीत्वा नरपतेः राज्ञः ( शूद्रकस्य ) प्रतिबोधनार्थं स्वाभिमुखीकरणार्थं सभाकुट्टिमं परिषन्निबद्धभूमिं 'कुट्टिमोऽस्त्री निबद्धा भूः' इति कोशः, सकृद् बहुवारं पाणिना करेण आजघान आहतवती। येन आघातेन सकलं समग्रमेव तद्राजकं नृपतिसमूहः एकपदे तस्मिन्नेव क्षणे 'तत्क्षणैकपदे तुल्ये' इति हलायुधः। तालः कांस्यकरतालो वाद्यविशेषस्तस्य शब्देन तद्तुल्य-ध्वनिना वनकरिणां वन्यहस्तिनां यूथं समूह इव, तेन पूर्वोक्तेन वेणुलता वंशयष्टिस्तस्य ध्वनिना शब्देन युगपत् एककालम्, आवलितं परावर्तितं मुखम् आननं येन एवम्भूतम् अवनिपालमुखात् राजमुखात् आकृष्य

---

है, महाबाहु होनेके कारण समस्त गुणके आधार हैं, पृथिवीपति होनेसे समस्त भार्याओंके प्रिय हैं, निरन्तर दान देकर अहङ्कार रहित एवं अत्यन्त निर्मलस्वभाव हो कृष्णके सदृश सच्चरित्रवान् हैं, स्वयं सबके ऊपर शासन करनेसे दूसरेको कर ( खजाना ) नहीं देते हुए भी समग्र भूमण्डल इनके हाथमें है।

चाण्डालकन्या राजाको देखकर दूर रहकर ही, प्रचलित-रत्नवलयालङ्कृत स्वभावतः रक्तवर्ण एवं पद्मपत्रके सदृश कोमल करकमलमें एक जीर्णाग्र वंशदण्ड ग्रहणकर उसके द्वारा राजाको प्रबोध उत्पन्न करानेके लिये एकबार सभावेदिकाको आघात किया, जिससे उसी समय वे समस्त राजगण, करतलध्वनिसे वन्यहस्तिसमूहके समान उस वंशयष्टिके ध्वनिके तरफ एक समयमें ही परावर्तित मुख होकर राजाके मुखकी ओरसे नेत्रको हटाकर उस चाण्डालकन्याके सम्मुख हो गये।

---

१ सूक्ष्मदर्शिनम्। २ कलत्रवल्लभम्। ३ अत्यन्तशुद्ध। ४ हस्तस्थतभुवनतलम्। ५ प्रतिबोधनार्थम्। ६ राजन्यकम्। ७ क्वापि 'तेन वेणुलताध्वनिना' इति पाठो न विद्यते।

अवनिपतिस्तु 'दूरादालोकय' इत्यभिधाय प्रतीहार्य्या निर्दिश्यमानां तां वयःपरिणाम-शुभ्र-शिरसा रक्त-राजीवेक्षणापाङ्गेनानवरत-कृत-व्यायामतया यौवनापगमेऽप्यशिथिल-शरीरसन्धिना सत्यपि मातङ्गत्वे नातिनृशंसाकृतिना अनुगृहीता-र्यवेशेन[2] शुभ्र[3]-वाससा-पुरुषेणाधिष्ठितपुरोभागाम्, आकुलाकुल-काकपक्षधारिणा कनक-शलाका-निर्म्मितम-न्तर्गत-शुकप्रभाश्यामायमानं मरकतमयमिव पञ्जरमुद्वहता चाण्डालदारकेणानुगम्यमानाम् असुर-गृहीतामृतापहरण-कृत-कपट-पटु-विलासिनीवेशस्य श्यामतया भगवतो हरेरिवानु-

---

आकर्षणं विधाय चक्षुर्लोचनं तदभिमुखं चण्डालकन्यकायाः सम्मुखम् आसीत् अभवत्। आकस्मिकशब्द-विशेषश्रवणे तदाभिमुख्यं जनानां स्वाभाविकमेव । उपमालङ्कारश्च द्वितीयवाक्ये ।

अवनीति । अवनिपतिः राजा ( शूद्रकः ) अनिमिषलोचनः निमेषोन्मेषवर्जितनेत्रः तां चण्डालकन्यकां ददर्श अवलोकयामासेति दूरेणान्वयः। दूरादालोकय "हे चण्डालकन्ये ! त्वं दूराद् एव राजानं प्रेक्षस्व" नृपतेरेकान्तसमीपगमनमज्ञातस्वरूपायास्तवानुचितमित्याशयः। इत्यभिधाय इति कथयित्वा प्रतीहार्या द्वाररक्षाकारिण्या निर्दिश्यमानाम् 'इयं सा चण्डालकन्या' इति सभायां ज्ञाप्यमानाम् । वयसः परिणामेन वार्धक्येन शुभ्रं पक्वलोमतया श्वेतं शिरो मूर्द्धा यस्य स तेन, रक्तराजीववत् लोहितकमलवत् नेत्रापाङ्गौ नयन-प्रान्तौ यस्य स तेन । इह लुप्तोपमा । अनवरतं सततं कृतो विहितो व्यायामः परिश्रमतस्य भावस्तत्ता तया यौवनस्य तारुण्यस्य अपगमेऽपि व्यतीतेऽपि अशिथिला दृढाः शरीरस्य देहस्य सन्धयो धातूनामस्थ्यादीनाञ्च बन्धा यस्य स तेन । मातङ्गत्वे चण्डालत्वे सत्यपि विद्यमानत्वेऽपि नातिनृशंसा नातिक्रूरा अभयङ्करा आकृतिः स्वरूपं यस्य तेन, अनुगृहीत अङ्गीकृत आर्यवेशः सभ्यनेपथ्यं येन स तेन, शुभ्रवाससा धवलवस्त्रेण केनचित् पुरुषेण अधिष्ठित आश्रितः पुरो भागो यस्याः सा ताम् ।

आकुलेति । आकुलाकुलः इतस्ततः संलग्नः यः काकपक्षः शिखण्डकः तं धारयितुं शीलं यस्य तेन' "काकपक्षः शिखण्डकः" इत्यमरः 'सा बालानां काकपक्षः शिखण्डकशिखाण्डकौ' इति कोशः। कनक-शलाकाः सुवर्णशलाकाः ताभिः निर्मितं रचितमपि अन्तर्गतस्य मध्यस्थितस्य शुकस्य कीरपक्षिणः प्रभया कान्त्या श्यामायमानं श्यामवर्णमिवावलोक्यमानम्, अत एव मरकतमयमिव मरकतमणिजातमिव पञ्जरं पक्षिरक्षणस्थलम् उद्वहता धारयता, केनचित् चण्डालदारकेण अन्त्यजपुत्रेण । इह श्यामायमानमिति क्यङ्गतोपमा, मरकतमयमिवेति क्रियोत्प्रेक्षा। अनयोरङ्गाङ्गिभावेन सङ्करालङ्कारः ।

असुरेति । असुरैः राक्षसैः गृहीतं स्वायत्तीकृतं यद् अमृतं सुधा तस्या अपहरणे अपहृतौ कृतो विहितो कपटो व्याजपूर्णः पटुः प्रकटो विलासिनीवेशो मोहिनीस्त्रीस्वरूपो येन तस्य भगवतः ।

"उत्पत्तिं प्रलयञ्चैव भूतानामागतिंगतिम् । वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति ॥"

इत्युक्तलक्षणलक्षितस्य हरेः श्रीविष्णोः श्यामतया समानकृष्णवर्णतया 'अनुकुर्वतीमिव सादृश्यमनु-भवन्तीमिव विद्यमानाम् । इहानुकुर्वतीमिवेति क्रियोत्प्रेक्षा ।

---

'हे चण्डालकन्ये ! तुम दूर रहकर ही राजाका दर्शन करो' ऐसा कहकर प्रतीहारीने उसे राजसभाका परिचय करा दिया, उस समय महाराज शूद्रक अनिमिषलोचन ( एकटक दृष्टि ) से उस चण्डालकन्याको देखने लगे। एक पुराना (वृद्ध) आदमी उस चण्डालकन्याके सम्मुखमें अवस्थित था, वृद्धावस्था होनेके कारण उसका केशसमूह श्वेतवर्ण हो गया था, नेत्रका प्रान्तभाग कमलके सदृश रक्तवर्ण था, हर समय परिश्रम करनेसे बीतने पर भी उनके शरीरके सन्धिस्थान सब शिथिल नहीं हुए थे, एवं चण्डाल होने पर भी उसका रूप अत्यन्त कठिन नहीं था, पोशाकके कपड़े सभ्यके समान थे, इस तरह वह शुभ्रवर्ण एकवस्त्र पहना हुआ था। और उस चण्डालकन्याके पिछले भागमें एक चण्डाल बालक था, उसका केशसमूह इतस्ततः विक्षिप्त था, एवं हाथमें एक सुवर्णशलाका निर्मित पिंजरा लटकाये हुआ, था, उसके अन्दर शुक पक्षीके शरीर कान्तिसे उस पिंजरेके खाने श्याम वर्णके सदृश होनेसे मरकत ( नील ) मणि निर्मित प्रतीत होता था ।

वह चण्डालकन्या, अपनी श्यामलकान्तिद्वारा राक्षस गणसे गृहीत अमृत हरणके लिये मोहिनी मूर्त्तिधारी

---

१ नेत्रापाङ्गे । २ वेषेण । ३ धवल । ४ कपटविलासिनी,''वेषस्य ।

कुर्वतीम्, सञ्चारिणीमिवेन्द्रनीलमणिपुत्रिकाम्, आगुल्फावलम्बिना नीलकञ्चुकेनाच्छन्नशरीराम्, उपरि-रक्तांशुक-विरचितावगुण्ठनां नीलोत्पलस्थलीमिव निपतितसन्ध्यातपाम्, एक-कर्णासक्त-दन्तपत्रप्रभाधवलितकपोल-मण्डलाम् उद्यदिन्दुबिम्ब-च्छुरित-मुखीमिव विभावरीम्, आकपिल-गोरोचना-रचित-तिलक-तृतीय-लोचनाम् ईशानुचरित-किरातवेशामिव भवानीम्, उरःस्थल-निवास-संक्रान्त-नारायण-देहप्रभा-श्यामलितामिव श्रियम्, कुपित-हर-हुताशन-दह्यमान-मदन-धूम-मलिनीकृतामिव रतिम्, उन्मद-हलि-

पुरा क्षीरसागरमन्थनाद्बिसृतममृतं दैत्या देवाननादाय स्वयमेव गृहीतवन्तः, भगवान् विष्णुस्तु तन्निरीक्ष्यात्मनो मोहिनीस्वरूपं धृत्वा तान् प्रतारयन् देवेभ्यस्तदमृतं ददाविति भागवतीया कथा।

सञ्चारिणीमिति। सञ्चारिणीं गमनशीलाम् इन्द्रनीलमणिपुत्रिकां जङ्गमप्राणिरूपां नीलकान्तमणिनिर्मितपुत्तलिकामिव विद्यमानाम्। इह पुत्तलिकात्वजात्युत्प्रेक्षणात् जात्युत्प्रेक्षा।

आगुल्फेति। आगुल्फावलम्बिना घुटिकापर्यन्तपातिना नीलकञ्चुकेन नीलवर्णकूर्पासकेन आच्छन्नम् आवृतं शरीरं गात्रं यस्याः सा ताम् उपरि ऊर्ध्वप्रदेशे शिरसीत्यर्थः, रक्तांशुकेन लोहितवर्णवस्त्रेण विरचितं कृतम् अवगुण्ठनं मुखाच्छादनं यया सा ताम्, अत एव निपतितः उपरि प्राप्तः सन्ध्याकालीन आतपः सूर्यकिरणो यस्यां ताम् एतादृशीं नीलोत्पलस्थलीमिव कुवलयकृत्रिमभूमिमिव। इह पदार्थहेतुककाव्यलिङ्गालङ्कारेणोपमालङ्कारः सङ्कीर्णो भवति।

एकेति—एकस्मिन् कर्णे श्रोत्रे अवसक्तं लग्नं यत् दन्तपत्रं कर्णाभरणविशेषस्तस्य प्रभया कान्त्या धवलितं श्वेतीकृतं कपोलमण्डलं गण्डप्रदेशो यस्याः सा ताम्, अत एव उद्यत् उदयं प्राप्नुवन् यः इन्दुश्चन्द्रस्तस्य किरणैः रश्मिभिः छुरितम् अन्धकारनिवृत्त्या सप्रकाशं मुखम् आद्यभागः आननञ्च यस्याः सा तां तादृशीं विभावरीं रात्रिमिव विद्यमानामिति शेषः। एतेन रात्रिनायकयोर्दन्तपत्रचन्द्रयोश्च तुल्यत्वं प्रदर्शितम्। इहापि पूर्ववदेवालङ्कारः।

आकपिलेति। आकपिलया ईषत्पीतरक्तया गोरोचनया गोपित्तेन रचितं निर्मितं यत्तिलकं पुण्ड्रं तदेव तृतीयं लोचनं नयनं यस्याः सा ताम्, अत एव ईशस्य शम्भोः अनुचरिता पश्चाद्गता चाऽसौ किरातवेषा भिल्लनेपथ्यं यया सैवम्भूतां भवानीं पार्वतीमिव शिववत्पुरो वृद्धपुरुषावस्थानादित्याशयः। उक्तसङ्करः।

पुरा किल श्रीकृष्णप्रेरितः पार्थः पाशुपतास्त्रप्राप्तये तपस्तप्तुं गतः, ततः, वराहरूपेण तं जिघांसया यान्तं मूकदानवं मारयितुं भगवान् शिवः किरातवेशं गृहीतवान् तदनु तमेव वेशं धारयित्वा पार्वत्यपि शिवमनुययाविति महाभारतीया कथा।

उरःस्थलेति। उरःस्थले वक्षसि निवासेन निवसनेन संक्रान्ता प्रतिबिम्बिता या नारायणस्य विष्णोः देहप्रभा शरीरकान्तिः तया श्यामलितां श्यामत्वं प्राप्तां श्रियं लक्ष्मीमिव। इह लक्ष्मीचण्डालकन्ययोः साम्यध्वननादुपमालङ्कारः, तथा श्रियः स्वीयगौरकान्तिपरित्यागेन भगवतो नारायणस्य श्यामलगुणादानात् तद्गुणालङ्कारः, अनयोरङ्गाङ्गिभावेन सङ्करः।

कुपित इति। कुपितः धैर्यभङ्गकरणेन क्रोधं प्राप्तो यो हरः शङ्करः तस्य हुताशनेन तृतीयलोचनवह्निना दह्यमानः ज्वाल्यमानो यो मदनः कामदेवस्तस्य धूमेन दहनकेतुना मलिनीकृतां मालिन्यमुपगतां रतिं काम-

भगवान् विष्णुका अनुकरण करती थी, वह एक सञ्चरण करने वाली इन्द्रनीलमणिरचित पुत्तलिकाके समान प्रतीत होती थी, गुल्फ (घुठना) पर्यन्त धारण किया हुआ नीलवर्ण कञ्चुकसे उसका शरीर ढँका हुआ था, एवं ऊपर भागमें रक्तवस्त्रका अवगुण्ठन (घूंघट) था, इस लिये सन्ध्याकालमें सूर्यके किरण पतित हुए नीलकमलमय पृथिवीके समान वह देखनेमें आती थी; एक कानमें संलग्न हस्तिदन्तनिर्मित आभूषणके किरणसे उसका कपोलस्थल श्वेतवर्ण हो गया था, इस लिये उदयमान चन्द्रमण्डल-शोभित रात्रिके समान वह शोभाको पा रही थी; वह पिङ्गलवर्ण गोरोचनाद्वारा निर्मित तृतीय नेत्रके समान भालदेशमें तिलक चित्रित की थी, इससे शङ्करके पीछे चलनेवाली व्याधरूपधारिणी पार्वतीके समान वह देखनेमें आती थी, नारायणके वक्षःस्थलमें वास करनेसे उनके शरीरकान्ति संलग्न होनेसे श्यामलित लक्ष्मीके समान, क्रुद्ध महादेवके तृतीय लोचनाग्निसे दह्यमान कामदेवके धूमसे मलिनताप्राप्त रति (कामपत्नी) के समान, एवं मदमत्त बलरामके लाङ्गल (हल) द्वारा आकर्षण भयसे

१ सञ्चारिणीमिन्द्र। २ ···पुत्रिकामिव। ३ गुल्फावलम्बिनील। ४ अवसक्त, मुक्त। ५ उद्यदिन्दुकिरणच्छुरित। ६ ईशानरञ्जनानुरचित, ईशानुरचित, ईशानाचरितानुरचित। ७ श्यामलतां। ८ उन्मत्त।

हलाकर्षण-भय-पलायितामिव कालिन्दीम्, अतिबहल-पिण्डालक्तक-रस-राग-पल्लवित-पादपङ्कजाम्, अचिर-मृदित-महिषासुर-रुधिर-रक्त-चरणामिव कात्यायनीम्, आलोहिताङ्गुलि-प्रभा-पाटलित-नख-मयूखाम् अतिकठिन-मणिकुट्टिम-स्पर्शमसहमानां क्षितितले पल्लवभङ्गानिव निधाय सञ्चरन्तीम्, आपिञ्जरेणोत्सर्पिणा नूपुरमणीनां प्रभाजालेन रञ्जित-शरीरतया पावकेनेव भगवता रूपैक-पक्षपातिना प्रजापतिमप्रमाणीकुर्वता जातिसंशोधनार्थ-

---

परीमिव विद्यमानाम्। इहोक्तविधभ्रमेण मलिनीकरणसम्बन्धाऽभावेऽपि तत्सम्बन्धकथनादतिशयोक्तिरलङ्कारः, उपमा च स्पष्टैवेत्यनयोर्मिथः अङ्गाङ्गिभावेन सङ्करात् सङ्करालङ्कारः।

पुरा किल तारकासुरवधायोद्यता देवा ब्रह्माणं ययुः। पार्वत्यामुद्भूतः कार्त्तिकेयोऽस्य निहन्ता नान्य इति विवाहाय शिवं प्रसादनीया इति ततः श्रुत्वा तत्र कस्य साफल्यम्भवेदिति वितर्कयन्तो मदनं नियुक्तवन्तः। देवगणानुरोधेन मदनोऽपि पार्वतीसमक्षं सम्मोहनास्त्रेण महेश्वरस्य धैर्यमपहरन् तदीयभाललोचनवह्निना दग्ध इति शिवपुराणीया कथा।

उन्मदेति। उन्मदस्य प्रबलाहङ्कारिणो हलिनो बलभद्रस्य हलेन लाङ्गलेन यदाकर्षणमाकृष्टिस्तस्माद् भयेन त्रासेन पलायितां विलयं गतां कालिन्दीं यमुनामिव विद्यमानाम्। उपमालङ्कारः

पुरा मद्यपानगर्वितो बलभद्रः जलक्रीडानिमित्तं यमुनामाहूतवान् यदा हि नागतवती तदा हलाग्रेण तामाचकर्ष सा च तदान्तर्हितेति श्रीमद्भागवतीया कथा।

अतिबहलेति। अतिबहलोऽतिप्रचुरो यः पिण्डालक्तकरसः पिण्डीभूतालक्तकद्रवस्तस्य रागेण लौहित्येन पल्लविते अभिनवकिसलयवदाचरिते पादपङ्कजे चरणकमले यस्याः सा तां तादृशीम्, अत एव अचिरमृदितस्य तत्कालच्छिन्नकण्ठस्य महिषासुरस्य तन्नामकजगद्द्रुहिणो राक्षसस्य रुधिरेण शोणितेन रक्तौ रक्तवर्णौ चरणौ पादौ यस्यास्तां कात्यायनीं दुर्गामिव विद्यमानाम्। इह रुधिररक्तपदयोरर्थस्य श्रवणमात्रेणैव पुनरुक्तवदवगमाच्छिन्नाकारपदगतत्वाच्च पुनरुक्तवदाभासोऽलङ्कारः, उपमा च अनयोरेकाश्रयानुप्रवेशरूपः सङ्करालङ्कारः।

पुरा किल ब्रह्मणो लब्धवरं महिषासुरं जगदुत्पीडयन्तं भगवती दुर्गा स्वयमाविर्भूयासिना कर्त्तयामासेति मार्कण्डेयपुराणान्तर्गतसप्तशतीया कथा।

आलोहितेति। आलोहिता अतिरक्तवर्णा या अङ्गुलयः करशाखाः तासां प्रभाभिः कान्तिभिः पाटलिताः श्वेतरक्तीकृताः 'श्वेतरक्तस्तु पाटलः' इत्यमरः, नखमयूखाः पुनर्भवरश्मयो यस्यास्ताम्, तथा अतिकठिनस्य अतिकर्कशस्य मणिकुट्टिमस्य मणिमयबद्धभुवः स्पर्शं संश्लेषम् असहमानाम् अक्षममानाम् अतिमृदुलचरणत्वादिति भावः, अत एव क्षितितले पृथिवीतले पल्लवभङ्गान् किसलयखण्डान् "पल्लवोऽस्त्री किसलयम्" इत्यमरः, निधायेव स्थापयित्वेव सञ्चरन्तीं गच्छन्तीम्, एवं सति पादव्यथा न भवेदित्याशयः। इह निधायेवेति क्रियोत्प्रेक्षणात्क्रियोत्प्रेक्षालङ्कारः। तथा च तथाविधनखकिरणानामेव किसलयखण्डसादृश्यप्रतीतिरिति ध्वनितम्।

आपिञ्जरेणेति। आपिञ्जरेण ईषत्पीतरक्तेन "पीतरक्तस्तु पिञ्जरः" इत्यभिधानचिन्तामणिः, उत्सर्पिणा ऊर्ध्वगामिना नूपुरमणीनां हंसकरत्नानां प्रभाजालेन कान्तिसमूहेन रञ्जितशरीरतया शोभितदेहतया हेतुना रूपैकपक्षपातिना केवलसौन्दर्यादरविधायिना, अत एव प्रजापतिं सृष्टिविधातारं ब्रह्माणम् अप्रमाणीकुर्वता "त्वमेवंविधां रूपवतीं निर्मायापि अस्पृश्याम् अन्त्यजजातिमेव कृतवान् तदहमेनां शुद्धां करोमि" इत्थमनिश्चितकर्तृताकं विद्धता, विधातृकृतस्यान्यथाकरणाकाङ्क्षितत्वादित्याशयः, भगवता माहात्म्यवता पावकेन

---

भगी हुई यमुनाके समान वह चण्डालकन्या देखनेमें आती थी; अतिबहुल और घन अलक्तक (आलता) रसके रक्तिमासे उसका चरणकमल नवीन पल्लवके समान रक्तवर्ण हो गया था, उससे वह चण्डालकन्या, तत्कालनिहत महिषासुरके रुधिरसे शोभितचरणा दुर्गाके समान देखनेमें आती थी; अतिरक्तवर्ण अङ्गुलियोंकी कान्ति उसके चरणनखसमूहको श्वेतरक्तवर्ण कर दिया। और अत्यन्त कोमल होनेसे अत्यन्त कठिन मणिमय भूमिपर पादक्षेप करनेमें असमर्थ हो ॥ मानो पृथिवीतलमें अभिनवपल्लवसमूहको रखकर उसके ऊपरसे चलती थी; नूपुरस्थ मणिसमूहके ईषत् पिङ्गलवर्ण और ऊर्ध्वगामी किरण समूहसे उसका समस्त शरीर रञ्जित हो गया था, अतएव एकमात्र रूपके पक्षपाती भगवान् अग्निदेव, जो विधाता हीनजातिमें इसे उत्पन्न कर अग्राह्य बना दिया उसे अप्रमाणित करते हुए

---

१ हलापकर्षणप्रपलायितां। २ यमुनाम्। ३ प्रभाजालकेनानुरञ्जित...। ४ रूप एव पक्षपातिना।

मालिङ्गितदेहाम्, अनङ्ग-वारण शिरोनक्षत्र-मालायमानेन रोमराजि-लतालवालकेन मेखलादाम्ना परिगतजघनस्थलाम्, अतिस्थूल-मुक्ताफल-घटितेन शुचिना हारेण गङ्गास्रोतसेव कालिन्दीशङ्कया कृतकण्ठग्रहाम्, शरदमिव विकसित-पुण्डरीक-लोचनाम्, प्रावृषमिव घनकेशजालाम्, मलयमेखलामिव चन्दनपल्लवावतंसाम्, नक्षत्रमालामिव चित्र-श्रवणा-भरणा-भूषिताम्, श्रियमिव हस्तस्थित-कमलशोभाम्, मूर्च्छामिव मनोहारिणीम्,

वह्निना जातिशोधनार्थम् अन्त्यजत्वेनास्पृश्यायास्तस्या शुद्धित्वसम्पादनार्थमित्यर्थः, आलिङ्गितदेहाम् आश्लेषितशरीरामिव विद्यमानाम् अपवित्रं वस्तु वह्निना पवित्रं भवतीति धर्मशास्त्रे पैठीनसिवचनम्—'सर्वमग्नौ प्रतप्तं शुध्यते' इति ऊर्ध्वप्रसारी नूपुरमणीनां मयूखसमूहः सर्वतः शरीरपरिवेष्टनाद् वह्निवत् प्रतीयमान आसीदिति तात्पर्यम्। इह नूपुरमणिप्रभावह्न्योः परस्परमुपमानोपमेयभावः प्रतीयते इत्युपमा उत्प्रेक्षालङ्कारश्च स्फुट एव तथाचानयोरङ्गाङ्गिभावात्सङ्करालङ्कारः।

अनङ्गेति। अनङ्गस्य कामस्य "कन्दर्पो दर्पकोऽनङ्गः कामः" इत्यमरः, यो वारणो हस्ती तस्य शिरसि मूर्ध्नि या नक्षत्रमाला सप्तविंशतिसंख्यकमुक्ताग्रथितमाला तद्वदाचरता कामसम्बन्धितया कामोद्दीपकत्वादित्याशयः। "सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः" इत्यमरः, रोमराजिः नाभिप्रदेशात् ऋजुभावेनोर्ध्वगामिनी या लोमपङ्क्तिः "वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः" इत्यमरः, सैव लतावल्ली तस्या आलवालं मूले जलदानाय आवापः स्वल्पजलाधर इति यावत् "स्यादालवालमावालमावापः" इत्यमरः, तत्स्वरूपेण रसनादाम्ना कटिमेखलाबन्धनरज्जुना परिगतं समन्ताद् व्याप्तं जघनस्थलं कटिपुरोभागो यस्याः सा तां तादृशीम्, 'कट्याः क्लीवे तु जघनं पुरः' इत्यमरः। इह रोमराजौ लतात्वारोपः रसनादाम्नि आलवालत्वारोपे निमित्तमिति परम्परितरूपकमलङ्कारः क्यङ्गतोपमया सङ्कीर्णः।

अतिस्थूलेति। अतिस्थूलानि अतिबृहतानि यानि मुक्ताफलानि मौक्तिकानि तैः घटितेन निष्पादितेन शुचिना श्वेतवर्णेन हारेण चतुःषष्टिलतेन 'चतुःषष्टिलतो हारः' इत्यमरः, कालिन्दीशङ्कया चण्डालकन्यकायाः श्यामत्वात् यमुनाभ्रान्त्या गङ्गास्रोतसेव जाह्नवीप्रवाहेणेव, कृतः कण्ठग्रहो गलसंश्लेषः समीपाश्रयश्च यस्यास्तां तादृशीम्। इह चण्डालकन्यायां तुल्यश्यामत्वेन कालिन्दीभ्रमाद् भ्रान्तिमानलङ्कारः, हारे गङ्गाप्रवाहोत्प्रेक्षणाद्द्रव्योत्प्रेक्षा चोभयोः परस्परमङ्गाङ्गिभावेन सङ्करात् सङ्करालङ्कारः।

शरदमिवेति। विकसिते विस्फारिते पुण्डरीके सिताम्भोजद्वयमिव 'पुण्डरीकं सिताम्भोजम्' इत्यमरः, लोचने नयने यस्यास्ताम्, अतएव शरदिव घनात्ययमिव तत्र पक्षे विकसितानि प्रस्फुटितानि पुण्डरीकाणि लोचनानि चक्षूंषीव यस्यास्तां तादृशीम्।

प्रावृषमिति। प्रावृषं वर्षासमयमिव, घनाः सान्द्राः ये केशाः शिरोरुहास्तेषां जालानि समूहा यस्यास्ताम्, प्रावृट् पक्षे तु—घना मेघाः केशजालानि यस्यां ताम्।

मलयेति। मलयस्य तदाख्यपर्वतस्य मेखलां मध्यभागमिव, चन्दनस्य पल्लवाः किसलयानि तेषामवतंसा भूषणानि यस्यास्ताम्, पक्षे-चन्दनपल्लवास्त एव अवतंसः शेखरो यस्यास्ताम्।

नक्षत्रेति। नक्षत्रमालामिव तारकापङ्क्तिमिव, चित्रैर्विविधप्रकारैः श्रवणाभरणैः कर्णभूषणैः भूषितां शोभिताम्, पक्षे—चित्राश्रवणाभरणीसंज्ञकैर्नक्षत्रविशेषैर्भूषिताम्।

श्रियमिति। श्रियं लक्ष्मीमिव हस्ते पाणितले स्थिता न्यस्ता कमलस्य किञ्जल्कस्य शोभा श्रीर्यस्या

शोधन करनेके निमित्त मानो समस्त देह में आलिङ्गन कर रहे थे, कन्दर्पहस्तीके मस्तकस्थित मुक्तामालाके समान एवं लोमपंक्तिरूप लताके आलवाल (कियारी) स्वरूप काञ्चीदाम (करधनी) से उसका नितम्बस्थल (कमर) परिवेष्टित था; बड़ी बड़ी मोतियोंसे बनाया हुआ श्वेतवर्ण एक छड़ हार उसके कण्ठदेश (गले) में लम्बित था, अतएव प्रतीत हो रहा था कि, यमुनाजीके भ्रमसे गङ्गाप्रवाह मिलकर इसका कण्ठावलम्बन किया हो; शरत्समयमें जिसके नेत्रके समान श्वेतकमल विकसित होता है, चण्डाल कन्याकी भी श्वेतकमलके समान लोचनयुगल विकसित था; वर्षाकालमें जिस तरह ऊपर भागमें केशसमूहके समान श्यामवर्ण मेघपंक्ति उदित होती है, चण्डाल कन्याके उसी तरह मस्तकमें सघन केशसमूह उत्पन्न था; मलयाचलके मध्यस्थानमें जैसे चन्दनपल्लव शिरोभूषण रहता है वैसे चण्डालकन्याके चन्दनपल्लवद्वारा मस्तकभूषण बनाया हुआ था; चित्रा, श्रवणा और भरणी नक्षत्रसे जिस तरह नक्षत्रपंक्ति अलंकृत होती है, चण्डालकन्या भी उसी प्रकार विचित्र कर्णभूषणसे अलंकृत थी, करतलमें कमल रहनेसे

१ रसनादाम्ना परिगतजघनाम्। २ शुचिहारेण। ३ मनोहराम्।

अरण्यभूमिमिव अक्षत-रूपसम्पन्नाम्, दिव्ययोषितामिवाकुलीनाम्, निद्रामिव लोचनग्राहिणीम्, अरण्यकमलिनीमिव मातङ्गकुलदूषिताम्, अमूर्त्तामिव स्पर्शवर्जिताम्, आलेख्यगतामिव दर्शनमात्रफलाम्, मधुमास-कुसुम-समृद्धिमिव अजातिम्, अनङ्ग-कुसुम-चाप-

---

सा ताम्, पक्षे—हस्ते करे स्थितं यत्कमलं पद्मं तेन शोभा यस्याः सा ताम्।

मूर्च्छामिति। मूर्च्छां मोहमिव, मनोहारिणीं सौन्दर्यातिशयेन हृदयाकर्षिणीम्, पक्षे—चेतनालोपकरणेन मनोवृत्तिविध्वंसिनीम्।

अरण्येति। अरण्यभूमिं काननभुवमिव 'अटव्यरण्यं विपिनं गहनं काननं वनम्' इत्यमरः, अक्षतं केनाऽप्यसम्भुक्तं यद् रूपं लावण्यं तेन सम्पन्नां संयुक्ताम्, पक्षे—अक्षतरुभिः रुद्राक्षवृक्षैः यद्वा विभीतकवृक्षैः उपसम्पन्नां संयुक्ताम् "रुद्राक्षे रावणी सर्पे विभीतकतरावपि" इति हैमः।

दिव्येति। दिव्या स्वर्गलोकसम्बन्धिनी या योषित् स्त्री तामिव, अकुलीनाम् अन्त्यजत्वान्नीचकुलोत्पन्नाम्, पक्षे—कौ पृथिव्यां लीना स्थिता या भवति सा कुलीना एवं रूपा या न भवतीत्यकुलीना ताम्, पृथिवीतलस्पर्शाविधायिनीमित्यर्थः। देवयोनीनां पृथिवीतले स्पर्शो न भवतीति पौराणिकाः।

निद्रामिति। निद्रां प्रमीलामिव, लोचनग्राहिणीं सौन्दर्यातिशयेन कामुकानां नेत्राकर्षिणीम्, पक्षे—अक्षिसंकोचविधानेन निमेषोन्मेषावरोधिनीम्।

अरण्येति। अरण्यकमलिनीं वनपद्मिनीमिव, मातङ्गकुलेन चण्डालान्वयेन तत्कुलोत्पन्नत्वेनेत्यर्थः, दूषितां निन्दिताम्, पक्षे—मातङ्गकुलेन हस्तिसमूहेन दूषितां विमथिताम्। 'मातङ्गः स्वपचे गजे' इति मे०।

अमूर्त्तामिति। अमूर्त्ता इयत्तावच्छिन्नपरिमाणरहिता बुद्धिः तामिव, स्पर्शवर्जितां शरीरस्पर्शत्यक्ताम्—

दिवाकीर्त्तिमुदक्यां च पतितं सूतिकां तथा। शवं तत्स्पृष्टिनञ्चैव स्पृष्ट्वा स्नानेन शुद्ध्यति॥

इति मनुवचनादन्त्यजस्पर्शे स्नानप्रतिपादनादित्याशयः। पक्षे तु—स्पर्शस्त्वगिन्द्रियग्राह्यो गुणस्तेन वर्जितां शून्यां वैशेषिकमते चतुर्विंशतिगुणेषु बुद्धेरपि पाठाद् गुणत्वेन गुणादीनां निर्गुणत्वान्निष्क्रियत्वाच्चेत्याशयः।

आलेख्यगतामिति। आलेख्यगतां चित्रस्थितां पुत्रिकामिव दर्शनमात्रं चण्डालत्वेन सम्भोगाभावात् केवलावलोकनमेव फलं प्रयोजनं यस्यास्ताम्, पक्षे आकृत्यभावेन तत्संश्लेषासम्भवाद् दर्शनमात्रफलाम्।

मधुमासेति। मधुमासस्य वसन्तसमयस्य कुसुमसमृद्धिं पुष्पसम्पत्तिमिव, अजातिं न विद्यते मन्वादिपरिगणितब्राह्मणत्वादिर्यस्यां सा ताम्, तथा च—

ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः। चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः॥

इति मनुनोक्तत्वादन्त्यजादीनां जातिहीनत्वमेव प्रतीयते। पक्षे न विद्यते जातिर्मालती यस्यां सा ताम्। 'न स्याज्जाती वसन्ते' इत्यादिना साहित्यदर्पणादिषु श्रुमे वसन्ते मालतीपुष्पस्य वर्णनमप्रसिद्धम्। "जातिश्छन्दसि सामान्ये मालत्यां गोत्रजन्मनोः" इति मेदिनी।

अनङ्गकुसुमेति। अनङ्गस्य कन्दर्पस्य 'कन्दर्पो दर्पकोऽनङ्गः' इत्यमरः, कुसुमचापस्य पुष्पधनुषो या लेखा लता तामिव, मुष्टिना संपीडिताङ्गुलिना "सम्पीडिताङ्गुलिर्मुष्टिः" इति हलायुधः, ग्राह्यो ग्रहीतुं शक्यः मध्य कटिदेशो मध्यप्रदेशश्च यस्याः सा ताम्। अनेन कटिदेशस्यात्यन्तकार्श्यमतिमृदुलत्वञ्च प्रत्याय्यते।

---

लक्ष्मीदेवी जिस प्रकार शोभा प्राप्त करती थी, हस्ततलमें कमलचिह्न रहनेसे चण्डालकन्या भी उसी तरह शोभाको प्राप्त करती थी, और वह मूर्च्छाके समान मनोहारिणी थी, वनभूमिमें जिस प्रकार अक्षत (बहेड़ा) का वृक्ष रहता है उसी प्रकार वह अक्षत रूपसम्पन्न थी, स्वर्गमें रहनेवाली सुन्दरीको जिस प्रकार भूतलस्पर्श नहीं होता है, चण्डालदारिका भी उसी प्रकार सत्कुलमें उत्पन्न नहीं थी, (इसलिये सत्पुरुषसे उसे स्पर्श नहीं था) निद्रा जिस प्रकार नयनवृत्तिको रोकती है, उसी प्रकार वह कामियोंका लोचनाकर्षण करती थी; वनोत्पन्न कमलिनी जिस प्रकार हस्तिसमूहके मर्दनसे दूषित होती है, उसी प्रकार वह चण्डालवंशमें उत्पन्न होनेसे दूषित थी; स्वरूपरहित बुद्धिके समान उसका स्पर्श सम्भव नहीं था, विचित्र पुत्तलिकाके समान उसका दर्शनमात्र ही फल था; चैत्रमासमें उत्पन्न पुष्पसमूहके मध्यमें जिस प्रकार जाती (मालती) पुष्प नहीं होता, उसी तरह उसमें कोई जाति नहीं थी; कामदेवके कुसुममय धनुषके समान उस का मध्यभाग मुष्टि (मुट्ठी) से ग्रहण किया जाता था; कुबेरकी सम्पत्ति

---

१ क्वापि 'अक्षत' पदं न विद्यते। क्वचित्त्व अत्यादृतबहुशोभिरूपाम् इति पाठो विद्यते। २ विजातिम्।

लेखामिव मुष्टिग्राह्यमध्याम्, यक्षाधिपलक्ष्मीमिवालकोद्भासिनीम्, अचिरोपरूढयौवनाम्[1], अतिशयरूपाकृतिम्, अनिमिष[2]-लोचनो ददर्श। दृष्ट्वा च[3] तां समुपजात[4] विस्मयस्याभून्मनसि महीपतेः—"अहो! विधातुरस्थाने रूप[5]-निष्पादनप्रयत्नः। तथाहि, यदि नामेयमात्मरूपोपहसिताशेषरूपसम्पदुत्पादिता, किमर्थमपगत-स्पर्श-सम्भोग-सुखे कृतं कुले जन्म[6]।

मन्ये च 'मातङ्ग-जाति-स्पर्श-दोष-भयादस्पृशतेयमुत्पादिता[7] प्रजापतिना, अन्यथा कथमियमक्लिष्टता लावण्यस्य। नहि[8] करतल स्पर्श-क्लेशितानामवयवानामीदृशी भवति कान्तिः।

---

यक्षाधिपेति। यक्षाधिपस्य गुह्यकेश्वरस्य कुबेरस्येत्यर्थः, लक्ष्मी सम्पत् तामिव, अलकैश्चूर्णकुन्तलैः उद्भासते शोभते इत्येवंशीला या सा ताम्, पक्षे—अलकायां तन्नामिकायां पुर्याम् उद्भासते या सा ताम्।

इह 'शरदमिव' इत्यारभ्य 'यक्षाधिपलक्ष्मीमिव' इत्यन्तं पूर्णोपमालङ्कारः। केचित्तु श्लेषोपमां प्रतिपादयन्ति।

अचिरेति। अचिरं शीघ्रम् उपारूढम् उपगतं यौवनं तारुण्यं यस्याः सा ताम्, सञ्जातयौवनामित्यर्थः। अतिशयं बाहुल्यं तेन रूपं लावण्यं यस्याः सा एवम्भूता आकृतिः स्वरूपं यस्याः सा ताम्।

अनिमिषेति। अनिमिषे निमेषोन्मेषवर्जिते लोचने नयने यस्यैवम्भूतो राजा ददर्श अवलोकयामास। अत्यन्तसुधास्पदं जनयन्त्यपि वर्णनेयं वास्तविकं किञ्चित् प्रकृतसन्दर्भे चोपयोगाभावात् सहृदयहृदयावर्जनाय न भवतीति सहृदयैरेव विचारणीयम्।

दृष्ट्वेति। दृष्ट्वा अवलोक्य च तां चण्डालकन्यकाम्, जातः उत्पन्नः विस्मयः आश्चर्यं यस्यैवम्भूतस्य महीपतेः शूद्रकस्य राज्ञः, मनसि चित्ते (एवं वृत्तिः) अभूत् उत्पन्ना। तामेव मनोवृत्तिमुपपादयति—अहो! इति। अहो! इति वितर्के 'आहो उताहो किमुत' इत्यमरः। विधातुर्ब्रह्मणः अस्थाने अपात्रे सौन्दर्यस्य अद्भुतरूपस्य निष्पादने निर्माणे प्रयत्न आयासः। अथ स्पष्टीकरोति—तथाहीत्यादिना। नामेति मृदुलामन्त्रणे। यदि वात्मरूपेण स्वीयसौन्दर्येण उपहसिता न्यक्कृता अशेषा समग्रा रूपसम्पत् सौन्दर्यसमृद्धिः यया सा तादृशी, इयं चण्डालकन्यका उत्पादिता निर्मिता, (तर्हि) किमर्थं किन्निमित्तम्, अपगते दूरीभूते स्पर्शसम्भोगसुखे संश्लेषसुरतसुखे यस्मात् एवम्भूते कुले अन्त्यजवंशे जन्म उत्पत्तिः कृतं विहितम् तथा च यथेयं सौन्दर्यराशिर्विधिना निर्मिता तथा उच्चकुले जन्मकरणमपि योग्यमासीदित्यभिप्रायः।

राजा एवं विमृश्य निश्चिनोति—मन्ये इति। अत्राहमित्यध्याहार्यः मातङ्गजातेः चाण्डालगोत्रस्य "मातङ्गः श्वपचे गज" इति मेदिनी 'जातिश्छन्दसि सामान्ये मालत्यां गोत्रजन्मनोः' इति विश्वः, 'जातिः स्त्री गोत्रजन्मनोः' इति मेदिनी च, स्पर्शेण संश्लेषेण (जनितः यः) दोषः अपवित्रता तस्माद् यद्भयं त्रासः तस्मात्, अस्पृशता अस्या देहस्पर्शमकुर्वता प्रजापतिना ब्रह्मणा, इयं चण्डालकन्यका, उत्पादिता मरीच्यादिसप्तर्षिवन्मनःसङ्कल्पमात्रेण निष्पादिता इति (अहं) मन्ये जाने इत्यर्थः। अन्यथा उक्तवैपरीत्ये स्पर्शयोग्यत्वे सतीति भावः, इयमेवम्भूता, लावण्यस्य सौन्दर्यस्य अक्लिष्टता अक्षतता कथं स्यात्? कथमपि नेत्यर्थः। एतदेवोपपादयति—न हीत्यादिना। करतलस्पर्शक्लेशितानां पाणितलसंश्लेषमर्दितानाम् अवयवानां स्तनादीनाम्, ईदृशी एवम्भूता, कान्तिः कमनीयता, न हि भवति न स्यात्, अपकमृन्मयभाजनमिव क्षुण्णता स्यादित्यभिप्रायः।

---

जिस प्रकार अलका नगरीसे सुशोभित उसी प्रकार वह कुन्तलसमूहसे सुशोभित थी, इस प्रकार वह नवयुवती और अत्यन्तसुन्दरी थी।

उसे देखकर राजाको आश्चर्य हुआ और वे मनही मन भावना करने लगे 'क्या आश्चर्य! विधाता अपात्रमें सौन्दर्य बनानेका उद्योग किया है, कारण इसके सौन्दर्यके समीप जगत्की सारी रूपसम्पत्ति तिरस्कृत हो गई है, अत एव विधाता यदि इसे ऐसा रूप बनाकर सृष्टि किया, तो स्पर्श और सम्भोगसुखसे रहित चण्डाल वंशमें उत्पन्न क्यों किया?'।

मैं मानता हूँ कि—'विधाता चण्डालजातिका स्पर्श दोषके भयसे स्पर्श नहीं करके इसको बनाया है, नहीं तो इसके लावण्यका यह रूप अक्षुण्ण कैसे रहता? कारण, करस्पर्श–पीडित अङ्गोंकी ऐसी रमणीयता हो नहीं सकती।

---

१ उपारूढ॰॰॰। २ अनिमेष॰॰॰। ३ क्वापि 'दृष्ट्वा च ताम्' इति पाठो नोपलभ्यते। ४ जात॰॰॰। ५ सौन्दर्य॰॰॰रूपनिष्पादनप्रयत्नः। ६ अस्या जन्म। ७ मनसोत्पादिता। ८ तथाहि।

सर्वथा धिग्विधातारम्[1] असदृशासंयोगकारिणम्। अतिमनोहराकृतिरपि[2] क्रूरजातितया[3] येनेयमसुरश्रीरिव सतत-निन्दित-सुरता रमणीयाऽप्युद्वेजयति' इति।

एवमादि चिन्तयन्तमेव राजानमीषदवगलित-कर्णपल्लवावतंसा प्रगल्भवनितेव कन्यका प्रणनाम।

कृतप्रणामायाञ्च तस्यां मणिकुट्टिमोपविष्टायाम्, स पुरुषस्तं विहङ्गममादाय[4] पञ्जरगत-मेवं[5] किञ्चिदुपसृत्य राज्ञे न्यवेदयदब्रवीच—

"देव! विदितसकलशास्त्रार्थः, राजनीतिप्रयोगकुशलः, पुराणेतिहासकथालापनिपुणः, वेदिता गीतश्रुतीनाम्, काव्य-नाटकाख्यानक[6]-प्रभृतीनामपरिमितानां सुभाषितानामध्येता

सर्वथेति। असदृशयोः दीर्घव्यधिकरणत्वेन मिथो विरुद्धयोश्चण्डालत्वात्यन्तमनोहराकृत्योः संयोगम् एकत्र सम्बन्धं कर्तुं शीलं यस्य तं विधातारम् अस्या निर्माणकर्त्तारं ब्रह्माणं धिक् निन्दामि 'धिक् धिक्' इति पाठे अत्यधिकं निन्दामीत्यर्थः, येन असदृशसंबन्धविधानेन हेतुना इयं चण्डालकन्यका मनोहरा चित्ता-कर्षिणी आकृतिः स्वरूपं यस्याः सा एवम्भूताऽपि असुरश्रीरिव दैत्यलक्ष्मीरिव सततं निरन्तरं निन्दितं धर्मशास्त्रकृद्भिर्जुगुप्सितं सुरतसम्भोगो यस्यां सा, पक्षे—सततम् अजस्रं निन्दिता तिरस्कृता सुरता देव-समूहो यया सा, एवम्भूता रमणीयाऽपि सुरतयोग्याऽपि क्रूरजातितया नृशंसान्त्यजजातितया उद्वेजयति वैचित्र्यमुत्पादयति' इति 'महीपतेर्मनसि अभूत्' इति पूर्वेण सम्बन्धः। इह पूर्णोपमा।

एवमिति। ईषत् अल्पम् अवगलितौ अधःप्रसृतौ कर्णयोः श्रोत्रयोः पल्लवावतंसौ किसलयभूषणे यस्याः सा, कन्यका चण्डालदारिका प्रगल्भवनितेव सम्प्रत्यप्राप्तयौवनत्वादप्रगल्भापि धृष्टनायिकेव तथा विधराजसभायामपि त्रपाद्यभावादित्याशयः। एवमादि पूर्वोक्तप्रकारादिकम्, चिन्तयन्तमेव विचारं कुर्व-न्तमेव राजानं महीपतिं प्रणनाम प्रणाममकरोत्।

कृतेति। कृतो विहितः प्रणामो नमस्कारो यया सा तथा तस्याम्, मणिकुट्टिमं रत्नबद्धभूमिस्तत्र उपविष्टायां वर्त्तमानायां तस्यां चण्डालकन्यकायाम्, स अग्रगामी पूर्वोक्तो धवलवासाः वृद्धः पुरुषः, पञ्ज-रगतमेव पक्षिरक्षणस्थलप्राप्तमेव न तु ततः पृथक्कृत्वेत्यर्थः, तं विहङ्गमं पक्षिणं शुकं कीरम् आदाय गृहीत्वा किञ्चिद्विनयेन (पुरः) उपसृत्य आगत्य राज्ञे भूपतये न्यवेदयत् उपहृतवान् अब्रवीत् अगादीच्चेत्यर्थः।

देवेति। देव हे राजन्! 'राजा भट्टारको देवः' इत्यमरः, "विदितसकलशास्त्रार्थः" इत्यादीनि प्रथ-मान्तानि शुकविशेषणान्यवगन्तव्यानि। तत्र विदितः ज्ञातः सकलशास्त्राणां षडङ्गसहितवेदानाम् अर्थोऽभि-धेयो येन सः, राजनीतिप्रयोगे कामन्दक्युक्तशिक्षायां कुशलो निपुणः, पुराणं पञ्चलक्षणम्, इतिहासः, पुरावृत्तम्, तेषां कथायां वार्तायां य आलापः सम्यग्भाषणं तदर्थप्रतिपादकवाक्यनिर्माणं वा तत्र निपुणः प्रवीणः, गीतं गानं श्रुतयः स्वरारम्भकावयवीभूताः शब्दविशेषा द्वाविंशतिविधाः तासां वेदिता बोद्धा। श्रुतीनां द्वाविंशतिविधत्वे प्रमाणम्—

और चण्डाल जाति एवं अत्यन्त सौन्दर्य—यह परस्पर विरुद्ध पदार्थद्वयका एक जगह समावेश करनेवाले विधाताको मैं हरप्रकारसे निन्दा करता हूँ, जो कि हर समय देवगणको निन्दा करनेवाली दैत्यलक्ष्मीके समान यह चण्डालकन्या अत्यन्तसुन्दरी और कोमलाङ्गी हो चण्डालजाति कहलाती है, इस तरह इसका सम्भोग हरसमय निन्दित कहला कर उद्वेगको उत्पन्न कर रहा है।

राजा इस प्रकार नानाविध चिन्ता करते ही थे कि, उनको निर्लज्जसुन्दरीके समान चण्डालकन्याने प्रणाम किया, इस कारण उस समय उसके कानका पल्लवभूषण अवनत हो झुल रहा था।

वह प्रणाम करके मणिमय भूमिपर बैठ गयी। उसके बाद, वह वृद्ध पुरुष पञ्जरस्थित केवल उस पक्षीको लेकर कुछ आगे हो राजाको उपहार (भेंट) समर्पण किया और इस प्रकार बोला—

राजन्! यह शुकपक्षी समस्त भूतलमध्यमें रत्नस्वरूप; इसका नाम **'वैशम्पायन'** है। यह शुक समस्त शास्त्रों का प्रतिपाद्य विषयोंसे अवगत है, राजनीतिप्रयोगमें निपुण, पुराण, और इतिहासके कथा कहनेमें कुशल, गान और स्वरज्ञानमें, काव्य, नाटक और आख्यायिका आदिमें अपरिमित मधुर स्वरसे पाठ करता है, और स्वयं भी रचना

१ धिग्धिग्विधातारम्। २ मनोहरा...। ३ क्रूरजातिजा। ४ विहङ्गमादाय, विहङ्गमं शुकमादाय। ५ गतं किञ्चित्, ६ नाटकाख्यायिकाख्यानक...।

स्वयञ्च कर्त्ता, परिहासालापपेशलः, वीणा-वेणु-मुरजप्रभृतीनां वाद्यविशेषाणामसमः श्रोता, नृत्यप्रयोगदर्शननिपुणः, चित्रकर्म्मणि प्रवीणः, द्यूतव्यापारे प्रगल्भः, प्रणयकलह-कुपित-कामिनी-प्रसादनोपायचतुरः, गज-तुरग-पुरुष-स्त्री-लक्षणाभिज्ञः, सकलभूतल-रत्नभूतोऽयं वैशम्पायनो नाम शुकः। सर्वरत्नानाञ्च उदधिरिव देवो भाजनमिति कृत्वैनमादायास्मत्स्वामिदुहिता देवपादमूलमायाता, तदयमात्मीयः क्रियता"मित्युक्त्वा नरपतेः पुरो निधाय पञ्जरमसावपससार।

अपसृते च तस्मिन् स विहङ्गराजो राजाभिमुखो भूत्वा समुन्नमय्य दक्षिणं

---

'सप्त स्वरास्त्रयो ग्रामा मूर्च्छाश्चैकोनविंशतिः। ताना एकोनपञ्चाशद्द्व्यधिका विंशतिः श्रुतिः॥ इति।

अन्यत्र तु—

'नान्दी चालनिका रसा च सुमुखी चित्रा विचित्रा घना मातङ्गी सरसामृता मधुकरी मैत्री शिवा माधवी।
बाला शार्ङ्गरवी कला कलरवा माला विशाला जया मात्रेति श्रुतयः पुराणकविभिर्द्वाविंशतिः कीर्त्तिताः॥' इति।

काव्यम् अदोषत्वे सति गुणालङ्कारवत्कविकर्म, नाटकम् अभिनयः, आख्यायिका वासवदत्तादिः, आख्यानकं साम्प्रतिकराजवृत्तम्, एतत्प्रभृतीनां सामुद्रिकादीनाम् ( तथा ) अपरिमितानाम् अगणितानाम्, सुभाषितानां श्रृङ्गारनीतिवैराग्यबोधकानां च अध्येता पाठकः, कर्त्ता स्वयमेव निर्माता च। परिहासोऽन्येषां प्रियवचनैर्हसनं तस्य आलापेषु रसबोधकपदप्रयोगेषु पेशलः दक्षः। वीणा शब्दसमभिव्याहाराततम्, वेणुः सुषिरम्, मुरजम् आनद्धम्, आदिपदाह्लादनं कांस्यतालादि परामृश्यते, एतेषाम् असमः निरुपमः अद्वितीय इत्यर्थः, श्रोता आकर्णनेन तारतम्यगुणदोषविवेचक इत्यर्थः नृत्तं तालल्याश्रितं तस्य प्रयोगदर्शने प्रारम्भावलोकने निपुणः पेशलः अवलोकनेनोत्कृष्टापकृष्टनिर्वाचक इत्यर्थः।

चित्रकर्मणि आलेख्यकलायां प्रवीणो निपुणः। द्यूतव्यापारे दुरोदरव्यापारे प्रगल्भः कुशलः प्रतिभायुत इत्यर्थः। प्रणयकलहेन स्नेहविषयकविवादेन कुपितानां क्रोधं प्राप्तानां कामिनीनां प्रमदानां प्रसादनोपायेषु सान्त्वनानिमित्तभूतप्रपञ्चेषु चतुरोऽभिज्ञः। गजा भद्रजातीयाः तुरगाः शालिहोत्रप्रतिपादितदेवमण्यादयः, पुरुषा धीरोदात्तादयः, स्त्रियः पद्मिन्यादयः तासां लक्षणेषु सामुद्रिकोक्तेषु अभिज्ञो निपुणः। सकलभूतलेषु समस्तपृथिवीतलेषु रत्नभूतः अत्युत्कृष्टमणिः। अयं पुरोऽवलोक्यमानः वैशम्पायनो नाम वैशम्पायनेति संज्ञकः शुकः कीरः सर्वरत्नानां सर्वोत्कृष्टवस्तूनाम् उदधिः सागर इव देवो भवान् भाजनमाश्रयः कृत्वा एतन्मनसि विचार्य, अस्मत्स्वामिनो वक्ष्यमाणस्य प्रभुः दुहिता एषा कन्यका एनं शुकम् आदाय गृहीत्वा देवपादमूलं भवच्चरणान्तिकम् आयाता आगता, तत् तस्मात् कारणात् अयं शुकः आत्मीयो ग्रहणेन स्वीयः क्रियतां विधीयताम् इति पूर्वोक्तम् उक्त्वा अभिधाय नरपतेः राज्ञः ( शूद्रकस्य ) पुरः अग्रे निधाय स्थापयित्वा पञ्जरं पक्षिरक्षणस्थानम्, असौ पुरुषः अपससार दूरीकृतवान्।

अपसृत इति। तस्मिन् पुरुषे अपसृते दूरीभूते सति स पूर्वप्रतिपादितो विहङ्गराजः पक्षिराजः राज्ञः शूद्रकनृपतेः अभिमुखः सम्मुखो भूत्वा, दक्षिणम् सव्येतरं चरणं पादम् उन्नमय्य उत्तोल्य। दृश्यते हि लोके ब्राह्मणा आशीर्वादप्रदाने दक्षिणहस्तोत्तोलनं कुर्वन्ति पूर्वमयञ्च पुण्डरीकनामा ब्राह्मण आसीदिति तत्संस्कारानुसारेण जयशब्दोच्चारणे दक्षिणचरणोत्तोलनं कृतवान् चरणपदोपादानन्तु एकस्यैव करचरणोभयरू-

---

करने वाला है; परिहास वाक्यमें चतुर, वीणा, वंशी और मृदङ्गादि वाद्यविशेष सुनकर उसका गुण, दोष और तारतम्य निर्वाचन करनेमें अद्वितीय है, नृत्य दर्शन कर उसका उत्कर्षापकर्ष कहनेमें समर्थ है, चित्रकर्ममें अत्यन्त निपुण, द्यूत ( जूआ ) क्रीडामें चतुर, प्रणयकलहमें क्रुद्धस्त्रियोंके सान्त्वनाका उपाय सुन्दर जानता है, एवं हाथी, घोड़े, पुरुष और स्त्रीजातिके समस्त लक्षणोंको जानने वाला है, समुद्रके सदृश आप समस्त रत्नोंका आश्रय हैं ऐसा मनमें करके, हमलोगोंके मालिककी कन्या इसको लाकर आपके चरण समीपमें रख दिया है अत एव आप इसे ग्रहण कीजिए, इस प्रकार कह कर वह वृद्ध पुरुष पिंजरेको राजाके आगे रखकर वहांसे चल दिया।

उसके चले जाने पर वह पक्षिश्रेष्ठ शुक, राजाके सम्मुख हो दक्षिण चरण ऊपर उठाकर सुस्पष्टवर्ण और

---

१ मुरजादीनाम्। २ नृत्त। ३ प्रणयकुपित। ४ कामिनीजन। ५ सर्वरत्नानामुदधिरिव। ६ आत्मायत्तः। ७ पञ्जरमपससार। ८ तस्मिन् विहङ्गमराजः। ९ उन्नमय्य।

चरणमतिस्पष्ट-वर्ण[1]-स्वर-संस्कारया गिरा कृतजयशब्दो राजानमुद्दिश्यार्य्यामिमां पपाठ—

"स्तनयुगमश्रुस्नातं समीपतरवर्त्ति हृदयशोकाग्नेः।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम्॥"

राजा तु तां[2] श्रुत्वा सञ्जात[3]-विस्मयः सहर्षमासन्नवर्त्तिनम् अतिमहार्घ[4]हेमासनोपविष्टम् अमरगुरुमिवाशेषनीतिशास्त्रपारगम् अतिव[5]यसमग्रजन्मानमखिलमन्त्रिम[6]ण्डलप्रधान-ममात्यं कुमारपालितनामानमब्रवीत्—

"श्रुता भवद्भिरस्य विहङ्गमस्य स्पष्टता वर्णोच्चारणे, स्वरे च मधुरता? प्रथमं तावदिदमेव महदाँश्चर्य्यम्[7], यदयमसङ्कीर्णवर्णप्रविभागामभिव्यक्तमात्रानुस्वार-स्वर[9]-संस्कार-

---

पत्वं पक्षिणामिति नासङ्गतिः। अतिस्पष्टाः सुव्यक्ताः, वर्णा अक्षराणि स्वरा उदात्तादयः तेषां संस्कारः परिपाकः व्याकरणशुद्धिरितियावत् यस्यां सा तथा तया। एतेनान्यशुकाद्यपेक्षयाऽस्य वैलक्षण्यं प्रदर्शितम्। एवम्भूतया गिरा वाचा राजानमुद्दिश्य नृपं निमित्तीकृत्य कृतजयशब्दः विहित'जय'इति, शब्दः, इमाम् अग्रे प्रतिपाद्यमानाम्, आर्याम् आर्यासंज्ञकच्छन्दोबद्धं वाक्यम्, पपाठ पठितवान्–स्तनेति। अश्रुभिर्लोचनजलैः स्नातं कृतस्नानम्, हृदये चित्ते स्वपतिवियोगजनितः शोक एव अग्निर्वह्निः तस्य, समीपवर्ति अत्यन्तसन्निहितस्थायि तथा विगतः पतिविनाशात् दूरं गतः मुक्ताहारो मौक्तिकमाला यस्मात्तत् भवतस्तव रिपुस्त्रीणां शत्रुवनितानां स्तनयुगं कुचयुग्मं व्रतं नियमं चरतीव अनुतिष्ठतीव। अन्योऽपि यो व्रती स कालत्रये स्नाति होमाग्निसमीपस्थायी भवति शास्त्रविहितमुपवासञ्च करोति। अत्र विमुक्ताहारमिति सभङ्गश्लेषः। हृदयशोकाग्नेरिति निरङ्गं केवलरूपकम्, तथा वाच्याभिमानिनी क्रियोत्प्रेक्षा चेति समुदिते संसृष्टिरलङ्कारः। आर्या चात्र छन्दः।

राजेति। राजा तु नृपोऽपि तामार्यां गाथां श्रुत्वा निशम्य सञ्जातः समुत्पन्नो विस्मयः आश्चार्यं यस्य सः, सहर्षं सानन्दं यथास्यात्तथा आसन्नवर्तिनं निकटस्थायिनम्, अतिमहार्घम् अतिबहुमूल्यं यत् हेमासनं सुवर्णपीठं तत्र उपविष्टं वर्त्तिनम्, अमरगुरुर्बृहस्पतिस्तमिव अशेषाणि समस्तानि यानि नीतिशास्त्राणि संसारिकृत्यविवेकाविवेकबोधकानि तन्त्राणि तेषां पारगं तत्त्वज्ञातारम्। अत्यधिकं वयः अवस्था यस्य तम्, वृद्धमित्यर्थः, अग्रजन्मानं ब्राह्मणम्, सर्ववर्णेषु प्रथमो ब्राह्मणः। अखिलमन्त्रिमण्डले समस्तधीसचिवसमुदाये प्रधानं मुख्यम् 'कुमारपालित' इति नाम यस्यैवम्भूतम् अमात्यं सचिवम् अब्रवीत् अवोचत्।

श्रुतेति। भवद्भिर्युष्माभिः अस्य पुरो वर्त्तमानस्य विहङ्गमस्य शुकस्य वर्णोच्चारणे कादिवक्तव्यतायां स्पष्टता स्फुटता श्रुता आकर्णिता किमिति काका व्यज्यते, तथा च श्रुता किमित्यर्थः। तथा च पुनः स्वरे उदात्तादिस्वरविषये मधुरता माधुर्यम्। प्रथमं पूर्वं तावत् इदमेव प्रत्यक्षगतमेव महदाश्चर्यम् अतिकौतूहलम्, यदयं शुकः असङ्कीर्णः मिथो वैलक्षण्येन श्रूयमाणो वर्णप्रविभागः अक्षरपार्थक्यं यस्यां सा ताम् अभिव्यक्तः स्फुटमवगम्यमानः, मात्रा ह्रस्व-दीर्घ-प्लुतरूपाः अनुस्वारा अनुनासिकाः, संस्कारो व्याकरणशुद्धिश्च एतेषां

---

स्वर संयुक्त एवं व्याकरण-शुद्ध भाषामें 'जय' शब्द उच्चारण कर राजाको उद्देश्य कर इस आर्या छन्दमें पाठ करने लगा—

'आपके शत्रुस्त्रीगणका स्तनद्वय नेत्रजलसे स्नान कर हृदयस्थित शोकाग्निके अत्यन्त समीपमें रहकर, एवं आहार भोजन (अन्य पक्षमें मुक्ताकी माला) परित्याग कर जिस किसी व्रतका आचरण कर रहा है'।

यह आर्या सुनकर राजाको आश्चर्य उत्पन्न हुआ एवं वे समीपवर्ती, बहुमूल्य सुवर्णमय आसन पर बैठे हुए, वृहस्पतिके समान समस्तनीतिशास्त्रपारदर्शी, वृद्ध, ब्राह्मण, और समस्त मन्त्रिगणके बीच प्रधान कुमारपालित नामके मन्त्रीको बोले—

आपलोग इस शुक पक्षीके स्पष्टरूपमे वर्णोच्चारण और स्वर का माधुर्य क्या सुने हैं? पहले पहल यह आश्चर्य है कि यह पक्षी सुस्पष्ट अक्षरमें वाक्यका उच्चारण किया है, उसमें तालव्य शकार और दन्त्य सकार आदि विजातीय

---

१ वर्णसंस्कारया। २ तामार्य्यां श्रुत्वा। ३ जात···। ४ महार्हासनोपविष्टम्, अतिमहार्हहेमासनोपविष्टम्। ५ अतिपरिणतवयसम्। ६ अखिलमन्त्रिमण्डले प्रधानम्। ७ महत्तरमाश्चर्य्यम्, महाश्चर्य्यम्। ८ असङ्कीर्णं। ९...स्वरसंयोगविशेषयुक्ताम्, स्वरसंयोगाम्।

योगां विशेषयुक्ताम् अतिपरिस्फुटाक्षरां गिरमुदीरयति। तत्र पुनरपरम् अभिमतविषये तिरश्चोऽपि मनुजस्येव संस्कारवती बुद्धिपूर्वा प्रवृत्तिः। तथाहि-अनेन समुत्क्षिप्तदक्षिणचरणेनोच्चार्य्य जयशब्दमियमार्य्या मामुद्दिश्य परिस्फुटाक्षरं गीता। प्रायेण हि पक्षिणः पशवश्च भयाहार-मैथुन-निद्रा-संज्ञामात्र-वेदिनो भवन्ति। इदन्तु महच्चित्रम्।"

इत्युक्तवति भूभुजि कुमारपालितः किञ्चित् स्मितवदनो नृपमवादीत्—"देव! किमत्र चित्रम्। एते हि शुकशारिकाप्रभृतयो विहङ्ग-विशेषा यथाश्रुतां वाचमुच्चारयन्तीत्यधिगतमेव देवेन। तत्राप्यन्यजन्मोपात्त-संस्कारानुबन्धेन वा पुरुषप्रयत्नेन वा संस्कारातिशय

योगः सम्बन्धो यस्यां सा ताम्। विशेषेण श्लेषाद्यलङ्कारेण संयुक्तां सहिताम्। अतिपरिस्फुटानि अत्यन्तस्पष्टानि अक्षराणि वर्णा यस्यां ताम्, गिरं वाणीम् उदीरयति उच्चारयति। यद्यपि 'असङ्कीर्णप्रविभागाम्' 'अतिस्फुटाक्षराम्' इत्यनयोरनर्थान्तरमिवाभाति तथापि पूर्वेण तालव्यशकारदन्त्यसकारादीनामुच्चारणभेद उच्यते उत्तरेण तु सर्वविधाक्षराणामेव स्फुटोच्चारणमुच्यत इति स्पष्टं भेदः।

तत्रेति। तत्र उच्चारणविषये पुनः अपरमन्यदाश्चर्यमित्यर्थः। किं तदित्युपपादयति—अभिमतेति। अभिमतविषये उपादेयेऽर्थे तिरश्चोऽपि तिर्यग्जातेः पक्षिणोऽपि मनुजस्येव मानवस्येव संस्कारवती तत्तदर्थविषयानुभवजन्यः संस्कारस्तद्वती बुद्धिपूर्वा बुद्धिपूर्विका प्रवृत्तिः कथनप्रवर्तनम्। एवं कथं ज्ञातमित्युपपादयति—तथाहीत्यादिना। समुत्क्षिप्त उत्थापितः दक्षिणचरणः सव्येतरपादो येन स तेन अनेन शुकेन जयशब्दं जयजयेति पदम् उच्चार्य अभिधाय इयं पूर्वप्रतिपादितार्या मामुद्दिश्य मामभिलक्ष्य परिस्फुटानि स्पष्टानि अक्षराणि वर्णा यत्र तद्यथास्यात्तथेति क्रियाविशेषणम्, गीता उच्चारिता। एवञ्च आशीर्वादसमये दक्षिणहस्तोत्तोलनं ब्राह्मणाः कुर्वते तथैवायमपि प्राक्तनवासनावशेन जयशब्दाभिधानकाले दक्षिणपादमुत्थापितवान्, तथा नृपतेः पूर्वं स्तुतिरेवार्याच्छन्दसाभिहितमिति सैषा बुद्धिपूर्वाप्रवृत्तिरित्यतः परं किमाश्चर्यमित्याशयः। प्रायेणेति। प्रायेण बाहुल्येन पक्षिणः खगाः पशवो मृगाद्याः, भयम् अनिष्टकारणबोधः आहारो भोजनं क्षुन्निवृत्त्युपाय इति यावत्, मैथुनं स्त्रीसम्भोगः, निद्रा बाह्येन्द्रियशमः, संज्ञा लोकव्यवहारजनकसङ्केतः नाम वा एतन्मात्रवेदिनो भवन्ति एतत्केवलमेवावबुद्ध्यन्ति नातिरिक्तम्, इदन्तु तद्विलक्षणज्ञातृत्वं महच्चित्रम् अत्याश्चर्यम्।

इत्युक्तेति। इत्युक्तवति इतिकथितवति भूभुजि नृपे कुमारपालितः एतन्नामकः पूर्वोक्तसचिवः किञ्चित्स्मितवदनः ईषद्धास्यमुखः अवादीत् अवोचत्। आश्चर्यशङ्कां निराकरोति—किमत्रेति। अत्र अस्मिन्विषये किं चित्रमाश्चर्यम्, हि यतः एते शुकाः कीरपदवाच्या विख्याताः सारिकाः पीतचरणा एतत्प्रभृतय एतदाद्याः विहङ्गविशेषाः पक्षिविशेषा यथाश्रुताम् अर्थप्रतीतिरहितां वाचं वाणीम् उच्चारयन्ति उद्गिरन्ति, इति पूर्वोक्तं देवेन स्वामिना अधिगतमेव ज्ञातमेव। तत्रापि पूर्ववक्तव्यतायाम् अन्यजन्मनि जन्मान्तरे उपात्तस्य गृहीतस्य संस्कारस्य वासनाया अनुबन्धेन अस्मिन् जन्मनि अनुवृत्त्या वा अथवा पुरुषप्रयत्नेन परिपालकजनपाठनाद्युद्योगेन वा संस्कारे शुकादीनां वासनायाम् अतिशयो दाढर्यम् उपजायते

वर्णका उच्चारण वैषम्य हुआ है, एवं ह्रस्व, दीर्घ और प्लुत का वैषम्य, अनुस्वार, स्वर और व्याकरणशुद्धि सुस्पष्ट लक्षित हुआ है। उससे और भी आश्चर्य यह है जो, मनुष्यके समान तिर्यग्जातीय पक्षीका अभिलषित विषयमें मनका संस्कार और विवेचनपूर्वक बोलना आरम्भ किया है, उसमें प्रमाण, यह पक्षी दक्षिण चरण उठाता हुआ 'जय' शब्द उच्चारण कर मेरे उद्देश्यसे यह आर्यामें अति स्पष्टाक्षर से पाठ किया। प्रायशः पक्षी और पशुगण भय, आहार, स्त्रीसम्भोग, निद्रा और पिंजरेसे निकलना और प्रवेशादि सङ्केत मात्र जानते हैं; किन्तु इसका इस प्रकारका वाक्योच्चारण अत्यन्त आश्चर्य है।"

राजाके इस प्रकार कहने पर, मुस्कुराकर कुमारपालितने राजासे कहा—राजन्! इस विषयमें आश्चर्य क्या है? कारण, यह समग्र शुक सारिका आदि पक्षिविशेष जिस प्रकार सुनते हैं वैसे ही वाक्य उच्चारण करते हैं, यह बात आपको तो मालुम ही है, अतएव इसके पूर्वजन्मके अनुसार अथवा पालनेवालेके चेष्टादिकोंसे सातिशय संस्कार

१ यदयमति···, यदयमति परिस्फुटम्। २ पुनर्यदियम्। ३ संस्कारवतः। ४ वाक्प्रवृत्तिः, ५ एतेन। ६ स्फुटाक्षरम्, परिस्फुटाक्षराम्। ७ 'निद्रामात्र' इत्येव पाठः क्वापि विद्यते। ८ वदनोऽवादीत्। ९ 'देव' इति क्वचिन्नास्ति। १० विहङ्गम। ११ यथाश्रुतं। १२ तत्राप्यत्रान्यजन्म।

उपजायत इति नातिचित्रम्। अन्यच्च, एतेषामपि पुरा पुरुषाणामिवातिपरिस्फुटाक्षरा वागासीत्, अग्निशापात्त्वस्फुटालापता शुकानामुपजाता, करिणाञ्च जिह्वापरिवृत्तिः।"

इत्येवमुच्चारयत्येव तस्मिन्नशिशिरकिरणमम्बरतलस्य मध्यमारूढमावेदयन्, नाडिकाच्छेद-प्रहत-पटु-पटह-नादानुसारी मध्याह्न-शङ्खध्वनिरुदतिष्ठत्। तमाकर्ण्य च समासन्नस्नानसमयो विसर्जितराजलोकः क्षितिपतिरास्थानमण्डपादुत्तस्थौ।

अथ चलति महीपतावन्योन्यमतिरभस-सञ्चलन-चालिताङ्गद-पत्रभङ्ग-मकरकोटि-

---

उत्पद्यते ताभ्यां कारणाभ्यां वाग्व्यापारयुक्ता जायन्त इत्याशयः। इति हेतोः नातिचित्रम् अस्यैवंविधोच्चारणं नातीवाश्चर्यम् अन्यच्च हेत्वन्तरञ्चास्ति एतेषामपि शुकादीनां पुरा पूर्वं पुरुषाणां परिपालकजनानामिव अतिपरिस्फुटानि अत्यन्तस्पष्टानि अभिधानानि नामानि यस्यामेवम्भूता वाक् वचनम् आसीत्, तु किन्तु अग्निशापात् अस्फुटः अस्पष्ट आलापो वाक्यं यत्र तस्य भावः तत्ता, शुकानाम् उपजाता। करिणां गजानां च जिह्वायाः रसनायाः परिवृत्तिः वैपरीत्येनावस्थितिः उपजातेति सम्बन्धः। भाग्यवशादयं शुकस्तच्छापमतिक्रम्य स्पष्टाक्षरमुच्चरतीति नाश्चर्यमित्याशयः।

पुरा तारकासुरपीडिताः सुराः प्रजापतिशरणं प्राप्ताः। प्रजापतिस्तु 'अग्नेः पुत्रः कार्तिकेयो भविता स एव तमसुरं नाशयिष्यति अतोऽग्निं मार्गयित्वा तत्पुत्रं प्रार्थयन्तु' इत्युवाच। अग्निं गवेषयन्तः सुराः क्वाऽपि तमलभमानाः महान्तं हस्तिनमेकमवलोक्य कच्चिद्विचित इति पप्रच्छुः। स च गजः 'अश्वत्थवृक्षेऽन्तर्हितोऽग्निरि'त्युक्तवान्। अथाग्निस्ततो निर्गत्य 'तव जिह्वा परिवृत्तिर्भवतु' इति शप्त्वा पुनः शमीगर्भे प्रच्छन्नः, तत्रा च सुरैः पृष्टः शुकः 'शमीमध्येऽन्तर्हितोऽग्नि' रित्युवाच। ततस्ततोऽप्य ग्निर्निष्क्रम्य 'त्वं वाग्विहीनो भव' इति तं शशाप इति महाभारतीयात्र कथाऽवगन्तव्या।

इत्येवमिति। तस्मिन् प्रधानामात्ये कुमारपालिते एवं पूर्वोक्तप्रकारेण उच्चारयत्येव भाषयत्येव, अशिशिराणि उष्णानि किरणानि रश्मयो यस्य तं सूर्यमित्यर्थः, अम्बरतलस्य आकाशस्य मध्यं मध्यभागम् आरूढं प्राप्तम् आवेदयन् संसूचयन्, तथा नाडिका सभाभङ्गघटिका तस्याः छेदे समाप्तौ तत्समय इत्यर्थः, प्रहतः करतलादिना ताडितः यो विविधयन्त्रादिरित्यर्थः, यः पटुर्महान् पटहो दुन्दुभिस्तस्य नादः शब्दस्तमनुसर्तुमनुगन्तुं शीलमस्येति स, मध्याह्नशङ्खध्वनिः मध्याह्नद्योतकजलजशब्दः उदतिष्ठत् उत्पन्नोऽभूत्। तं ध्वनिम् आकर्ण्य निशम्य, समासन्नः समीपवर्ती स्नानसमयः आप्लवनकालः यस्य सः, विसर्जितः निवर्त्तितः राजलोकः परिजनजनो येन सः, क्षितिपतिः शूद्रकः आस्थानमण्डपात् सभास्थानात् उत्तस्थौ उत्थितवान्।

अथेति। अथ उत्थानानन्तरं महीपतौ राजनि शूद्रके चलति सभाभवनात्प्रस्थातुमारभमाणे सति उत्तिष्ठताम् उत्थानं विदधतां महीपतीनां सामन्तनृपाणाम् अन्योन्यं परस्परम् अतिमहान् अतिबहुः सम्भ्रमः सम्मर्द आसीदिति सम्बन्धः। अत्र यानि षष्ठ्यन्तपदानि तानि महीपतिविशेषणानि। अतिरभसेन अतिवेगेन यत् सञ्चलनं प्रस्थानं तेन चालितानां स्वस्थानात्प्रच्यवितानाम् अङ्गदानां केयूराणां पत्रभङ्गानां भूषणविशेषाणां मकराणां मकराकृतिकर्णभूषणानां कोटिभिः अग्रप्रदेशैः पाटिताच्छिन्ना अनेकपटाः गर्भसूत्रनिर्मित-

---

उत्पन्न हुए हैं इसलिए इस विषयमें अत्यन्त आश्चर्य नहीं। और देखें, प्राचीन समयमें इन लोगोंका मनुष्यके समान स्पष्टाक्षर वाक्य था, किन्तु अग्निदेवके शापसे शुकपक्षियोंका अस्पष्ट भाषित तथा हाथियोंकी जिह्वा परिवर्तित हुई है।

कुमारपालितके ऐसा कहने पर ही, 'सूर्य भगवान् आकाशके मध्यस्थानमें उठ आये यह सब लोगोंको मालुम कराकर, सभा विसर्जन समयमें बजाये गये अनेक प्रकारके सुस्पष्ट बाजारम्भके साथ साथ मध्याह्न समयका शङ्खध्वनि गूँज उठा। यह सुनकर महाराज शूद्रक स्नानका समय उपस्थित हो गया है ऐसा समझकर, सामन्त ( छोटे छोटे ) राजाओंको विदाकर स्वयं भी सभामण्डपसे उठ खड़े हुए।

इसके बाद महाराज शूद्रकके सभामण्डप छोड़कर चलने पर सामन्त राजाओंके उठनेके समय आपसमें

---

१ अन्यद्। २ अतिपरिस्फुटाभिधाना। ३ अग्निशापादपरि'''। ४ शारिकाणाञ्च। ५ मध्यमध्यारूढ, ६ चासन्न,

पाटितानेकपटानाम्, आक्षेप-दोलायमान-कण्ठदाम्नाम्, अंसस्थलोल्लसित-कुङ्कुम-पटवास-धूलि-पिञ्जरित-दिशाम्, आलोल-मालतीकुसुम-शेखरोत्पतदलिकदम्बकानाम्, अर्द्धावलम्बिभिः कर्णोत्पलैश्चुम्ब्यमानगण्डस्थलानाम्, गमन-प्रणाम-लालसानाम्, अहमहमिकया वक्षःस्थलप्रेङ्खोलित-हारलतानाम्, उत्तिष्ठतामासीदतिमहान् सम्भ्रमो महीपतीनाम्।

इतश्चेतश्च निष्पतन्तीनां स्कन्धावसक्त-चामराणां चामरग्राहिणीनां कमलमधु-पानमत्त-जरत्कलहंस-नाद-जर्जरेण पदे पदे रणितमणीनां मणिनूपुराणां निनादेन, वारविलासिनीजनस्य सञ्चरतो जघनस्थलास्फालनरसित-रत्नमालिकानां मेखलानां मनोहारिणा

वसनानि येषां तेषाम्। आक्षेपेण परस्परशरीरसञ्चलनेन दोलायमानानि चञ्चलानि कण्ठदामानि कण्ठहारा येषां तेषाम्, अंसस्थलेभ्यः स्कन्धभागेभ्यः उल्लसितानि उत्थितानि यानि कुङ्कुमानि केसराणि पटवासः सुगन्धचूर्णविशेषः तयोर्धूलिपटलं परागसमुदायः तेन पिञ्जरीकृताः पीतरक्तीकृता दिश आशाः यैस्तेषाम्, आसमन्तात् लोलाश्चञ्चलाः ये मालतीकुसुमानां जातीपुष्पाणां शेखराः शिरोभूषणानि तदुपरि उत्पतन्त उड्डयमानाः अलिकदम्बा भ्रमरयूथा येषां तेषाम्, अर्धावलम्बिभिः अर्धप्रदेशलग्नैः कर्णोत्पलैः श्रवणस्थितकमलैः चुम्ब्यमानानि मस्तकनमनात् स्पृश्यमानानि गण्डस्थलानि कपोलपरभागाः येषां तेषाम्, गमने राज्ञः प्रस्थाने प्रणामाय नमस्काराय लालसानाम् अतिस्पृहाणाम् 'अहं पूर्वमहं पूर्वम्' इत्यहमहमिका तया, 'अहमहमिका तु सा स्यात् यः परस्परं भवत्यहङ्कारः' इत्यमरः। वक्षःस्थले भुजान्तरे प्रेङ्खोलिता आन्दोलिता हारलता मुक्ताफलमाला येषां तेषाम्। अन्वयस्तूक्त एव।

इतश्चेति। तत् आस्थानभवनं राज्ञः सभामण्डपं सर्वतः परितः तदा तस्मिन् काले क्षुभितमिव क्षोभमुपगतमिव अभवद्भूदिति वक्ष्यमाणक्रियया सम्बन्धः। अत्र च तृतीयान्तं पदं क्षुभितमित्यस्य करणम्, षष्ठ्यन्तञ्च तत्करणज्ञापकम्। इतश्चेतः संमर्दवशात्सर्वासु दिशासु निष्पतन्तीनां स्खलन्तीनाम्, स्कन्धेषु अंसस्थलेषु अवसक्तानि न्यस्तानि चामराणि बालव्यजनानि यासां तासां चामरग्राहिणीनां योषितानाम्, कमलमधुपानेन पद्मरसास्वादेन मत्ताः क्षीबा ये जरन्तो वृद्धाः कलहंसाः कादम्बास्तेषां नादः कण्ठध्वनिस्तद्वत् जर्जरितेन सम्भिन्नेन पृथक् पृथक् श्रूयमाणेनेत्यर्थः। लुप्तोपमा। पदे पदे प्रतिपदं रणिताः शब्दायमाना मणयो वैडूर्यादयो येषु तथाविधानां मणिनूपुराणां पादकटकानां निनादेन तदुत्पन्नशब्देन "शब्दे निनादनिनद" इत्यमरः।

वारेति। सञ्चरतो गच्छतः वारविलासिनीजनस्य गणिकाजनस्य "वारस्त्री गणिका वेश्या" इत्यमरः, जघनस्थलानां कटिपुरोभागानाम् आस्फालनेन नितान्तसञ्चालनेन रसिता शब्दिता रत्नमालिका मणिमाला यासामेवंविधानां मेखलानां काञ्चीनां मनोहारिणा चित्ताकर्षणेन झङ्कारेण झन-झनशब्देन।

अत्यन्त संघर्ष हो गया; अत्यन्त वेगपूर्वक चलनेसे चलायमान अङ्गद ( बाहुभूषण ) बक्रपत्राकृति अलङ्कार, एवं मकराकृति कर्णकुण्डलके अग्रभागमें संलग्न होकर अनेक वस्त्र कट गये; उस समय एकाएक शरीर सञ्चालन करनेसे बहुतों की कण्ठमालायें आन्दोलित हो रही थी; स्कन्धप्रदेश से उठा हुआ कुंकुम ( केसर ) और सुगन्धचूर्ण द्रव्यके धूलिसे चारों दिशायें पिङ्गल वर्ण हो गयी थी; मस्तकमें विद्यमान आन्दोलित मालतीपुष्पकी मालासे भ्रमरगण उड़ रहे थे, कानका कमल थोड़ा कम्पित होकर गंड ( कपोल ) स्थलमें संलग्न हो रहा था; इस तरह जानेके समय महाराजको प्रणाम करनेके अभिलाषी 'मैं पहले मैं पहले' इस प्रकारके वेगसे राजालोगके हारसमुदाय वक्षःस्थलमें चलायमान हो रहा था।

चामरको ग्रहण करनेवाली सुन्दरीगण, कन्धेपर चामर स्थापनकर इधर उधर चलने लगीं, उन लोगोंके उस समय प्रत्येक पादक्षेपमें मणिमय नूपुरका शब्द हो रहा था; वह समूह, कमलरसपानमें मत्त वृद्ध कलहंसगणके ध्वनिके समान पृथक् पृथक् भावमें श्रवणगोचर हो रहा था। जानेके समय वेश्या गणके नितम्ब ( कमरका

१ पाटितांशुकपटानाम्, पाटितांशुकानाम्। २ मालतीकण्ठदाम्नाम्। ३ स्थलोल्लासित। ४ धूलिपटलपिञ्जरितदिशाम् धूलिपटलपिञ्जरीकृतदिशाम्, ५ मालतीपुष्प। ६ प्रसरणसदालालसानाम्। ७ आसीत् सम्भ्रमः, अतिमहान् सरभः। ८ स्कन्धदेशावसक्त...। ९...मदमत्त...। १० जर्जरितेन। ११ जघनस्थलस्थलास्फालन···। १२ मणिमेखलानां।

झङ्कारेण, नूपुररवाकृष्टानाञ्च धवलितास्थानमण्डप-सोपानफलकानां भवनदीर्घिकाकलहं-सकानां कोलाहलेन, रसनारसितोत्सुकानाञ्च[1] तारतर-विराविणामुल्लिख्यमान-कांस्य-केङ्कार-दीर्घेण गृहसारसानां कूजितेन, सरभसप्रचलित-सामन्तशतचरणतलाभिहतस्य चास्थानमण्डपस्य निर्घोषगम्भीरेण[3] कम्पयतेव वसुमतीं ध्वनिना[4], प्रतीहारिणाञ्च[5] पुरः ससम्भ्रममुत्सारितजनानां दण्डिनां समारब्धहेलमुच्चैरुच्चारयतामालोकयतालोकयतेति[6] तार-तर-दीर्घेण[7] भवनप्रासाद-कुञ्जेषूच्चरित-प्रतिशब्दतया[8] दीर्घतरतामुपगतेनालोकशब्देन,[9] राज्ञाञ्च ससम्भ्रमावर्जित-मौलि-लोल-चूडामणीनां प्रणमताममल-मणिशलाकादन्तुराभिः

नूपुरेति। नूपुररवैः पादकटकशब्दैः आकृष्टानां तत्र प्रापितानाम् धवलितानि निजनिजदेहप्रभाभिः श्वेतवर्णीकृतानि आस्थानमण्डपस्य सभाभवनस्य सोपानफलकानि आरोहणावलयो यैस्तेषां भवनदीर्घिका-कलहंसकानां गृहवापीस्थकादम्बानां कोलाहलेन अव्यक्तशब्देन।

रसनेति। रसनानां कटिमेखलानां रसितैः शब्दितैः उत्सुकानाम् उत्कण्ठितानाम्, तारतरः अत्युच्चै-स्तरः विरावः शब्दोऽस्ति येषां तेषाम्, उल्लिख्यमानस्य घर्षणं कुर्वतः कांस्यस्य विद्युत्प्रियस्य तैजसविशेष-स्येति यावत्, केङ्कारः 'कं' 'कें' इत्यस्फुटध्वनिस्तद्वत् दीर्घेण विस्तृतेन, गृहसारसानां सदनस्थलक्ष्मण-पक्षिणां कूजितेन अस्पष्टशब्दितेन, 'कूजितं स्याद्विहङ्गानाम्' इत्यमरः। इह 'केङ्कारदीर्घेण' इत्यत्र लुप्तोपमा।

सरभसेति। सरभसं सवेगं प्रचलिताः गन्तुमुद्यता ये सामन्ता अधिकृतराजानस्तेषां शतं तस्य चरण-तलैः पादतलैः अभिहतस्य ताडितस्य आस्थानमण्डपस्य सभाभवनस्य निर्घोषोऽव्यक्तशब्दस्तद्वत् गम्भी-रेण पुष्टशब्देन तदुत्थध्वनिनेत्यर्थः, वसुमतीं मेदिनीं कम्पयतेव चोभं जनयतेव। इह 'निर्घोषगम्भीरेण' इत्यत्र, लुप्तोपमा, 'कम्पयतेव' इत्यत्र वाच्यक्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करालङ्कारः।

प्रतीहारीति। दण्डोऽस्त्येषां ते दण्डिनस्तेषां यष्टिग्राहिणामित्यर्थः, पुरो नृपाग्रतः, ससम्भ्रमं शीघ्रं समु-त्सारिता दूरीकृता जना मनुष्या यैस्तेषाम्, समारब्धा प्रवर्तिता हेला क्रीडा यस्मिन् कर्मणि तद्यथा स्यात्तथा आलोकयन्तु पृथ्वीपतिरयं गच्छतीति पश्यन्तु। इत्युच्चैः उच्चारयताम् अभिभाषमाणानां मार्गविरोधिजन-सावधानतानिमित्तमुच्चस्वरेण भाषणमित्याशयः। प्रतीहारिणां द्वारपालकानाञ्च तारतरः शिरःसमुत्पन्नध्वनि-स्तेन दीर्घेण अतिविस्तृतेन, भवनस्य साधारणगृहस्य प्रासादानां देवसद्मनां राजसद्मनाञ्च कुञ्जेषु लताद्य-न्तरितस्थानेषु उच्चरित उत्थितः प्रतिशब्दो यस्य तस्य भावस्तया दीर्घतरताम् अत्यन्तविस्तृतत्वम् उपगतेन प्राप्तेन, आलोकशब्देन आलोक्यतामालोक्यतामित्येवंविधोच्चारणध्वनिना।

राज्ञाञ्चेति। ससम्भ्रमेण शीघ्रेण आवर्जितेषु नमस्कारायावनमितेषु मौलिषु शिरस्सु लोलाः शिरः-कम्पनेन चञ्चलाः चूडामणयः शिरोरत्नानि येषां तेषाम्, प्रणमतां शूद्रकाय नतिविदधतां राज्ञाञ्च अमला निर्मला या मणिशलाका रत्नेषीकास्ताभिः दन्तुरा विषमास्ताभिः किरीटकोटिभिः मुकुटाग्रदेशैः उल्लि-ख्यमानस्य घर्षणं कुर्वतो मणिकुट्टिमस्य रत्नमयबद्धभूमेः निःस्वनेन ध्वनिना।

उभरा हुआ पिछला भाग ) स्थलके आस्फालनसे शब्दायमान मणिमय काञ्ची ( करधनी ) का मनोहर 'रण-रण' शब्द हो रहा था। राजवाटिकाके सरोवरमें रहनेवाले कलहंसगण नूपुरके शब्दसे आकृष्ट होकर सभागृहके सोपान-पंक्तिको शुभ्रवर्ण कर कोलाहल कर रहे थे। अपने प्रकृति से उच्चस्वर करनेवाले राजवाटिकाके सारस-पक्षिगण मेखलाके शब्दसे उत्कण्ठित होकर घिसनेके समय काँसाके शब्दके समान उच्चस्वरसे शब्द करने लगे। वेगसे चलनेवाले सामन्त राजगणके चरणके आघात ( आहट ) से सभामंडपमें मेघगर्जनके समान गम्भीरध्वनि उठकर मानो पृथिवीको कम्पित कर रहा था। यष्टिधारी द्वारपालगण, राजाके सम्मुख हो लोगोंको शीघ्रतासे हटाया करते थे तथा अवहेलनासे युक्त उच्चस्वरसे 'देखो देखो' इस प्रकार बोल रहे थे, उन लोगोंका वह दीर्घ कंठध्वनि, राज-बाड़ीके अन्दर रहनेवाले प्रासादसमूहके एकान्तस्थानमें उत्थित होकर प्रतिध्वनिद्वारा अत्यन्त विस्तृतरूपमें परि-णत हो रहा था। (जिस समय) सामन्त राजगण वेगसे युक्त मस्तक अवनत कर सम्राट् ( शाहनशाह बादशाह ) को प्रणाम कर रहे थे, ( उस समय ) उन लोगोंका चूड़ामणि कम्पित हो रहा था एवं रत्नमय शलाकासे उच्च अवनत

१ उत्सुकितानाञ्च। २···काञ्ची। ३ निर्घातगम्भीरेण, निर्घातनिर्घोषगम्भीरेण। ४ क्वचित् 'ध्वनि-ना' इति पाठो न विद्यते। ५ प्रतीहाराणां, ससम्भ्रमजनानां,···जानपदानां। ६ उच्चैरुच्चरतामालोकय-न्त्विति। ७ तारदीर्घेण। ८ प्रतिच्छन्दतया। ९ दीर्घताम्, दीर्घतरयाताम्।

किरीट-कोटिभिरुल्लिख्यमानस्य मणिकुट्टिमस्य निस्वनेन[1], प्रणामपर्यस्तानामतिकठिन-मणिकुट्टिम-निपतन[2]रणरणायितानाञ्च मणिकर्णपूराणां निनादेन मङ्गलपाठकानाञ्च पुरो-यायिनां जय-[3]जीवेति मङ्गल[4]मधुरवचनानुयातेन पठतां दिगन्त[5]व्यापिना कलकलेन, प्रच-लित-जनचरणशत-संक्षोभ-भयादपहाय कुसुमप्रकरमुत्पतताञ्च मधुलिहां हुङ्कृतेन, संक्षो-भादतित्वरितपदं[6]प्रवृत्तै[7]रवनिपतिभिः केयूरकोटिताडितानां क्वणित-मुखर-रत्नदाम्नाञ्च मणिस्तम्भानां रणितेन सर्वतः क्षुभितमिव तदास्थानभवनमभवत्।

अथ विसर्जितराजलोको "विश्रम्यता" मिति स्वयमेवाभिधाय तां चाण्डाल[8]-कन्यकाम्, "वैशम्पायनः प्रवेश्यतामभ्यन्त[9]रम्" इति ताम्बूलक[10]रङ्कवाहिनीमादिश्य कतिपयराजपुत्र-परिवृतो नरपतिरभ्यन्तरं प्रविशत्।

---

प्रणामेति। प्रणामे नतिसमये पर्यस्तानां स्खलितानाम्, अतिकठिने अतिकर्कशे मणिकुट्टिमे रत्नम-यबद्धभूमौ निपतनेन पातेन रणरणायितानां 'रण-रण' इति ध्वनिं विदधतां मणिकर्णपूराणां तेषां राज्ञामेव रत्नकर्णभूषणानां निनादेन निःस्वनेन। मङ्गलेति। पुरोयायिनाम् अग्रेगामिनां पठतां यशोगानमुच्चारयतां मङ्गलपाठकानां बन्दिनाञ्च जयजीवेति यन्मङ्गलमधुरवचनं तमनुलक्षीकृत्य यातेन प्रवृत्तेन, दिगन्तव्यापिना सर्वतः प्रसारिणा कलकलेन कोलाहलेन। प्रचलितेति। प्रचलितानां गन्तुं प्रवृत्तानां जनानां मानवानां चरणशतस्य अनेकनरपादानामित्यर्थः, संक्षोभभयात् प्रहारभीतेः कुसुमप्रकरं पुष्पसमुदायं विहाय त्यक्त्वा उत्पतताम् उड्डयमानानां मधुलिहां भ्रमराणां हुंकृतेन हुंकारशब्देन। संक्षोभादिति। संक्षोभात् चक्रवर्त्तिनः प्रणामाय मनोवेगवशात् अतित्वरितपदेषु अत्यन्तशीघ्रचरणनिक्षेपेषु, प्रवृत्तैः प्रचलितैः अवनिपतिभिः भूपतिभिः ( कर्तृभिः ) केयूराणाम् अङ्गदानां कोटयः अग्रभागास्तैः ( करणैः ) ताडितानाम् आहितानाम्, क्वणितेन तत्ताडनोत्थशब्देन मुखराणि वाचालानि रत्नदामानि मणिरचितवेष्टनशृङ्खला येषु तेषां मणिस्तम्भा-नां रत्नमयस्थूणानां रणितेन क्वणितेन च, तदास्थानभवनं नृपोपवेशनमण्डपं सर्वतः परितः क्षुभितं क्षोभ-मुपगतमिव अभवत् अभूत्।

अथेति। अथ अनन्तरम्, 'अथाथो संशये स्यातामधिकारे च मङ्गले। विकल्पानन्तरप्रश्नकार्त्स्न्यारम्भ-समुच्चये॥' इति मेदिनी। 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ।' इति चामरः। विसर्जिता मधुरश-ब्देन सम्भाष्य विसृष्टा राजलोका नृपतयो येन स तादृशो नरपतिः शूद्रकः, स्वयमेव आत्मनैव तां चण्डाल-कन्यकां विश्रम्यतां विश्रामं गृह्यताम् इत्यभिधाय इत्युक्त्वा, वैशम्पायनः स शुकः अभ्यन्तरं भवनमध्यं प्रवेश्यतां नीयतामिति ताम्बूलकरङ्कवाहिनीं पर्णवीटिकाधारिणीं स्त्रियम् आदिश्य आज्ञाप्य, कतिपयैः

---

मुकुटाग्रभागके घिसने पर रत्नमय भवनाङ्गणसे शब्द उठ रहा था। प्रणाम करनेके समय अत्यन्त कठिन सामन्त राजगणके मणिमय कर्णभूषण भवनाङ्गणमें गिरकर 'रण रण' शब्द कर रहा था। आगे आगे चलनेवाले स्तुतिपाठकगण, महाराजके यशस्समूहको उच्चारण कर 'महाराजकी जय हो, महाराज चिरञ्जीवी हो' इस प्रकार मङ्गलकर मधुरवाक्योंसे युक्त बहुत दूर पहुँचनेवाले कोलाहल कर रहे थे। अपने अपने गन्तव्य स्थानको जानेवाले जनसमुदायके पादाघातके भयसे भ्रमरगण पुष्पसमूहपरित्यागपूर्वक उड़कर 'भन भन' शब्द कर रहे थे। तथा व्यग्रतावश शीघ्रतासे जानेवाले सामन्त राजगणके अङ्गदाग्र ( बाहुभूषणाग्र ) ताड़नसे शब्दायमान रत्नशृङ्खलावेष्टित मणिमय स्तम्भसमूहके शब्द उठ रहे थे। इस प्रकार अनेकजातीय शब्दोंसे वह सभामण्डप मानो सब तरहसे क्षुभित हो रहा था।

इसके बाद महाराज शूद्रक, विद्यमान समस्त सामन्तराजाओंको मधुरालापसे विदा कर अपने से ही उस चण्डाल कन्यासे बोले—'तुम इस समय विश्राम करो' तथा ताम्बूलकरङ्कवाहिनी दासी ( जो अपने मालिकके साथ पानदान लिये हुए डोले और जहां आवश्यकता पड़े वहां पान खिलावे ) को आदेश दिये कि—"वैशम्पायनको अन्तःपुरमध्यमें ले जाओ" इसके बाद स्वयं भीतरके अन्दर प्रवेश किये।

---

१ स्वनेन, निःस्वनेन। २ निपतित…। ३ जय जयेति। ४ मधुरवचनानुपातेन मधुरवचनानुयातेन,। ५ दिगन्तर…। ६ संक्षोभाद्विहाय। ७ त्वरितपदं प्रवृत्तैः, त्वरितपदं प्रसृतैः। ८ चण्डाल…। ९ अभ्यन्तरं स्नानपानाशनादिना च सुखिनमेनं कारयेति, अभ्यन्तरमशनादिना चोपचर्य्यताम्। १० करण्ड,

अपनीताशेष[1]-भूषणश्च दिवसकर इव विगलितकिरणजालः चन्द्रतारकाशून्य इव गगनाभोगः समुपाहृत-समुचित-व्यायामोपकरणां व्यायामभूमिमयासीत् ।

स तस्याञ्च समानवयोभिः सह राजपुत्रैः कृतमधुरव्यायामः, श्रमवशादुन्मिषन्तीभिः कपोलयोरीषदवदलित[2]-सिन्धुवार-कुसुम-मञ्जरी-विभ्रमाभिः, उरसि निर्दयश्रम[3]-च्छिन्न-हार-विगलित-मुक्ताफल-प्रकरानुकारिणीभिः, ललाटपट्टकेऽष्टमी-चन्द्र-शकल-तलोल्लसद्-मृतविन्दु-विडम्बिनीभिः स्वेदजल-कणिकासन्ततिभिरलङ्क्रियमाणमूर्त्तिः, इतस्ततः स्नानोप-

---

क्रियद्भिरल्पसङ्ख्यकैरित्यर्थः, आप्तैः विश्वस्तैः राजपुत्रैः नृपसुतैः परिवृतः परिवेष्टितः सन् अभ्यन्तरं गृहमध्यं प्राविशत् प्रवेशं कृतवान् ।

अपनीतेति । अपनीतानि शरीरात् पृथक्कृतानि आभरणानि भूषणानि येन सः, अत एव विगलितानि सायङ्काले विच्युतानि किरणजालानि रश्मिसमूहाः यस्य स दिवसकरः सूर्य इव स्वतःप्रभाविश्वादित्याशयः । तथा चन्द्रो निशापतिः तारका नक्षत्राणि तेषां समूहः समुदायस्तेन शून्यो रहितः, गगनाभोग इव आकाशविस्तार इव विस्तृतगगनवद् विशालशरीरत्वादित्याशयः । समुपाहृतानि भृत्यैरेकत्रीकृतानि समुचितानि योग्यानि व्यायामे परिश्रमे उपकरणानि उपयोगिलौहमुद्गरादिद्रव्याणि यस्यां सा ताम्, व्यायामभूमिं परिश्रमविधानयोग्यपृथ्वीम् अयासीत् अगच्छत् । इह 'दिवसकर इव' 'गगनाभोग इव' इत्युभयत्रोपमालङ्कारयोः परस्परं नैरपेक्ष्येण संसृष्टिः । आधुनिका राजपुत्रास्तु केवलं स्वेच्छया विहरन्तः प्रचुरतरमशनं विधाय स्थूलदेहाः सन्तोऽहर्निशं निद्रयैव कालं यापयन्ति परन्त्वयं राजा तादृशो नेति स्पष्टं वर्णनया प्रतीयते ।

स इति । तस्यां व्यायामभूमौ समानं तुल्यं वयः कौमारादिर्येषां तैः राजपुत्रैः राजसुतैः सह कृतो विहितो मधुरः सुन्दरो व्यायामः परिश्रमो येन स राजा स्नानभूमिमगच्छदित्युत्तरेण सम्बन्धः । अत्र स्वेदजलकणिकासन्ततिरिति पदम्, अलङ्क्रियमाणमूर्त्तिरिति राजविशेषणस्य कर्तृ, एतद्भिन्नानि तृतीयान्तपदानि च तस्योपमानवाचकानीति वेदितव्यम् । श्रमवशात् व्यायामवशात् कपोलयोः गल्लात्परभागयोः उन्मिषन्तीभिः प्रकटं भवन्तीभिः, ईषत्किञ्चित् अवदलितं मर्दितं यत् सिन्दुवारस्य निर्गुण्ड्याः कुसुमं पुष्पं तस्य मञ्जरी वल्लरी तस्या इव विभ्रमो विलासो यासां ताभिः । उरसि वक्षःस्थले निर्दयश्रमेण क्लिष्टप्रयासेन अन्यैः कर्त्तुमशक्यव्यायामेनेति तात्पर्यम्, छिन्नः छेदमुपगतः यो हारो मुक्तामाला तस्माद् विगलितानां विच्युतानां मुक्ताफलानां मौक्तिकानां प्रकरं समुदायम् अनुकर्त्तुं शीलं यासां ताभिः । ललाटपट्टके भालस्थले अष्टमीचन्द्र अष्टमीतिथिसमुदितः सुधांशुरेव शकलं खण्ड तस्य तले उत्तानस्थले उल्लसन्तो द्योतयन्तो ये अमृतविन्दवः पीयूषकणाः तान् विडम्बयितुम् अनुकर्त्तुं शीलं यासां ताभिः । अष्टमीपदप्रयोगो हि अष्टमीतिथिसमुदितचन्द्राकार इवास्य ललाट इति व्यञ्जयितुम् । स्वेदजलस्य व्यायामजनितशरीरजलस्य कणिकाः सूक्ष्मविन्दवः तेषां सन्ततयः श्रेणयः ताभिः तथोक्ताभिः अलङ्क्रियमाणा भूष्यमाणा मूर्त्तिः शरीरं यस्य स तथोक्तः । इह……'कुसुममञ्जरीविभ्रमाभिः' इत्यत्र लुप्तोपमा । ……'मुक्ताफलप्रकरानुकारिणीभिः इत्यत्र……'अमृतविन्दुविडम्बिनीभिः' इत्यत्र चार्थोपमा बोध्या ।

इतस्तत इति । इतस्ततः समन्तात् स्नानम् आप्लवस्तस्य उपकरणानां जलादीनां सम्पादने,

---

बाद अपने शरीरसे समस्त आभूषण उतार कर सन्ध्याकालीन किरणोंसे रहित सूर्यके समान तथा चन्द्र और नक्षत्ररहित आकाशके समान ।शून्यशरीरसे व्यायामस्थानमें चले गये उस स्थानमें सेवकगण पहलेसे ही व्यायामोपयोगी लौह, पाषाण, मुद्गर आदि लाकर रक्खे हुए थे ।

महाराज शूद्रक उस व्यायामभूमिमें समवयस्क राजपुत्रोंके साथ अच्छे ढङ्ग देखनेमें आनेवाले व्यायामको किये । उस परिश्रमसे उनके कपोलद्वयसे पसीनेका बिन्दु निकलकर सिन्धुवार ( निर्गुण्डी ) पुष्पके मञ्जरीके समान शोभा देने लगा, वक्षःस्थलसे पसीनेका विन्दु बाहर निकलकर, कठिन परिश्रम होनेसे टूटे हारसे विगलित मुक्ता समूहका अनुकरण करने लगा; तथा भाल देशमें पसीनेका विन्दु निकलकर अष्टमी चन्द्रखण्डके ऊपर भागमें स्थित अमृतविन्दुसमूहके समान विराजमान था; उस समय उस धर्मबिन्दुसमूहसे उनका शरीर शोभायमान हो रहा था।

इधर उधरसे स्नानीय द्रव्यानयन करनेके लिए शीघ्रतायुक्त सेवकगण आगे २ शीघ्र गमन कर एवं उस

---

१ अपनीताभरणश्च, २…अवगलित-सितसिन्धुवार… । ३…रतिश्रम, रतिविभ्रम… ।

करण-सम्पादनसत्वरेण पुरःप्रधावता परिजनेन तत्कालं विरलजनेऽपि राजकुले समुत्सारणाधिकारमुचितमाचरद्भिः दण्डिभिरुपदिश्यमानमार्गः, वितत-सितवितानाम्, अनेक-चारणगण-निबध्यमानमण्डलाम्, गन्धोदक-पूर्ण-कनकमय-द्रोणी-सनाथमध्याम्, उपस्थापित-स्फाटिक-स्नानपीठाम्, एकान्तनिहितैरतिसुरभि-गन्ध-सलिलपूर्णैः परिमलावकृष्ट-मधुकर-कुलान्धकारितमुखैरातपभयान्नीलकर्पटावगुण्ठितमुखैरिव स्नानकलसैरुपशोभितां स्नानभूमिमगच्छत्।

अवतीर्णस्य च जलद्रोण्यां वारविलासिनी-कर-मृदित-सुगन्धामलकालिप्तशिरसो राज्ञः

---

निष्पादने सत्वरेण त्वरायुतेन, अत एव पुरःप्रधावता अग्रतः शीघ्रं व्रजता परिजनेन सेवकपुरुषेण, एतच्च 'उपदिश्यमाना' इत्यस्य कर्तृ। तथा तत्कालं तस्मिन् मध्याह्नकाल इत्यर्थः; विरलजनेऽपि स्वल्पलोकेऽपि तत्र समुत्सारणस्य प्रयोजनाभावेऽपीत्याशयः, राजकुले राजगृहे उचितं योग्यं समुत्सारणं लोकसम्मर्दनिवारणं तत्र यः अधिकारो नियोगः तम् आचरद्भिः सम्पादयद्भिः दण्डिभिः यष्टिधारिपुरुषैः, उपदिश्यमानः प्रदर्श्यमानः मार्गः स्नानभूमिगमनाध्वा यस्य स तादृशः एतच्च राजविशेषणं बोध्यम्।

विततेति। अत्र द्वितीयान्तपदानि स्नानभूमेर्विशेषणानि। विततम् ऊर्ध्वं विस्तीर्णं सितं श्वेतं वितानम् उल्लोचः चन्द्रातप इति यावत् यस्यां ताम्। अनेके अगणिता ये चारणगणाः कुशीलवाः स्तुतिपाठकाः तैः निबध्यमानं निर्मीयमाणं मण्डलं मण्डलाकारेणावस्थितिः यस्यां तां तादृशीम्। गन्धोदकैः सुरभिजलैः पूर्णा भृता या कनकमयी सुवर्णरचिता द्रोणी जलकुण्डिका बृहज्जलपात्रविशेष इति तात्पर्यम्, तया सनाथो युक्तः मध्यो मध्यभागो यस्याः ताम्। उपस्थापितं न्यस्तं स्फाटिकं स्फटिकमणिरचितं स्नानपीठम् आप्लवनचतुष्किका यस्यां सा तां तादृशीम्। एकान्ते स्नानभूमेरेकस्मिन् प्रदेशे विहितैः न्यस्तैः। इतस्तृतीयान्तानि सकलानि स्नानकलसैरित्यस्य विशेषणानि। अतिशयेन सुरभिः घ्राणतृप्तिजनको गन्धो येषां तादृशैः सलिलैः जलैः पूर्णा भृतास्तैस्तथोक्तैः, अत एव परिमलेन सलिलगन्धेन अवकृष्टा आकृष्टा ये मधुकरा मधुपाः तेषां कुलानि समूहाः तैः अन्धकारितानि अन्धकारीकृतानि मुखानि वदनानि येषां तैः, अतएव आतपभयात् सूर्यकिरणसन्तापत्रासात् नीलकर्पटैः श्यामवर्णजीर्णवस्त्रखण्डैः अवगुण्ठितानि आच्छादितानि मुखानि येषां तैस्तथोक्तैरिव विद्यमानैः। स्नानकलसैः आप्लवकुम्भैः उपशोभितां विराजितां स्नानभूमिम् आप्लवस्थानम् अगच्छत् अयासीत्। इह च भावाभिमानिनी वाच्या क्रियोत्प्रेक्षा।

अवतीर्णेति। जलद्रोण्यां जलकुण्डिकाम् अवतीर्णस्य तन्मध्ये प्रविष्टस्य, वारविलासिनीभिः वेश्याभिः करैः हस्तैः 'बलिहस्तांशवः कराः' इत्यमरः, मृदितेन पृष्टेन सुगन्धेन सुरभिणा आमलकेन धात्री-

---

समय राजकुलमें थोड़े लोगों को रहने पर भी यष्टिधारी परिचारकगण अपना कर्तव्यपालन करते हुए लोगोंके सङ्घर्ष निवारणको भली भाँति दिखाकर महाराजको स्नानस्थानमें जानेका मार्ग बता रहे थे।

इस प्रकार महाराज स्नान करनेके स्थानमें उपस्थित हुए, उस स्थानके ऊपर भागमें शुभ्रवर्ण चन्द्रातप ( चनवा ) फैलाया हुआ था; अनेक स्तुतिपाठकगण चारों दिशा में मण्डलाकारसे खड़े हुए थे, मध्यस्थानमें सुगन्ध जलपूर्ण सुवर्णरचित एक द्रोणी ( बड़ा कन्डाल ) एवं स्फटिकमय एक स्नानपीठ ( नहानेकी चौकी ) संस्थापित था; एक भागमें अतिसुगन्ध जलपूर्ण अनेक कलश रक्खा हुआ था, उस जलके सौगन्ध्यसे भ्रमरगण बैठकर उस कलशसमूहके मुखभागको अन्धकारित कर दिये, उससे प्रतीत हो रहा था कि, कलससमूहका मुख घामके भयसे नीलवस्त्रद्वारा आच्छादित कर रक्खा है।

उस जलद्रोणीके मध्य जब महाराज प्रवेश किये उस समय कितने वेश्यागण अपने हाथसे मला हुआ सुगन्ध आमलकी ( धात्री ) द्वारा उनके मस्तक को लिसकर दिये; एवं और भी कुछ वेश्यायें पहनने वाले कपड़े

---

१ प्रधाविना। २ परिजनेनानुगम्यमानः। ३ विरलतरेऽपि। ४ समाचरद्भिः। ५ आबध्यमानमण्डलाम्। ६ जलद्रोणी। ७ अभिसुरभि। ८ कलशैः। ९ क्वचित् चकारो न विद्यते। १० उपलिप्त।

समन्तात्[1] समुपतस्थुरंशुक[2]-निविड[3]-निबद्ध-स्तनपरिकराः, दूरसमुत्सारित-वलय-बाहु-लताः, समुत्क्षिप्त[4]कर्णाभरणाः कर्णोत्सङ्गोत्सारितालकाः, गृहीतजल-कलसाः स्नानार्थमभिषेकदेवता इव वारयोषितः ।

ताभिश्च समुन्नत-कुचकुम्भ-मण्डलाभिर्वारिमध्यप्रविष्टः करिणीभिरिव वनकरी परिवृतस्तत्क्षणं रराज राजा ।

द्रोणी[4]सलिलादुत्थाय च स्नानपीठममलस्फटिक-धवलं वरुण इव राजहंसमारुरोह ।

ततस्ताः काश्चि[5]न्मरकत-कलस[6]-प्रभाश्यामायमाना नलिन्य इव मूर्त्तिमत्यः पत्रपुटैः,

फलेन लिप्तं शिरो मस्तकं यस्य तस्य, राज्ञः शूद्रकस्य परितः समन्तात् । अंशुकैः निजनिजपरिहितवस्त्रैः निविडं दृढं यथा स्यात्तथा निबद्धा दृढभारलघूकरणाय आस्फालनावरोधाय वा संयताः स्तनपरिकराः कुचाभोगा याभिस्तास्तथोक्ताः । एवम्भूतानि प्रथमान्तानि 'वारयोषितः' इत्यस्य विशेषणानि । दूरे ऊर्ध्वप्रदेशे समुत्सारितानि झणत्कारादिविघ्नदूरीकरणार्थम् उत्तोलितानि वलयानि कङ्कणानि यासु ताः तथोक्ता बाहुलता यासां ताः तथोक्ताः । समुत्क्षिप्तानि लोचनकपोलोपरिपतननिवारणार्थम् ऊर्ध्वमुत्क्षिप्य बद्धानि कर्णाभरणानि श्रवणालङ्कारा याभिस्ताः तथोक्ताः । कर्णोत्सङ्गात् श्रोत्रान्तिकात् उत्सारिताव लोचनोपरिपतननिवारणाय अपसार्य उपरि न्यस्ता अलकाः चूर्णकुन्तला याभिस्ताः । गृहीता आत्ता जलकलशाः सलिलपूर्णघटा याभिस्ताः । अभिषेकदेवताः स्नानाधिष्ठात्र्यो देव्य इव स्नानार्थं राज्ञः आप्लवविधानार्थं समुपतस्थुः सम्यक्प्रकारेण उपस्थिता आसन् । इह वाच्या जात्युत्प्रेक्षा स्वभावोक्तिश्च अनयोरङ्गाङ्गिभावेन सङ्करालङ्कारः ।

ताभिश्चेति । वारिमध्ये जलद्रोणीमध्ये प्रविष्टः कृतप्रवेशो राजा शूद्रकः समुन्नतम् अत्यन्तोच्चं कुचकुम्भमण्डलं स्तनकलशसमूहो यासां ताभिः, तादृशीभिः, ताभिः वारयोषिद्भिः, करिणीभिः हस्तिनीभिः परिवृतः परिवेष्टितः वनकरी वन्यहस्तीव तत्क्षणं तस्मिन् काले रराज शुशुभे । तथा च यथा हस्तिनीभिः समं मज्जनं कुर्वन् वनकरी शोभते तथैवायमपीत्यर्थः । एवं सति नात्र कालभेदेऽपि 'काऽप्यभिख्या तयोरासीत् व्रजतोः शुद्धवेशयोः' इत्यादिवदुपमागत भग्नप्रक्रमत्वदोष इत्यवधेयम् । इहालङ्कारश्चोपमा ।

द्रोणिसलिलेति । ततो द्रोणीसलिलात् जलकुण्डिकास्थानात् उत्थाय बहिर्निर्गत्य अमलो मलरहितो यः स्फटिकस्तदाख्यो मणिविशेषः तद्वद् धवलं स्वच्छं स्नानपीठम् आप्लवनचतुष्किकां वरुणः प्रचेताः राजहंसं कलहंसमिव आरुरोह आरूढवान् वरुणो यथा राजहंसमारोहति तथैवायमप्यारुरोहेत्यर्थः । एवं सति कालभेदे सत्यप्यत्र न पूर्ववद्भग्नप्रक्रमतादोषः ।

तत इति । ततः आरोहणानन्तरं ताः वाराङ्गना राजानम् अभिषिषिचुरित्यग्रिमेण सम्बन्धः । वाराङ्गना एव विविधप्रकारेण विशेषयति—काश्चिदित्यादिना । काश्चित् काञ्चन मरकतमणिनिर्मितो यः कलशो घटस्तस्य प्रभया दीप्त्या श्यामायमानाः अश्यामा अपि श्यामवदाचरन्त्यः, अत एव पत्रपुटैः पर्णसम्पुटैः मूर्त्तिमत्यः श्यामत्वसाम्यात्तत्स्वरूपधारिण्यो नलिन्यः पद्मिन्य इव ( दृश्यमानाः सत्यः ) राजानं

( अञ्चल ) द्वारा कुचभागको दृढ़भावसे बांध कर, हस्तवलयको दूरमें फेंक कर, कर्णभूषणको ऊपर उठाकर, कानके समीपदेशसे नेत्रावरण निवारणार्थ केशकलापको हटाकर, जलपूर्ण कलशग्रहणपूर्वक महाराजको स्नान करानेके लिए अभिषेकदेवताके समान चारों दिशामें उपस्थित हुईं ।

उन्नत कुचकुम्भयुक्त वाराङ्गनागण जलद्रोणीमध्य प्रविष्ट राजाको परिवेष्टित किये, उस समय वे महाराज हस्तिनी परिवेष्टित वनहस्तीके समान सुशोभित होरहे थे ।

वरुणदेव जिस प्रकार जलसे उठकर राजहंस पर चढ़ते हैं, महाराज शूद्रक भी उसी प्रकार जलद्रोणीसे उठकर निर्मल एवं स्फटिकमय स्नानपीठपर चढ़ गये ।

उसके बाद वेश्याओंके मध्य कुछ वेश्यायें अनेक मरकतमणिमय कलशके प्रभासे श्यामवर्ण बने हुए जलसे

१ परितः, २ समुत्तस्थुः, ३ अंशुकविनिबद्ध... । ४...चरणाभरणाः । ४ जलद्रोणि । ५ काञ्चन । ६ मरकतशकल... ।

काश्चिद्रजतकलसहस्ता रजन्य इव पूर्णचन्द्रमण्डलविनिर्गतेन ज्योत्स्नाप्रवाहेण, काश्चित् कलसोत्क्षेप-श्रम-स्वेदार्द्र-शरीरा जलदेवता इव स्फाटिकैः कलसैस्तीर्थजलेन, काश्चिन्मलयसरित इव चन्दनरसमिश्रेण सलिलेन, काश्चिदुत्क्षिप्त-कलस-पार्श्व-विन्यस्त-हस्तपल्लवाः प्रकीर्य्यमाण-नख मयूख-जालकाः प्रत्यङ्गुलि-विवर-विनिर्गत-जलधाराः सलिलयन्त्रदेवता इव, काश्चिज्जाडयमपनेतुमाक्षिप्त-बालातपेनेव दिवसश्रिय इव कनककलसहस्ताः कुङ्कुमजलेन वाराङ्गनाः क्रमेण[2] राजानमभिषिषिचुः।

---

शूद्रकम् अभिषिषिचुः अभिषेकं चक्रुः। इह नलिनीवाराङ्गनानां मरकतकलश-पत्रपुटानाञ्च कृष्णवर्णत्वात् सादृश्यम्। वाराङ्गनासु नलिनीत्वजात्युत्प्रेक्षणादुत्प्रेक्षा क्यङ्गतोपमा च, अनयोरङ्गाङ्गिभावेन सङ्करालङ्कारः।

काश्चिदिति। काश्चन अन्या वारयोषितो रजतकलशः रूप्यनिर्मितघटः हस्ते करे यासां तास्तथोक्ताः, पूर्णचन्द्रमण्डलात् समस्तशशिबिम्बात् विनिर्गतेन निःसृतेन ज्योत्स्नाप्रवाहेण चन्द्रिकास्रवेण शोभमाना रजन्यः क्षपा इव। रजनीभिर्वाराङ्गनानाम्, पूर्णचन्द्रेण रजतकलशस्य, ज्योत्स्नाप्रवाहेण तत्स्थसलिलस्य सादृश्यमत्राभिमतं वेदितव्यम्। इह वाराङ्गनासु रजनीत्वजात्युत्प्रेक्षणाज्जात्युत्प्रेक्षा।

काश्चिदिति। अन्याः काश्चन कलशस्य घटस्य उत्क्षेपणात् ऊर्ध्वमुत्थापनाद् यः श्रमः आयासस्तेन ये स्वेदा घर्मसलिलानि तैरार्द्राणि स्विन्नानि शरीराणि वपूंषि यासां ताः, स्फाटिकैः तदाख्यमणिविशेषसम्बन्धिभिः कलशैः कुम्भैः तीर्थजलेन तीर्थपयसा च सहिताः, अत एव जलदेवता जलाधिष्ठात्र्य इव, तासामपि सलिलान्निसरणेन सलिलबिन्दुव्याप्तदेहत्वात् सादृश्यम्। इहापि वाराङ्गनासु जलदेवतात्वजात्युत्प्रेक्षणाज्जात्युत्प्रेक्षा।

काश्चिदिति। काश्चन अन्या वाराङ्गनाः चन्दनस्य मलयजस्य रसेन द्रवेण मिश्रं संयुक्तं तेन तथोक्तेन, सलिलेन पयसा मलयसरितः मलयाचलनद्य इव ता अपि चन्दनमिश्रजलान्यादधते। तस्मिन् समये मलयसरित्सु स्नानासम्भवेन तदारोपणादुत्प्रेक्षा।

काश्चिदिति। अन्याः काश्चन उत्क्षिप्ता उत्तोल्य कक्षं नीता ये कलशाः कुम्भास्तेषां पार्श्वेषु वामदक्षिणेषु विन्यस्ता उत्तानभावेन स्थापिताः हस्तपल्लवाः करकिसलयानि याभिस्ताः, "पल्लवोऽस्त्री किसलयम्" इत्यमरः, प्रकीर्यमाणानि इतस्ततो विपर्यस्तानि नखानां पुनर्भवानां मयूखजालानि दीप्तिचया यासां ताः, तथा प्रत्यङ्गुलि प्रतिहस्तशाखं यानि विवराणि अन्तरालप्रदेशाः छिद्रा इति यावत् तेभ्यो विनिर्गता निःसृता जलधारा पानीयसम्पातो यासां ताः, अत एव सलिलयन्त्रदेवता जलयन्त्राधिष्ठातृदेव्य इव ता अप्येतादृश्यो भवन्तीत्यर्थः। इहापि तथाविधगणिकासु सलिलयन्त्रदेवतात्वजात्युत्प्रेक्षाज्जात्युत्प्रेक्षा।

काश्चिदिति। काश्चन अन्या कनककलशाः सुवर्णकुम्भा हस्तेषु पाणिषु यासां ताः काश्चिद्वाराङ्गनाः, दिवसश्रिय इव दिनलक्ष्म्य इव, जाड्यं जलीयशैत्यम् अपनेतुं पृथक्कर्तुम् आक्षिप्त आकर्षितो बालातपः अभिनवोदितसूर्यरश्मिः यस्मिन् तेनेव कुङ्कुमजलेन केसरमिश्रितसलिलेन यथायथं यथायोग्यं राजनं।

---

राजाको स्नान कराने लगीं, उससे मालूम पड़ता था कि, जैसे मूर्त्तिमती पद्मिनीगण पत्रपुटद्वारा स्नान करा रहीं हैं। कुछ वेश्यायें रजत ( चांदी ) कलश-जलद्वारा स्नान कराने लगीं, अत एव प्रतीत हो रहा था कि मानो रात्रिगण पूर्णचन्द्रमण्डलसे निःसृत ज्योत्स्ना ( चाँदनी ) के प्रवाहमें स्नान करा रहीं हैं। कुछ वेश्यायें कलशको ऊपर उठाकर रखनेके कारण परिश्रमसे घर्मार्द्र शरीर हो स्नान कराने लगीं, जिससे मालूम पड़ता था कि जलदेवताके स्फटिकमय कलशस्थ तीर्थजलद्वारा स्नान करा रहीं हैं। कुछ वेश्यायें मलयपर्वतस्थित नदीके समान चन्दनमिश्रित जलद्वारा स्नान कराने लगीं। कुछ वेश्यायें कक्षदेश ( कमर ) पर कलश उत्तोलनपूर्वक उसके मुखको नीचे कर उत्तानभावसे ( चित्त करके ) करकिसलय विन्यस्तकर प्रत्येक अङ्गुलियोंके मध्यभागसे निःसृत जलधाराद्वारा जलयन्त्रदेवताके समान रहकर महाराजको स्नान कराने लगी उस समय उन लोगोंके नखोंसे किरणसमूह बाहर निकलरहा था। और कुछ वेश्यायें, कनकमय कलश हाथमें लेकर जलकी शीतलता मिटानेके लिए मानो नवोदित सूर्यकिरणको लाकर जिसमें मिश्रित कर रही है, इस प्रकार कुङ्कुमजलके द्वारा दिनश्रीके समान क्रमशः राजाको स्नान कराने लगीं।

---

१ '''अवनिर्गत''। २ यथायथं।

अनन्तरमुदपादि च स्फोटयन्निव श्रुतिपथमनेक-प्रहत-पटु-पटह-झल्लरी मृदङ्ग-वेणु-वीणा-गीत-निनादानुगम्यमानो वन्दिवृन्द-कोलाहलाकुलो भुवन-विवरव्यापी स्नानशङ्खानामापूर्यमाणानामतिमुखरो ध्वनिः ।

एवञ्च क्रमेण निर्वर्त्तिताभिषेको विषधरनिर्म्मोक-परिलघुनी धवले परिधाय धौते वाससी शरदम्बरैकदेश इव जलक्षालन-निर्म्मलतनुः अतिधवल-जलधर-च्छेद-शुचिना दुकूलपटपल्लवेन तुहिनगिरिरिव गगनसरित्स्रोतसा कृत-शिरोवेष्टनः सम्पादित-पितृजल-लक्रियो मन्त्रपूतेन तोयाञ्जलिना दिवसकरमभिप्रणम्य देवगृहमगमत् ।

---

शूद्रकम् अभिषिषिचुः स्नानं कारयामासुः । इह 'दिवसश्रिय' इति जात्युत्प्रेक्षा, 'आचिरस्थालातपेनेव' इति क्रियोत्प्रेक्षा, अनयोश्चाङ्गाङ्गिभावाल्लङ्करालङ्कारः ।

अनन्तरमिति । अनन्तरं स्नानानन्तरं स्नानशङ्खानां ध्वनिः उदपादीत्यन्वयः । श्रुतिपथं कर्णविवरं स्फोटयन् द्विधा कुर्वन्निव, अनेकैः पुरुषैः प्रहता वादिताः पटवः वाद्यविधाने समर्थाः पटहाः दुन्दुभयः झल्लयो वाद्यविशेषा ( भाषायां 'झाल' इति पदवाच्याः ), मृदङ्गा मुरजाः, वेणवो वंश्यः, वीणा वल्लक्यः तासां गीतानां गानानाञ्च निनादैः ध्वनिभिः अनुगम्यमानः तमनुलक्ष्यीकृत्य प्रवर्तमानः, वन्दिवृन्दस्य वैतालिकसमूहस्य कोलाहलेन कलकलेन आकुलो व्याप्तः, अत एव भुवनविवरव्यापी विष्टपान्तरालप्रसारी, अतिमुखरः अतिशयेन तारतरः, आपूर्यमाणानां मुखवायुभिः वाद्यमानानां स्नानशङ्खानाम् आप्लवकालवादनीयशङ्खानां ध्वनिः शब्द उदपादि उत्पन्नोऽभूत्, 'पद् गतौ' अस्माल्लुङि रूपम् । इह भुवनविवरव्यापनसम्बन्धाभावेऽपि तत्सम्बन्धोक्त्यातिशयोक्तिरलङ्कारः, 'स्फोटयन्निवे'ति क्रियोत्प्रेक्षा च, अनयोश्च परस्परं नैरपेक्ष्येण संसृष्टिरलङ्कारः । 'मिथोऽनपेक्ष्यमेतेषां स्थितिः संसृष्टिरुच्यते' इति लक्षणात् ।

एवञ्चेति । चो भिन्नक्रमे तस्य च किञ्चेत्यर्थः । एवं पूर्वोक्तप्रकारेण क्रमेण परिपाट्या निवर्त्तितः कृतः अभिषेकः स्नानं येन स तादृशो राजा देवगृहमगमदिति वक्ष्यमाणक्रियया सम्बन्धः । विषधराः सर्पास्तेषां निर्मोकः कञ्चुकः तद्वत् परिलघुनी अत्यन्तसूक्ष्मे धवले स्वच्छे धौतवाससी प्रक्षालितवसने परिधाय परिधानं विधाय, देवपूजानिमित्तं वस्त्रद्वयधारणावश्यकमाह आह्निकसूत्रावल्याम्—

'होमदेवार्च्चनाद्यासु क्रियासु पठने तथा । नैकवस्त्रः प्रवर्त्तेत यत्नतः सर्वथा बुधैः ॥'

शरदि वर्षात्यये अम्बरैकदेश इव आकाशैकभाग इव जलक्षालनेन अभिषेचनीयसलिलद्वारा प्रक्षालनेन वर्षासलिलद्वारा प्रक्षालनेन च निर्मला अपगतमला तनुः शरीरं यस्य स तादृशः, अतिधवलः अतीव स्वच्छो यो जलधरच्छेदः मेघखण्डः तद्वत् शुचिना धवलेन दुकूलपट्टस्य क्षौमवसनस्य पल्लवेन विस्तारेण अतिदीर्घक्षौमवसनेनेत्यर्थः, 'पल्लवो विस्तरे पिङ्गे किसले विटपे वने' इति त्रि० शेषः । गगनसरित् आकाशगङ्गा तस्याः स्रोतसा प्रवाहेण तुहिनगिरिः हिमाचल इव कृतः विहितः शिरोवेष्टनः उष्णीषो येन स तादृशः । होमार्थमुष्णीषधारणमाह—

'उष्णीषेण विना राजन् ! होमं चेत्कुरुते नरः । होतुश्चक्षुर्विनाशः स्यात् होता च विकलो भवेत् ॥' इति ।

सम्पादिता निष्पादिता पितृजलक्रिया पितृतर्पणादिर्येन स तादृशः, तथा च—'स्नात्वा सन्तर्पयेद् देवान् पितॄंश्च मानवांस्तथा' इति । मन्त्रैः वेदविहितैः पूतं पवित्रं यत्तोयं जलं तस्य अञ्जलिः हस्तसम्पुटः

---

उसके बाद मुखवायुसे पूर्ण स्नानकालीय शङ्खध्वनि उत्पन्न हुआ, उसके साथ साथ अनेक प्रकारके लोगोंद्वारा बजाये गये उत्कृष्ट दुन्दुभि ( नगाड़ा ), झल्लरी ( झाल ), मृदङ्ग, वंशी एवं वीणाके शब्द तथा मङ्गल गानके शब्द होने लगे, स्तुतिपाठकगणोंका कोलाहल उसके साथ ही मिश्रित हो जानेसे वह शब्द अत्यन्त बृहत् हो गया, जो कि कानको विदीर्ण कर संसारके आकाशमण्डलको व्याप्त कर दिया ।

इस प्रकार क्रमशः स्नानक्रिया सम्पादन करलेने पर महाराज शूद्रकका शरीर जलप्रक्षालनसे शरत्कालीय आकाशके एकदेशके समान निर्मल हो गया, एवं वे सर्पकञ्चुकके समान सूक्ष्म और शुभ्रवर्ण वस्त्रद्वय पहन कर, अतिनिर्मल मेघखण्डके समान श्वेत एवं बृहत् रेशमीके कपड़ेसे शिरोवेष्टन किये; उससे गङ्गाके प्रवाहद्वारा परिवेष्टित शुभ्र हिमालयके समान देखनेमें आने लगे । उसके बाद वे पितृतर्पण कर, सूर्यके अभिमुख हो मन्त्रपवित्र जलाञ्जलिद्वारा सूर्यको अर्घ्यदान एवं प्रणामकर देवगृहमें चले गये ।

---

१ आस्फोटयन्निव, आस्फोटयन्निव । २ कोलाहलो । ३ भवन... । ४ मुखरः । ५ निर्वर्त्तिताभिषेकः । ६ धौतवाससी । ७ जलक्षालनविमलतनुः ।

उपर[1]चित-पशुपतिपू[2]जनश्च निष्क्रम्य देवगृहान्नि[3]र्वर्त्तिताग्निकार्यो विलेपनभूमौ झङ्कारिभिरलिकदम्बकैरनुबध्यमानपरिमलेन मृगमद-कर्पूर-कुङ्कुमवास-सुरभिणा चन्दनेनानुलिप्तसर्वाङ्गो विरचितामोदि-मालतीकुसुमशेखरः कृतवस्त्र[4]परिवर्तः रत्नकर्णपूरमात्राभरणः समुचितभोजनैः सह भूपतिभिराहारमभिमत-रसास्वाद-जातप्रीतिरवनिपो निर्वर्त्त[5]यामास।

परिपीतधूम[6]वर्त्तिः उपस्पृश्य च गृहीतताम्बूलस्तस्मात् प्रमृष्ट-मणि-कुट्टि[7]मप्रदेशादुत्थाय नातिदूरवर्त्तिन्या ससम्भ्रम-प्रधावितया प्रतीहार्य्या प्रसारितं बा[8]हुम् अवलम्ब्यानव[9]रत-

"अञ्जलिस्तु पुमान् हस्तसम्पुटे कुडवेऽपि च" इति मेदिनी। तेन दिवसकरं सूर्यनारायणम् अभि सम्मुखं प्रणम्य अञ्जलौ मन्त्रपूतमर्घ्यरूपं जलं सूर्यनारायणाय दत्वा नमस्कृत्येत्यर्थः। तदुक्तम्—

'अर्घ्यं दद्यात्तु प्रथमं भास्कराय महात्मने। ततो विष्णुं शिवं शान्तः शिवां चैव प्रपूजयेत्॥' इति।

देवगृहं चैत्यम् अगमत् अगच्छत्। इह विषधरनिर्मोकेत्यत्र लुप्तोपमालङ्कारः। शरदम्बरैकदेश इवेत्यत्र पूर्णोपमालङ्कारः। अतिधवलजलधरेत्यत्रापि च लुप्तोपमैव। तुहिगिरिरित्यत्र तूपमा।

उपरचितेति। उपरचिता सम्पादिता पशुपतेः महेश्वरस्य पूजा अपचितिः "पूजा नमस्यापचितिः" इत्यमरः, येन स तथाभूतः, तथा च—"असंपूज्य शिवं मोहाद्ये नरा भुञ्जतेऽन्वहम्। सौख्यं नैवाप्नुवन्त्येह भग्नाशाः पर्यटन्ति ते॥" इति। निवर्तितं निष्पादितम् अग्निकार्यम् अग्निहोत्रहोमादि येन सः, 'यावज्जीवमग्निहोत्रं जुहुयात्' इति श्रुतेरग्निहोत्रस्यापि नित्यत्वादित्याशयः। विलेपनभूमौ अङ्गरागसम्पादनस्थाने झङ्कारिभिः 'झम्' इति शब्दं कुर्वद्भिः अलिकदम्बकैः भ्रमणगणैः अनुबध्यमानः अनुसरणं क्रियमाणः परिमलः सौरभो यस्य स तेन, मृगमदस्य कस्तूर्याः कर्पूरकुङ्कुमयोः केसरहिमवालुकयोश्च वासेन परिमलेन सुरभिणा घ्राणतर्पणेन 'सुरभिर्घ्राणतर्पणः' इत्यमरः, चन्दनेन मलयजेन अनुलिप्ताङ्गः लेपितसकलशरीरावयवः, विरचितः रचनाविशेषेण विहितः आमोदिभिः परिमलवद्भिः मालतीकुसुमैः जातीपुष्पैः शेखरः शिरोभूषणं येन स तादृशः, अङ्गरागादिकं यथाकालं यथावयः कार्यमित्याह्निके स्पष्टम्। कृतो विहितो वस्त्रयोः पूर्वपरिहितवसनयोः परिवर्तः परिवर्तनं येन सः परिहितान्यवसन इत्यर्थः, पूजावाससः सर्वदा धारणानौचित्यादित्याशयः। रत्नकर्णपूरमात्रं केवलं रत्नखचितं कुण्डलमेव आभरणं तत्समयालङ्कारो यस्य सः, अशनादिसमयेऽनेकभूषणपरिधानेन कष्टसम्भवादित्याशयः। समुचितं योग्यं भोजनम् एकपङ्क्त्यावशनं येषां तैः तथोक्तैः, आत्मतुल्यकुलसदाचारादिसम्पन्नैरित्याशयः, भूपतिभिः अन्यैः नृपतिभिः सह, अभिमता अभिलषिता ये रसा मधुरादयस्तेषाम् आस्वादेन ग्रहणेन जाता उत्पन्ना प्रीतिः सन्तुष्टिः यस्य सः, अवनिपः भूपतिः शूद्रकः आहारम् अशनं निर्वर्त्तयामास सम्पादयामास।

परिपीतेति। उपस्पृश्य आचमनं विधाय आस्थनमण्डपमयासीदिति वक्ष्यमाणक्रियया सम्बन्धः। 'उपस्पर्शस्त्वाचमनम्' इत्यमरः। भोजनानन्तरमाचमनस्यावश्यकर्त्तव्यत्वमुक्तं नारदेन—

"सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वानृतं वचः। पीत्वाऽपोऽध्येष्यमाणश्च आचामेत् प्रयतोऽपि सन्॥" इति।

परि सामस्त्येन पीता मुखसौगन्ध्यविधानार्थे गृहीता धूमवर्त्तिः अग्निसंयोगेन धूमसंयुक्ततमालकूटादिरचितद्रव्यविशेषो येन सः, गृहीतं मुखाभ्यन्तरे धृतं ताम्बूलं नागवल्लीदलं येन स तथोक्तः। प्रमृष्टः सलिलादिना संस्कृतो यो मणिकुट्टिमप्रदेशः रत्नमयबद्धस्थलं तस्मात्, उत्थाय उत्थानं विधाय, नातिदूरं वर्तते

वहां जाकर भगवान् शङ्करके पूजनोपरान्त उसी प्रकार निकलकर होमवरमें नित्यहोम समाधान पूर्वक विलेपनस्थानमें जाकर कस्तूरी, कर्पूर और कुङ्कुमके सुगन्धिसे अत्यन्त सुगन्धित चन्दनद्वारा समस्त शरीरको लिप्त किये; उस समय भ्रमरगण सुगन्धिके लोभसे उस चन्दनका अनुसरण करने लगे। उसके बाद वे मस्तक पर सौरभयुक्त मालतीपुष्पका शेखर धारण कर और वस्त्र परिवर्तन कर आभूषणोंके बीच केवल कर्णकुण्डल ही धारण किये, उसके अनन्तर एकपंक्तिमें भोजन करने योग्य राजगणके साथ अनेक प्रकारके रसोंका आस्वादनमें प्रीतिप्राप्ति करते हुए भोजनकार्य सम्पन्न किये।

तदनन्तर राजा आचमन कर धूमवर्ती (सिगरेट चिलम आदि) पीकर, पानचर्वण कर जलादिद्वारा परिष्कृत मणिमय बद्धभूमिसे उठकर खड़े हुए, तब समीपमें रहनेवाली प्रतीहारी वेगसहित शीघ्रतासे आकर हरसमय यष्टिधारण

१ उपचरित…। २…पूजश्च। ३ निवर्त्तित। ४ कृताम्बरपरीवर्त्तः। ५ निवर्त्तयामास। ६ धूपवर्त्तिः, धूपधूमवर्त्तिः। ७ कुट्टिमात्। ८ प्रसारितबाहुम्, प्रसारितम्। ९ 'अनवरत' इति पाठः क्वापि नोपलभ्यते।

वेत्रलताग्रहण-प्रसङ्गादतिजरठ-किसलयानुकारि-करतलं करेण अभ्यन्तरसञ्चारसमुचितेन परिजनेनानुगम्यमानः, धवलांशुक-परिगतपर्यन्ततया स्फटिक-मणिमय-भित्ति-बद्धमिवोपलक्ष्यमाणम्, अतिसुरभिणा मृगनाभिपरिमलेना-मोदिना चन्दनवारिणा सिक्तशिशिरमणिभूमिम्, अविरलविप्रकीर्णेन विमल-मणिकुट्टिम-गगनतलतारागणेनेव कुसुमोपहारेण निरन्तरनिचितम्, उत्कीर्णशालभञ्जिकानिवहेन सन्निहितगृहदेवतेनेव गन्धसलिल-क्षालितेन कलधौतमयेन स्तम्भसञ्चयेन विराजमानम्, अतिबहलागुरु-धूप-परिमलम्, अखिल-

या सा तया, ससम्भ्रमं सत्रासं प्रधावितया शीघ्रं व्रजन्त्या प्रतीहार्या द्वारपालिन्या प्रसारितं विस्तारितम्, अनवरतं निरन्तरं वेत्रस्य वेतसस्य या लता मृदुयष्टिः तस्या ग्रहणं धारणं तस्य प्रसङ्गात् अभ्यासात्, अतिजरठम् अतिकठिनम् अत्यन्तपरिणतमित्यर्थः यत् किसलयं पल्लवं 'पल्लवोऽस्त्री किसलयम्' इत्यमरः, तदनुकर्तुं शीलं यस्य तत्तथोक्तं करतलं हस्ताधःप्रदेशो यस्य तथोक्तम्, बाहुं भुजं 'भुजबाहू प्रवेष्टो दोः' इत्यमरः, अवलम्ब्य तदाश्रयं कृत्वेत्यर्थः, अभ्यन्तरे बाह्यजनागम्ये गृहप्रदेशे यः सञ्चारः सञ्चरणं गमनागमनमित्यर्थः तत्र समुचितेन योग्येन परिजनेन सेवकलोकेन अनुगम्यमानः अनुव्रज्यमानः ।

धवलांशुकेति । धवलानि निर्मलानि यानि अंशुकानि वस्त्राणि तैः परिगताः परिवेष्टिताः पर्यन्ता प्रान्तभागा यस्य तस्य भावस्तत्ता तया कारणेन, स्फटिकमणिमयी या भित्तिः कुड्यं तया निबद्धं रचितमिव उपलक्ष्यमाणम् अवलोक्यमानम् । अनेन वस्त्राणां शुभ्रत्वसौक्ष्म्यातिशयः प्रतीयते । इह क्रियोत्प्रेक्षा, सा च वाच्या । इत आरभ्य द्वितीयान्तपदानि 'आस्थानमण्डपम्' इत्यस्य विशेषणानि बोध्यानि ।

अतिसुरभिणेति । अतिसुरभिणा अत्यन्तघ्राणतर्पणेन 'सुरभिर्घ्राणतर्पणः' इत्यमरः, मृगनाभिपरिमलेन कस्तूरीगन्धेन 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे' इत्यमरः, आमोदिना अत्यन्तसुगन्धिना चन्दनवारिणा मलयजमिश्रितपानीयेन, सिक्ता सिञ्चिता अत एव शिशिरा शीतला मणिभूमी रत्नबद्धा भूर्यत्र तं तथोक्तम् ।

अविरलेति । अविरलं सान्द्रं यथा स्यात्तथा विप्रकीर्णेन विक्षिप्तेन, तथा विमलं निर्मलं मणिकुट्टिमं रत्नबद्धभूमिः गगनतलतारागणेन आकाशस्थितनक्षत्रमण्डलेनेव कुसुमोपहारेण पुष्पसमूहेन निरन्तरम् अनवरतं निचितं सान्द्रभावेन व्याप्तम् । इहोपमालुप्तोपमयोः परस्परमङ्गाङ्गिभावेन सङ्करालङ्कारः ।

उत्कीर्णेति । उत्कीर्णं उत्कीर्य विहितः शालभञ्जिकानिवहः पुत्तलिकापुञ्जो यस्मिन् तथोक्तेन, अतएव-सन्निहिता निकटस्था गृहदेवताः भवनाधिष्ठात्र्यो देव्यो यस्मिन् तथोक्तेनेव स्थितेन, गन्धसलिलैः सुगन्धिवारिभिः क्षालितेन धौतेन, कलधौतमयेन सुवर्णनिर्मितेव, स्तम्भानां स्थूणानां सञ्चयेन समुदायेन विराजमानं शोभमानम् । इह सन्निहितगृहदेवतेनेवेत्यत्र क्रियोत्प्रेक्षा ।

अतीति । अतिबहलः अत्यन्तप्रचुरो योऽगुरुः कृष्णागुरुः तस्य धूपस्य परिमलः सौरभं यस्मिंस्तत् तथोक्तम् ।

अखिलेति । अखिलः सम्पूर्णो विगलितो निर्गतो जलनिवहः सलिलसमुदायो यस्मिन् स तादृशः,

करनेसे थोड़ा कठिन पल्लवसमान पाणितलसम्पन्न हस्तको फैला दी, उस समय वे वही हस्तको अवलम्बन कर सभामण्डपमें चले गये; तदनन्तर अभ्यन्तरमध्य गमनागमनसमर्थ विश्वस्त सेवकगण उनका अनुव्रजन करने लगे ।

वह सभामण्डपका प्रान्तभाग शुभ्रवर्णवस्त्रसे परिवेष्टित था, जिससे सभामण्डप स्फटिकमणिमय भित्ति (देवाल) रचितके समान देखनेमें आ रहा था, नासिकाका परमतृप्ति करने वाला कस्तूरीके परम सौगन्ध्यसे सुगन्धित जो चन्दनजल उससे सभामण्डपका मणिमय बद्धस्थान सिक्त होकर शीतल हो गया था; आकाशस्थ नक्षत्रसमूहके समान स्वच्छ मणिमय बद्धस्थान पर पुष्पसमूह बड़े सघन भावसे विक्षिप्त होनेसे सभामण्डप निरन्तर व्याप्त था; सौरभयुक्त जलसे प्रक्षालित रजतनिर्मित स्तम्भसमूह में अनेकप्रकारकी पुत्तलिकायें खुदी हुई थीं, इससे मालुम पड़ता था कि गृहदेवतागण उपस्थित होकर वासकर रहे हैं; इस प्रकारके स्तम्भसमूहसे सभामण्डप शोभा पा रहा था; अगुरु ( अगर, सुगन्धित काष्ठविशेष ) धूपकी सुगन्धि अतिप्रचुर परिमाणमें निकल रही थी; सभामण्डपके मध्यस्थानमें रत्ननिर्मित

१ प्रसङ्गानति, प्रसङ्गादनति··· । २ करतलकरेण । ३···शुकजवनिकापरिगत··· । ४ स्फटिकमय । ५ निबद्ध । ६ अतिसुरभि । ७ परिगतेन । ८ शिशिरकर । ९ विमलमणिकुट्टिमं गगनतलं तारागणेनेव । १० दैवतेनेव ।

विगलितजलनिवह-धवल-जलधर-शकलानुकारिणा कुसुमामोदवासित-प्रच्छदपटेन, पट्टोपधानाध्यासितशिरोभागेन मणिमय-प्रतिपादुकाप्रतिष्ठितपादेन पार्श्वस्थ-रत्नपादपीठेन तुहिनगिरि-शिलातल-सदृशेन शयनेन सनाथीकृतवेदिकं भुक्त्वास्थानमण्डपमयासीत् ।

तत्र च शयने निषण्णः क्षितितलोपविष्टया शनैः शनैरुत्सङ्ग-निहितासिलतया खड्गवाहिन्या नव-नलिन-दल-कोमलेन करसम्पुटेन संवाह्यमानचरणस्तत्कालोचितदर्शनैरवनिपतिभिरमात्यैर्मित्रैश्च सह तास्ताः कथाः कुर्वन् मुहूर्त्तमिवासाञ्चक्रे ।

ततो नातिदूरवर्त्तिनीम् "अन्तःपुराद्वैशम्पायनमादायागच्छ" इति समुपजाततद्वृत्तान्त-प्रश्न-कुतूहलो राजा प्रतीहारीमादिदेश ।

---

अत एव धवलो निर्मलो यो जलधरो मेघः तस्य शकलं खण्डम् अनुकर्त्तुं शीलं यस्य स तेन। इत आरभ्य तृतीयान्तपदानि 'शयनेन' इत्यस्य विशेषणानि बोध्यानि। कुसुमानां पुष्पाणाम् आमोदेन सौगन्ध्येन वासितः सुगन्धीकृतः प्रच्छदपटः आस्तरणवस्त्रं यस्य स तेन। पट्टस्य क्षौमवस्त्रस्य यदुपधानम् उच्छीर्षकं तेन अध्यासितम् आश्रितं शिरोधाम मस्तकस्थापनस्थलं यस्य स तेन। मणिमयीषु रत्नरचितासु प्रतिपादुकासु आधारपीठेषु प्रतिष्ठिताः स्थिताः पादाः पल्यङ्कपादा यस्य स तेन। पार्श्वस्थं निकटस्थं रत्नपादपीठं मणिपादासनं यस्य स तेन। तुहिनगिरेः हिमालयपर्वतस्य यत् शिलातलं हिमच्छन्नतया श्वेतः प्रस्तरः, तत्सदृशेन तन्निभेन अत्यन्तधवलवर्णेनेत्यर्थः, शयनेन शय्यया, सनाथीकृता युक्ता वेदिका परिष्कृतभूमिर्यस्य तथोक्तम् आस्थानमण्डपं सभाभवनम् अयासीत् जगाम । इह 'धवलजलधरशकलानुकारिणा' इत्यत्र 'तुहिनगिरिशिलातलसदृशेन' इत्यत्र चार्थोपमा बोध्या ।

तत्रेति । शयने आस्तरणे निषण्ण उपविष्टो राजा शूद्रकः, क्षितितले पृथ्वीतले उपविष्टया निषण्णया, तथा उत्सङ्गे क्रोडे निहिता स्थापिता असिलता लतावत् कोमलो लम्बमानश्च खड्गो यया सा तया एवं भूतया खड्गवाहिन्या कृपाणधारिण्या कयाचित् नायिकया, नवं नूतनं यन्नलिनं पद्मं तस्य दलानि पत्राणि तद्वत् कोमलेन मृदुलेन, करसम्पुटेन हस्तद्वयेन शनैः शनैः मन्दं मन्दं संवाह्यमानौ सञ्चाल्यमानौ चरणौ पादयुगलौ यस्य स तेन तथोक्तेन। तत्काले शयनसमये उचितं राज्ञा स्वयमेव निश्चितत्वाद् योग्यं दर्शनं साक्षात्कारो येषां तैः तथोक्तैः। अवनिपतिभिः राजभिः अमात्यैर्मन्त्रिभिः मित्रैः सुहृद्भिश्च तास्ताः प्रस्तावोचिता नानाविधाः कथा आलापान् कुर्वन् विदधत् मुहूर्त्तं घटिकाद्वयमिव आसाञ्चक्रे अवतस्थे। वाक्यालङ्कारे इवेतिपदम्। 'नवनलिनम्' इत्यत्र लुप्तोपमा ।

तत इति। ततः कथासमाप्त्यनन्तरं नातिदूरवर्त्तिनीं यत्किञ्चिद्व्यवधानेनैव स्थितामित्यर्थः, प्रतीहारीं पूर्वोक्तलक्षणाम् , समुपजातं समुत्पन्नं तस्य शुकस्य वृत्तान्तप्रश्ने प्रवृत्तिपृच्छायां 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इति, 'प्रश्नोऽनुयोगः पृच्छा च' इति चामरः, कुतूहलं कौतुकम् आश्चर्यमित्यर्थः यस्य स तादृशः, राजविशेषणमिदम्। अन्तःपुरात् अवरोधात् तं वैशम्पायनं शुकम् आदायागच्छ गृहीत्वाव्रज इति इत्येवं रूपम् आदिदेश आज्ञापयामास ।

---

आधारपीठके ऊपर एक पलङ्ग पर हिमालयके पाषाणखण्डके समान श्वेतवर्ण शय्या बनायी हुई थी; समग्रजल निकलजानेसे शुभ्रवर्ण मेघखण्डका अनुकरण करने वाला पुष्पवासित आच्छादनवस्त्र उस शय्याके ऊपर विन्यस्त था, शिरोभागमें रेशमीके वस्त्रसे बनायो हुई तकिया थी, उस पलङ्गके पादसमूह ( पौए ) पादुकाकृति रत्नमय आधारके ऊपर संस्थापित थे, इस प्रकार उसके पार्श्व ( बगल ) में मणिमय एक पादपीठ स्थापित था ।

महाराज शूद्रक उस शय्याके ऊपर बैठ गये, तब खड्गधारिणी कोई स्त्री आकर पृथिवीमें बैठकर उस खड्गको गोदमें रखकर, अभिनव कमलपत्रके समान कोमल हस्तद्वयसे राजाका पादयुगल धीरे धीरे सञ्चालन करने लगी। उस समयमें जिन लोगोंको राजाका दर्शन निर्दिष्ट था, ऐसे सामन्तराजगण, सचिवगण एवं मित्रगणके सहित अनेक प्रकारके वार्तालाप करते हुए राजा कुछ समय तक वहां ठहरे ।

तदनन्तर उस शुकपक्षीके वृत्तान्त जाननेके लिये राजाको कुतूहल उत्पन्न हुआ, बाद कुछ समीपमें ही रहनेवाली प्रतीहारीको आज्ञा दिये कि—'अन्तःपुर ( हवेली ) से वैशम्पायनको ले आओ' ।

---

१ परिगलित... । २ अध्यवसित । ३...शिरोधाम्ना । ४ रत्नपीठेन, रत्नमयपीठेन । ५ तुहिनशिलातलसदृशशयनेन । ६ शयनतलनिषण्णः । ७ समुपयात ।

सा क्षितितल-निहित जानु-करतला "यथाज्ञापयति देवः" इति शिरसि कृत्वाज्ञां यथादिष्टमकरोत् ।

अथ मुहूर्त्तादिव[1] वैशम्पायनः प्रतीहार्य्या गृहीतपञ्जरः कनकवेत्रलतावलम्बिना किञ्चिदवनतपूर्वकायेन[2] सितकञ्चुकाच्छन्न[3]-वपुषा जराधवलितमौलिना गद्‌गदस्वरेण मन्दमन्दसञ्चारिणा[4] विहङ्गजातिप्रीत्या जरत्कलहंसेनेव कञ्चुकिनानुगम्यमानो राजान्तिकमाजगाम ।

क्षितितल-निहितकरतलस्तु[5] कञ्चुकी राजानं व्यज्ञापयत्[6]—"देव ! देव्यो विज्ञापयन्ति, देवादेशादेष वैशम्पायनः स्नातः कृताहारश्च देवपादमूलं[7] प्रतीहार्य्यानीतः" इत्यभि-

---

सेति । सा प्रतीहारी क्षितितले भूमितले विहितौ स्थापितौ जानू नलकीलकौ करतले पाणितले च यया सा तथोक्ता, एतेन विनयविशेषो ध्वनितः, यथा येन प्रकारेण आज्ञापयति आदिशति देवो भवान् इत्यभिधाय शिरसि मस्तके आज्ञाम् आदेशं कृत्वा विधाय स्वमस्तके करतलं स्थापयित्वेत्याशयः, यथा येन प्रकारेण राज्ञा आदिष्टम् आज्ञापितं तथा अकरोत् विदधौ ।

अथेति । अथ अन्तःपुरप्रवेशानन्तरं मुहूर्त्तादिव घटिकाद्वयविलम्बादिव । गृहीतम् आत्तं पञ्जरं लौहशलाकानिर्मितपक्षिनिलयं यस्य स तथोक्तः । कनकेन सुवर्णेन खचिता या वेत्रलता वेतसयष्टिः तामवलम्बते धारणं करोतीत्येवं शीलो यः स तेन तथोक्तेन, इतः प्रभृति तृतीयान्तपदानि कञ्चुकिनेत्यस्य विशेषणानि बोध्यानि । किञ्चित् ईषत् अवनतः वार्द्धक्यवशादानम्रः पूर्वकायो नाभेरूर्द्ध्वभागो यस्य तेन तादृशेन, सितकञ्चुकेन शुभ्रकूर्पासकेन आच्छन्नम् आच्छादितं वपुर्देहो यस्य स तेन तादृशेन, जरया वृद्धावस्थया धवलितः स्वच्छीकृतः मौलिः केशसमूहो यस्य तेन तादृशेन, गद्‌गदः अस्फुटः स्वरः कण्ठध्वनिर्यस्य स तेन तादृशेन, कञ्चुकिना—

"अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः । सर्वशास्त्रार्थकुशलः कञ्चुकीत्यभिधीयते ॥"

इत्युक्तस्वरूपेण सौविदल्लकेनेत्यर्थः, मन्दं मन्दं शनैः शनैः सञ्चरितुं शीलं यस्य स तेन तादृशेन विहङ्गजातिप्रीत्या पक्षित्वस्नेहेन जरत्कलहंसेनेव वृद्धराजहंसेनेव अनुगम्यमानोऽनुव्रज्यमानः 'कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे' इति मेदिनी, वैशम्पायनः शुकः राजान्तिकं नृपसमीपम् आजगाम आययौ । इह 'जरत्कलहंसेनेव' इत्युपमा ।

क्षितीति । क्षितितले धरणीतले 'धरा धरित्री धरणी क्षोणी ज्या काश्यपी क्षितिः' इत्यमरः, निहितं स्थापितं करतलं हस्ततलं येन स कञ्चुकी पूर्वोक्तलक्षणः राजानं भूमिपं व्यज्ञापयत् न्यवेदयत्—'हे देव स्वामिन् ! देव्यो महिष्यः विज्ञापयन्ति सूचयन्ति, देवादेशात् भवतो नियोगात् एष पुरोऽवलोक्यमानो वैशम्पायनः शुकः स्नातः पूर्वं कृतस्नानः पश्चात् कृताहारो विहितभोजनः, देवस्य भवतः पादमूलं सन्निधिं प्रतीहार्या द्वारपालिन्या अनया आनीतः प्रापितः' इत्यभिधाय इत्युक्त्वा तस्मिन् कञ्चुकि

---

प्रतीहारी जानुद्वय तथा हस्तद्वय पृथिवीमें रखकर बोली—"महाराज ! आप जैसी आज्ञा दें" ऐसा कहकर राजाकी आज्ञाको मस्तकपर धारण कर उसी आज्ञानुसारसे कार्य किया, ( शुकपञ्जरको लानेके लिए चली गयी ) ।

उसके बाद प्रतीहारी मुहूर्त मध्यमें पिंजरा लेकर वैशम्पायनको राजाके समीप ले आयी । अपने जातिके प्रति प्रेमवश वृद्धकलहंसके समान धीरे धीरे चलनेवाला एक वृद्ध ब्राह्मण उस वैशम्पायनके पीछे पीछे आया; उसके हाथमें एक सुवर्ण खचित वेत्र ( बेंत ) यष्टि था, बुढ़ौती आ जानेके कारण नाभिके ऊपर भागमें कुछ अवनत हो गया था, शुभ्रकञ्चुक ( सफेद चुस्त पोशाक ) से उसका शरीर आच्छादित था, वृद्धावस्थाके कारण केशसमूह शुभ्रवर्ण एवं कण्ठस्वर अस्पष्ट हो गया था ।

वह वृद्ध ब्राह्मण पृथिवीमें हस्तद्वय संस्थापनपूर्वक राजाको निवेदन किया—'महाराज ! अपने घरके देवियां आपको जना रहीं है कि—आपके आज्ञानुसार वैशम्पायनको स्नान और भोजन करा दिया गया है, इसके बाद इस समय प्रतिहारी आपके चरण समीपमें इसको ले आयी है' यह कहकर ब्राह्मण चला गया, उसे चले जाने

---

१ मुहूर्त्तादिव । २ आनत... । ३ अवच्छन्न, अवच्छिन्न । ४ चारिणा । ५ विहितकरतलस्तु, निहितकरस्तु । ६ व्यजिज्ञापयत् । ७ पादमूले ।

458.

धाय गते[1] च तस्मिन् राजा वैशम्पायनमपृच्छत्—"कच्चित्[2] अभिमतमास्वादितमभ्यन्तरे भवता किञ्चिदशनजातम् ?" इति।

स[3] प्रत्युवाच—"देव ! किं वा नास्वादितम् ?, आमत्त-कोकिल लोचनच्छविर्नीलपाटलः कषायमधुरः प्रकाममापीतो जम्बूफलरसः, हरि-नखरभिन्न[4]-मत्तमातङ्ग-कुम्भ मुक्त-रक्तार्द्र-मुक्ताफल-त्वींषि खण्डितानि दाडिम[5]-बीजानि, नलिनीदल-हरिन्ति द्राक्षाफल-स्वादूनि च दलितानि[6] स्वेच्छया प्राचीनामलकीफलानि। किं वा प्रलपितेन बहुना, सर्वमेव देवीभिः स्वयं करतलोपनीयमानममृतायते" इति।

एवं वादिनो वचनमाक्षिप्य नरपतिरब्रवीत्—"आस्तां तावत् सर्व्वमे[7] वेदम, अपनयतु नः

---

नि गते तस्मात् स्नानात् निष्क्रान्ते सति, राजा शूद्रकः वैशम्पायनं शुकम् अपृच्छत् पृष्टवान्-अभ्यन्तरे अन्तःपुरे भवता त्वया अभिमतम् इष्टं किञ्चित् अशनजातं भक्ष्यवस्तुसमूहः आस्वादितमिति काकुः भुक्तं किमित्यर्थः ? इति कच्चित् ज्ञातुमभिलषामि 'कच्चित् कामप्रवेदने' इत्यमरः।

स इति। स वैशम्पायनः प्रत्युवाच उत्तरं ददौ—देव नाथ ! किं वा नास्वादितमिति काकुः ? अर्थात् मद्भक्षयोग्यं सर्वमेव भक्षितमित्यर्थः। आमत्तः मधुपानेनोन्मत्तो यः कोकिलः पिकः 'वनप्रिय परभृतः कोकिलः पिक इत्यपि' इत्यमरः, तस्य लोचनच्छविर्नयनकान्तिः सेव छविर्यस्य स तादृशः नीलश्चासौ पाटलः श्वेतरक्तश्चेति नीलपाटलः 'श्वेतरक्तस्तु पाटलः' इत्यमरः, कषायोऽम्लश्चासौ मधुरो मिष्टरसश्चेति कषायमधुरः जम्बूफलानां रसोऽन्तर्भूतद्रवः प्रकामं पर्याप्तं यथा स्यात्तथा आपीतः समर्यादं पानविषयीकृतः। इह '......कोकिललोचनच्छविः' इत्यत्र लुप्तोपमा।

हरीति। हरेः सिंहस्य नखरैः पुनर्भूभिः भिन्ना विदारिता ये मत्तमातङ्गानाम् उन्मत्तगजानां कुम्भाः शिरःस्था मांसपिण्डाः, तेभ्यो मुक्तानि अपगतानि यानि रक्तार्द्राणि शोणितस्विन्नानि मुक्ताफलानि मौक्तिकानि तेषां त्विष इव त्विषः कान्तयो येषां तानि तथोक्तानि, दाडिमबीजानि दाडिमफलबीजानि खण्डितानि शकलीकृतानि चञ्चुपुटेन मयेति शेषः। उक्तालङ्कारः।

नलिनीति। नलिनी कमलिनी तस्या दलानि पत्राणि तद्वत् हरिन्ति हरिद्वर्णानि, तथा द्राक्षाफलवत् मृद्वीकासस्यवत् मृद्वीका गोस्तनी द्राक्षा' इत्यमरः, स्वादूनि सुमधुराणि च प्राचीनामलकीफलानि क्षीरधात्रीसस्यानि स्वेच्छया स्वाधीनतया दलितानि चञ्चुपुटेन मर्दयित्वा खादितानीत्यर्थः। इह 'नलिनीदलहरिन्ति' इत्यत्र 'द्राक्षाफलस्वादूनि' इत्यत्र च लुप्तोपमा, अनयोश्च मिथो नैरपेक्ष्येण संसृष्टिः।

किं वेति। बहुना अधिकेन प्रलपितेन कथितेन किं वा फलं न किमपि प्रयोजनमित्यर्थः। देवीभिः राजदाराभिः स्वयं न त्वन्यतः करतलोपनीयमानं हस्ततलैः मह्यं दीयमानं सर्वं निखिलमेव वस्तु अमृतायते सुधावदाचरति स्वादुत्वादित्याशयः। 'अमृतायते' इत्यत्र क्यङ्प्रत्ययत्वादात्मनेपदम्। वर्त्तमानसामीप्ये 'वर्तमानसामीप्ये वर्तमानवद्वा' इत्यनेनात्र वर्त्तमानत्वम्। क्यङ्‌न्तोपमालङ्कारः। इति वाक्यसमाप्ती 'इति हेतुप्रकरणप्रकाशादिसमाप्तिषु' इत्यमरः।

एवमिति। एवं पूर्वोक्तप्रकारेण वादिनः कथयतः शुकस्य वचनं वाक्यम् आक्षिप्य असमाप्तमेव

---

पर राजा वैशम्पायनसे पूछा—'क्या तूं अन्तःपुरमध्यमें अभिमत कुछ भक्ष्यवस्तु भोजन किये हो ? यह मैं जाननेकी इच्छा करता हूं'।

वैशम्पायन उत्तर दिया—"देव ! क्या मैं नहीं खाया हूं ? मधुपानमत्त कोकिलके आंखके समान कान्तियुक्त, नील और श्वेतरक्त वर्ण एवं कषाय और मधुररसयुक्त जम्बूफल ( जामुन ) का रस यथेष्ट पान किया हूं। सिंहके नखसे विदारित मतवाले हाथीके कुम्भसे निःसृत रक्तयुक्त मुक्ताके समान कान्तिसम्पन्न दाडिमीफल ( अनार ) का बीज ( दाना ) चञ्चुपुटद्वारा खण्डनपूर्वक खाया हूं, और कमलपत्रके समान हरिद्वर्ण तथा स्वादिष्ट द्राक्षाफल ( मुनक्का ) के समान पुरानी आमलकी ( आँवला ) इच्छापूर्वक चर्वणकर भक्षण किया हूं, अधिक कहनेकी आवश्यकता नहीं, देवियोंके अपने हाथसे दिये हुए समस्त वस्तुएं मेरे समीप अमृतके समान मालुम पड़ते थे।"

इस प्रकार वैशम्पायनको कहते हुए ही राजा उसके वचनमें बाधा डालकर बोले—'यह सब इस समय रहने

---

१ अपगते। २ कच्चित्। ३ स तु। ४ करखरनखरनिर्भिन्न। ५ दाडिमी..। ६ चूर्णितानि, वलितानि, समास्वादितानि। ७ सर्व्वम्।

कुतूहलम् , आवेदयतु भवानादितः प्रभृति कार्त्स्न्येनात्मनः, जन्म कस्मिन् देशे ? भवान् कथं जातः? केन वा नाम कृतम्? का ते माता ? कस्ते पिता ? कथं वेदानामागमः ? कथं शास्त्राणां परिचयः ? कुतः कलाः समासादिताः ? किं जन्मान्तरानुस्मरणम् ? उत वरप्रदानम् , अथवा विहगवेश-धारी कश्चिच्छन्नो निवससि ? क्व पूर्वमुषितम् ? कियद्वा वयः ? कथं पञ्जरबन्धः ? कथं चण्डाल-हस्तगमनम् ? इह वा कथमागमनम् ?" ।

वैशम्पायनस्तु स्वयमुपजातकुतूहलेन सबहुमानमवनिपतिना पृष्टो मुहूर्त्तमिव ध्यात्वा सादरमब्रवीत्—"देव ! महतीयं कथा, यदि कौतुकमाकर्ण्यताम्—

अस्ति पूर्वापर-जलनिधि-वेलावलग्ना मध्यदेशालङ्कारभूता मेखलेव भुवः,

---

निवार्य अन्यदेव ज्ञातुं नरपती राजा अब्रवीत् उवाच—इदं पूर्वोक्तं सर्वमेव तावत् आदौ आस्तां तिष्ठतु, नः अस्माकं कुतूहलं कौतुकं पक्षिणः सर्वशास्त्रविषयकं ज्ञानं कथं जातमित्याश्चर्यमित्यर्थः 'कौतूहलं कौतुकं च कुतुकं च कुतूहलम्' इत्यमरः, अपनयतु दूरीकरोतु । तदेवोपपादयति—आवेदयत्विति । कार्त्स्न्येन साकल्येन आदितः प्रभृति जन्मसमयादारभ्य सर्वम् आत्मनः स्वस्य आवेदयतु निरूपयतु । कस्मिन् देशे कुत्र जनपदे जन्म उत्पत्तिः ? । कथं केन प्रकारेण भवान् जात उत्पन्नः ? केन महात्मना नाम कृतं वैशम्पायनेत्यभिधानं विहितम् ? ते तव का माता जननी ? ते कः पिता जन्मदः ? कथं केन प्रकारेण वेदानाम् ऋग्यजुःसामाथर्वणाम् आगम उपलब्धिः प्राप्तिरिति यावत् ? कथं शास्त्राणां न्यायमीमांसाप्रभृतीनां परिचयो विशेषबोधः ? कुतः कस्मात्पुरुषात् कलाः चतुःषष्टिप्रकाराः नृत्यगीतादिविद्याः समासादिताः प्राप्ताः ? किं हेतुकं किन्निमित्तकं जन्मान्तरस्य पूर्वजन्मोदन्तस्य अनुस्मरणं स्मृतिः ? उत किं वरप्रदानं कस्यचिन्महात्मनः प्रसादात् वरदानप्राप्तिः येन जन्मान्तरानुस्मरणमित्यर्थः 'आहो उताहो किमुत विकल्पे किं किमूत च' इत्यमरः । अथवा सिद्ध एव किं वा कश्चित् कश्चन विहगवेषधारी पक्षिस्वरूपधारी छन्नो गुप्तः सन् निवससि वासं विदधासि । क्व वा कस्मिन् स्थाने अत्रागमनात्पूर्वम् उषितम् अवस्थितम् ? वा अथवा कियद् वयः वार्षिकावस्था केत्यर्थः ? कथं केन प्रकारेण पञ्जरबन्धनं पञ्जरमध्येऽवस्थानम् ? कथं चाण्डालहस्तगमनम् अन्त्यजहस्तप्राप्तिः ? इह अस्मिन् प्रदेशे कथं वा आगमनम् उपस्थितिः ? इति प्रश्नसमाप्तिसूचनार्थः । उपरितना ये प्रश्नाः सन्ति तेषु कतिपया शुकस्नानाहारादिसमये तस्मादेवावगतराजपत्नीनां सेविकानां वा सकाशाद्राज्ञाऽवगताः केचिच्च स्वयमूहिता ज्ञातव्याः, अन्यथा जातिस्मरोऽयं शुक इति ज्ञानाभावे तद्विषयकप्रश्नानुपपत्तिः स्यादित्यवधेयम् ।

वैशम्पायनस्त्विति । पुनरर्थे त्विति । तदनन्तरं वैशम्पायनः शुकः सबहुमानं सादरम् उपजातं समुत्पन्नं कुतूहलं कौतुकं यस्य तेन तथोक्तेन स्वयम् आत्मनैव अवनिपतिना भूपतिना पृष्टः कृतप्रश्नः मुहूर्त्तं घटिकाद्वयमिव ध्यात्वा चिन्तयित्वा सादरं सबहुमानं पुनः अब्रवीत् उवाच—देव नाथ ! यत्पृष्टं तद्विषयिणी महती विस्तृता इयं कथा वृत्तान्तः । यदि चेत् कौतुकं कौतूहलं तर्हि आकर्ण्यतां श्रूयताम्—

अस्तीति । अस्य दूरस्थेन विन्ध्याटवी नामेति कर्तृपदेन सम्बन्धः । तथा च विन्ध्याटवी विन्ध्यारण्यं नाम प्रसिद्धमस्तीत्यर्थः, 'अटव्यरण्यं विपिनम्' इत्यमरः । इह प्रथमान्तपदानि विन्ध्याटवीविशेषणानि

---

दीजिए, आप हम लोगोंके कौतुकको निवृत्ति कीजिए, पहले तो अपना समस्त वृत्तान्त कहिये;—किस देशमें आपका जन्म है? वह जन्म कैसे हुआ ? आपका 'वैशम्पायन' नाम कौन रक्खा ?, आपकी माता कौन? पिता कौन, ? वेदोंकी प्राप्ति कैसे ? शास्त्रोंका परिचय कैसे ? कलायें कहांसे मिली ? जन्मान्तरीय पुण्यबलसे क्या आपको जन्मान्तरका वृत्तान्त स्मरण है ? किस महापुरुषके वरदान प्रभावसे आपको जन्मान्तर वृत्तान्त स्मरण रखनेमें सामर्थ्य मिला है ?, किंवा पक्षिरूपमें आप कोई महापुरुष प्रच्छन्नभावसे अवस्थान कर रहे हैं ? पहले कहां थे ? आपकी अवस्था क्या है ? पिंजरेमें बन्धन कैसे ? चण्डालके हाथमें कैसे आ गये ? और यहां किस उद्देश्यसे आगमन हुआ ?

राजा कुतूहलवशसे आदरपूर्वक यह सभी विषय पूछे, वैशम्पायन थोड़ी देर ध्यान कर आदरयुक्त बोला—"राजन् ! यह वृत्तान्त अत्यन्त विस्तृत है, तथापि यदि आपको कुतूहल है तो सुनिये—

पूर्वसमुद्रके तटसे लेकर पश्चिमसमुद्रके तट पर्यन्त विस्तृत, मध्यदेशका आभूषणस्वरूप और पृथिवीके

---

१ का माता । २ कः पिता । ३ आसादिताः । ४ किं हेतुकः । ५ विहङ्गवेष''' ६ कुत्र । ७ कथं वा । ८ बन्धनम् । ९ चाण्डाल''' । १० कौतूहलम् । ११'''वेलावनलग्ना ।

वन-करिकुल-मदजल-सेक-संवर्द्धितैरतिविकच-धवल-कुसुमनिकरमत्युच्चतया तारा[1]-गणमिव शिखरदेशलग्नमु[2]द्वहद्भिः पादपैरुपशोभिता, मदकल-कुररकुल-दश्यमान-मरीचपल्लवा, करि-कलभ-करमृदित-तमालकिसलयामोदिनी, मधुमदोपरक्त-केरली-कपोल-कोमलच्छ[3]-विना सञ्चरद्वनदेवता-चरणालक्तक-रस-रञ्जितेनेव पल्लवचयेन[4] संच्छादिता, शुककुल-दलितदाडिमीफल-द्रवार्द्रीकृत-तलैरतिचपल-कपिकुल-कम्पितै[5]-कम्पिल्ल-च्युतपल्लवफल-

बोध्यानि। पूर्वश्चापरश्च पूर्वापरौ प्राच्यप्रतीच्यदिग्वर्त्तिनौ यौ जलनिधी समुद्रौ तयोः यद्वेलावनं तटविपिनं तावत्पर्यन्तम् अवलग्ना सम्बद्धा, पूर्वसमुद्रतीरतः पश्चिमसमुद्रतीरं यावत्प्रसृतेत्यर्थः। तत्समये विन्ध्याटवी एवंविधैवासीदित्यवधेयम्। मध्यदेशस्य—

"हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि। प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः॥"

इति मनुलक्षितदक्षिणोत्तरयोर्हिमवद्विन्ध्ययोः पूर्वपश्चिमयोश्च प्रयागकुरुक्षेत्रयोश्च मध्यवर्त्तिस्थानस्य अलङ्कारभूता अनेकप्रकारवृक्षलतासिद्धाश्रमादिपूर्णत्वेन भूषणस्वरूपा मध्यभूषणस्वरूपत्वादेव भुवो मेदिन्याः मेखला रशनादामेव 'स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा' इत्यमरः।

वनेति। वने अरण्ये ये करिणो हस्तिनः तेषां कुलानि यूथानि तेषां मदजलस्य दानवारिणः सेकेन सिञ्चनेन संवर्द्धितैः वृद्धिमापादितैः, तथा अत्युच्चतया अत्युन्नततया शिखरदेशलग्नं शिरोभागसंयुक्तं तारागणं नक्षत्रमण्डलमिव अतिविकचानाम् अतिविकसितानां धवलानां शुभ्राणां कुसुमानां पुष्पाणां निकरं समुदायम् उद्वहद्भिः धारणं कुर्वद्भिः पादपैः वृक्षैः उपशोभिता भूषिता। इह 'शिखरदेशलग्नं तारागणमिव' इत्यत्र जात्युत्प्रेक्षा।

मदेति। मदकलैः मदोन्मत्तैः कुरराणां मत्स्यनाशनानां कुलानि समूहाः तैः दश्यमाना चञ्चुपुटेन संदश्य आस्वाद्यमाना मरिचानां कोल्कानां पल्लवाः किसलयानि यस्यां सा 'मरिचं कोलकं कृष्णभूषणं धर्मपत्तनम्' 'पल्लवोऽस्त्री किसलयम्' इत्यमरः।

करीति। करिणां हस्तिनां कलभाः त्रिंशद्वर्षीयशावकाः 'कलभः करिशावकः' इत्यमरः, तेषां करैः शुण्डादण्डैः मृदितानि मर्दितानि यानि तमालकिसलयानि तापिच्छपल्लवानि 'तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे' इति मेदिनी, तेषाम् आमोदः सुगन्धिः विद्यते यस्यां सा तादृशी।

मध्विति। मधु मद्यं तस्य यो मदः पानेन मत्तता तेन उपरक्ताः किञ्चिल्लोहितस्वरूपा ये केरलीनां केरलदेशोत्पन्नानां सुन्दरीणां कपोला गल्लप्रदेशाः तेषामिव कोमला मृद्वी छविः कान्तिर्यस्य तेन, सञ्चरन्तीनाम् इतस्ततो व्रजन्तीनां वनदेवतानाम् अरण्याधिष्ठातृदेवीनां चरणालक्तकरसैः पादस्थितयावकद्रवैः रञ्जितेनेव रक्तीकृतेनेव पल्लवचयेन वृक्षलतानां किसलयसमूहेन सञ्छादिता आच्छादिता। इह '......कपोलकोमलच्छविना' इत्यत्र लुप्तोपमा, '......रञ्जितेनेव' इत्यत्र क्रियोत्प्रेक्षा, अनयोरङ्गाङ्गिभावेन सङ्कराऌङ्कारः।

शुकेति। शुककुलेन कीरपक्षिसमुदायेन दलितानां चञ्चुपुटेन विदारितानां दाडिमीफलानां द्रवैः रसैः आर्द्रीकृतानि आर्द्रत्वमुपनीतानि तलानि अधोवर्त्तिस्थानानि येषां तैः। इत आरभ्य तृतीयान्तपदानि

मेखलाके समान विन्ध्याटवी नामका एक जङ्गल है। वनैये गजसमूहके मदजलसेकसे सम्बर्द्धित एवं अत्यन्त उच्च होनेके कारण मस्तकसंलग्न नक्षत्रसमूहके समान विकसित शुभ्रवर्ण पुष्पसमूहधारी अनेकविध वृक्ष उस वनकी शोभाको उत्पन्न कर रहे हैं, कहीं पर मदमत्त कुरर ( चकवा ) पक्षिगण चञ्चुद्वारा मरीचके पल्लव दंशन कर रहे हैं, कहीं पर गजशावकगण शुण्डद्वारा तमालवृक्षके पल्लवको तोड़ देनेसे सुगन्ध निकल रहा है, मद्यपान करनेसे रक्तवर्ण, केरलदेशीय रमणीगणके कपोलस्थलके समान कोमल कान्तियुक्त पल्लवसमूह, इधर उधर घूमनेवाली वनदेवतागणके चरणके अलक्तक ( अल्ता ) रसमें रञ्जित हो किसी वनस्थलको आच्छादन कर रहा है; अनेक प्रकारकी लतायें परस्पर मिलित होकर किसी किसी जगहमें मण्डपके स्वरूप धारण कर रही हैं, शुकपक्षिगणके चञ्चुद्वारा दाड़िम फल ( अनार ) के बीज ( दाना ) खण्डन करनेसे उसके रस द्वारा वह लतामण्डपका तलदेश आर्द्र हो रहा है, अत्यन्त चञ्चल वानरोंसे कम्पित होने पर कम्पिल्लवृक्षसे फल और पल्लव, उस लतामण्डपके बीच गिर रहे हैं,

१ तारका। २ प्रदेशसंलग्नम्। ३ 'छविना' इति पाठः क्वचिन्नास्ति। ४ पल्लवप्रचयेन। ५ कम्पित इत्यपि पाठः क्वचिन्नोपलभ्यते। ६ कक्कोल, कङ्कोल।

शकलैः[1] अनवरत-निपतित[2]-कुसुमरेणु-पांशुलैः पथिक-जन-रचित-लवङ्गपल्लव-संस्तरैः[3] अतिकठोर-नारिकेल[4]-केतकी-करीर-बकुल[5]-परिगत-प्रान्तैः ताम्बूलीलतावनद्ध-पूग-षण्ड-मण्डितैर्वनलक्ष्मी-वासभवनैरिव[6] विराजिता[7] लतामण्डपैः, उन्मद-मातङ्ग-कपोलस्थल-गलित[8]-सलिल[9]-सिक्तेनेव निरन्तरमेखलालतावनेन[10] मदगन्धिनान्धकारिता, नख-मुख-लग्नेभ-कुम्भ-मुक्ताफल-लुब्धैः शबरसेनापतिभिरभिहन्यमानकेशरिशता प्रेताधिपनगरीव सदा-सन्निहितमृत्यु-भीषणा महिषाधिष्ठिता च, समरोद्यतपताकिनीव[11] बाणासनारोपितशिलीमुखा[12]

अग्रिमस्थ'लतामंडपैः' इत्यस्य विशेषणानि बोध्यानि । अतिचपलैः अत्यन्तचञ्चलैः कपिकुलैः वानरसमूहैः कम्पितेभ्यः आन्दोलितेभ्यः कम्पिल्लेभ्य कोशफलवृक्षेभ्यः च्युतानि पतितानि पल्लवफलानां किसलयफलानां शकलानि खण्डानि येषु तैः तथोक्तैः । अनवरतनिपतितानां निरन्तरप्रच्युतानां कुसुमानां पुष्पाणां रेणुभिः परागधूलिभिः पांशुलैः सरजस्कैः । पथिकजनैः पान्थपुरुषैः रचिता उपवेशनार्थं निर्मिता लवङ्गपल्लवानां लवङ्गवृक्षविशेषकिसलयानां संस्तरा आसनानि येषु तैः तथोक्तैः । अतिकठोरा अत्यन्तकठिनाः परिपक्वा इत्यर्थः ये नारिकेला लाङ्गलीवृक्षाः, केतक्यः क्रकचपर्णाः, करीराः पत्रविहीनाः कण्टकसहिता वृक्षविशेषाः वकुलाश्च: तैः परिगताः परितो व्याप्ताः प्रान्ताः पर्यन्तप्रदेशा येषां तैः तथोक्तैः, ताम्बूलीलताभिः नागवल्ली व्रततीभिः अवनद्धं संबद्धं यत् पूगखण्डं क्रमुकवनं तेन मण्डितैः अलंकृतैः, अत एव वनलक्ष्म्या विपिनश्रियः वासभवनैरिव वसतिगृहैरिव लतामण्डपैः बल्लिजनाश्रयैः विराजिता उपशोभमाना ।

इह दाडिमीफलद्रवेण मध्यभागस्य आर्द्रीकरणसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्त्यलङ्कारः, 'वनलक्ष्मीवासभवनैरिव' इत्यत्र जात्युत्प्रेक्षा च, द्वयोरपि परस्परनैरपेक्ष्येण स्थितत्वात्संसृष्टिरलङ्कारः ।

उन्मदेति । उन्मदानां मदोन्मत्तानां मातङ्गानां गजानां कपोलस्थलेभ्यो गल्लप्रदेशेभ्यो गलितैः च्युतैः सलिलैः मदजलैः सिक्तेनेव सिञ्चितेनेव सता, अत एव मदगन्धिना गजदानजलगन्ध इव गन्धो यस्मिन् तेन तथोक्तेन, एलालतानां चन्द्रवालावल्लीनां वनेन विपिनेन निरन्तरं सान्द्रं यथा स्यात्तथा अन्धकारिता आच्छादितेत्यर्थः । इह क्रियोत्प्रेक्षा ।

नखेति । नखानां पुनर्भूणां मुखेषु अग्रेषु लग्नानि आसक्तानि यानि इभकुम्भमुक्ताफलानि सिंहविदारितगजमस्तकमांसपिण्डोद्भवानि मौक्तिकानि तेषु लुब्धैः लोलुपैः शबराणां किरातानां सेनापतिभिः सैन्याध्यक्षैः अभिहन्यमानं व्यापाद्यमानं केशरिशतं मृगेन्द्रमण्डलं यस्यां सा तथोक्ता ।

प्रेतेति । प्रेताधिपस्य यमराजस्य नगरीव संयमिनीपत्तनमिव, सदा सर्वस्मिन् काले सन्निहित-समीपवर्ती मृत्युः यमः तेन भीषणा भयदायिनी पक्षे—व्याघ्रादिहिंसकवर्गाक्रमणसम्भवात् भीषणा भयकारिणी, महिषो यमस्य वाहनं तेन अधिष्ठिता सहिता, पक्षे—महिषैः वन्यसैरिभैः अधिष्ठिता व्याप्ता च 'लुलायो महिषो वाहद्विषत्कासरसैरिभाः' इत्यमरः । इतः प्रभृति 'क्वचिद्गृहीतव्रतेव' इत्यन्तं यावत् साधारणधर्मादिसद्भावात्पूर्णोपमालङ्कारः ।

समरोद्यतेति । समरे युद्धे उद्यता प्रवृत्ता या पताकिनी सेना तद्वदिव बाणासनेषु चापेषु आरोपिताः

निरन्तर निपतित कुसुमसमूहके धूलिसे लतामण्डपका तलदेश धूलिमय हो रहा है, नारिकेल, केतकी (केवड़ा), करील (जिसमें पत्ते नहीं होते हैं) और बकुलवृक्ष उस लतामण्डपसमूहके चारों दिशामें वेष्टन किये हैं; ताम्बूल (पान) लतावेष्टित गुवाकवृक्ष (सुपारीका पेड़) सब उस लतामण्डपसमूहके शोभाको बढ़ा दिये हैं, अतएव वनलक्ष्मी वासभवनके समान अवस्थित उस लतामण्डपसमूहद्वारा विन्ध्याटवी अत्यधिक शोभा पा रही है, मतवाले हस्तिगणके कपोलस्थलसे निःसृत मदजलद्वारा सिक्त होकर जो एलायची लताका वन, मदजलके सदृश सुगन्धियुक्त हो किसी किसी स्थानमें सघनभावसे आच्छादित कर रक्खा है; व्याधसेनापतिगण, सिंहके नखोंसे निःसृत गजमुक्ताके लोभसे अनेक सिंहकों विनाश कर रहा है। और वह विन्ध्याटवी यमपुरीके समान सर्वदा मृत्यु उपस्थित कर भयङ्कर महिषका आश्रित हो रही है, संग्राममें प्रवृत्त सेना जिस प्रकार धनुष पर बाण आरोपण करती है

१ शवलैः । २ धूलीलतावनद्धकुसुम । ३ स्रस्तरैः । ४ नालिकेर, करिकेसर । ५ 'करीर-वकुल' इति पाठः क्वचित्पुस्तके नास्ति । ६ वासभुवनैरिव । ७ विराजितमण्डपैः । ८ स्रवण, प्रस्रवण, सलिलप्रस्रवण । ९ मदसलिल । १० निरन्तरमेला । ११ ···सेनेव । १२ समारोपित ।

विमुक्त-सिंहनादा च, कात्यायनीव प्रचलितखड्गभीषणा रक्तचन्दनालङ्कृता च, कर्णीसुतकथेव सन्निहित-विपुलाचला शशोपगता च, कल्पान्तप्रदोषसन्ध्येव प्रनृत्यन्नीलकण्ठा पल्लवारुणा च, अमृतमथनवेलेव श्रीद्रुमोपशोभिता वारुणी-परिगता च, प्रावृडिव घनश्यामला अनेकशतह्रदालङ्कृता च, चन्द्रमूर्त्तिरिव सततमृक्षसार्थानुगता हरिणाध्यासिता च,

संस्थापिताः शिलीमुखा लोहखण्डा शरा इत्यर्थः यया सा तथोक्ता, तथा विमुक्तः परित्यक्तः सुभटैर्विहितं इत्यर्थः सिंहनादः क्ष्वेडा इव नादो यया सा, पक्षे—बाणासु नीलीझिण्टीषु असनेषु पीतशालेषु च तरुषु आरोपिताः पुष्पसौगन्ध्यात् स्थापिताः शिलीमुखा भ्रमरा यया सा तथोक्ता।

कात्यायनीति। कात्यायनी सिंहवाहिनी दुर्गेव, प्रचलितेन हननाय चञ्चलीभूतेन खड्गेन असिना भीषणा भयानका, तथा रक्तचन्दनानुलेपनेन अलङ्कृता भूषिता इयमपि प्रचलितैः इतस्ततः सेनाप्रकर्षेण सञ्चरद्भिः खड्गैः गण्डकैः भीषणा तथा रक्तचन्दनैः तत्संज्ञकतरुभिः अलङ्कृतेत्युभयोः साम्यम्।

कर्णीति। कर्णीसुतः चौर्यशास्त्रप्रवर्तकः क्षत्रियविशेषः तस्य कथा वृत्तान्तः तद्वदिव, सन्निहितौ निकटवर्त्तिनौ विपुलाचलौ तत्संज्ञकौ सखायौ यस्यां सा तादृशी तथा शशेन शशसंज्ञकेन सचिवेन उपगता विशिष्टा, तथा च बृहत्कथायाम्—

"कर्णीसुतः करटकः स्तेयशास्त्रप्रवर्तकः। तस्य ख्यातौ सखायौ द्वौ विपुलाचलसंज्ञितौ॥
शशो मन्त्रिवरस्तस्य"

पक्षे—सन्निहिताः समीपवर्त्तिनः विपुला विस्तृताः अचलाः पर्वता यस्यां सा तादृशी, तथा शशैः मृदुलोमकैः लोध्रवृक्षैर्वा उपगता सहितेत्युभयोः साम्यम्। 'शशो लोध्रे नृभेदे च पशौ' इत्यनेकार्थः।

कल्पान्तेति। कल्पान्ते युगान्ते प्रदोषो रजनीमुखं तस्य या सन्ध्या सायं समयस्तद्वदिव, प्रनृत्यन् संसारसंहारप्रमोदेन नटन् नीलकण्ठो महादेवो यस्यां सा तथोक्ता तथा पल्लवः किसलयस्तद्वत् अरुणा रक्ता, पक्षे—प्रनृत्यन्तः मदेन नटन्तो नीलकण्ठा मयूरा यस्यां सा तथा पल्लवैः अनेकविधलताकिसलयैः अरुणा उपरि रक्तरूपा।

अमृतेति। अमृताय सुधायै 'पीयूषममृतं सुधा' इत्यमरः, यन्मन्थनं क्षीरसमुद्रस्य विलोडनं तस्य वेला समय इव, श्रिया लक्ष्म्या द्रुमेण कल्पद्रुमेण नामैकदेशग्रहणेन नामग्रहणं बोध्यम्, उपशोभिता उपरञ्जिता, वारुणीं सुरां परिगता सहिता, तस्या अपि तत्समये ततो जातत्वात्, पक्षे—श्रीद्रुमैः बिल्ववृक्षैः उपशोभिता, वारुणीं पश्चिमां दिशं परिगता सामस्त्येन प्राप्ता भारतवर्षस्य पश्चिमप्रान्तपर्यन्तं व्याप्तत्वात्।

प्रावृडिति। प्रावृट्वर्षा समय इव,घनैर्मेघैः श्यामला कृष्णवर्णा तथा अनेकाभिः शतह्रदाभिः तडिद्भिः अलङ्कृता मण्डिता, पक्षे—घनाः वृक्षादिभिः सान्द्रा चासौ अतएव श्यामला अत्यन्तकृष्णा तथा अनेका भिन्नाभिन्नस्वरूपाः शतह्रदा जलवालिकाः ताभिः अलङ्कृता।

चन्द्रेति। चन्द्रस्य मूर्त्तिः शरीरमिव, सततं निरन्तरं ऋक्षाणि ताराः तेषां सार्थः समूहः तेन अनुगता परिवेष्टिता, हरिणेन मृगचिह्नेन अध्यासिता आश्रिता। पक्षे—सततं ऋक्षा भल्लूकाः तेषां सार्थः समुदायः तेन अनुगता व्याप्ता, हरिणैर्मृगैः अध्यासिता।

एवं सिंहनाद करती है, विन्ध्याटवी भी उसी प्रकार नीलझिण्टी और पीतशाल वृक्ष पर भ्रमरगणको बसाती है एवं सिंहका गर्जन से युक्त हो रही है; दुर्गादेवी जैसे खड्गसञ्चालनमें भीषणमूर्त्ति और रक्तचन्दनके अनुलेपनसे भूषित रहती है, विन्ध्याटवी भी वैसे ही खड्ग (गैंडा) के सञ्चारसे भीषणमूर्त्ति रक्तचन्दनवृक्ष सुशोभित है; राजा कर्णीसुत (चौर्यशास्त्रके प्रवर्तक) के कथा में जिस प्रकार 'विपुल' और 'अचल' नामका उनके दो मित्र और 'शशनाम' के मन्त्री थे, विन्ध्याटवीमें भी उसी प्रकार विशाल पर्वतगण और शशक हैं, कल्पान्तकालके सायंसन्ध्या जिस प्रकार रुद्रमूर्त्ति महादेवके नृत्यसे युक्त एवं पल्लवके समान रक्तवर्ण समन्वित रहती है; विन्ध्याटवी भी उसी प्रकार मयूरके नृत्यसे युक्त एवं पल्लवद्वारा रक्तवर्ण समन्वित है; अमृतके लिए क्षीरसागर मन्थनके समय जैसे लक्ष्मी और कल्पवृक्षसे शोभित एवं मद्यसे युक्त हुआ था, विन्ध्याटवी भी वैसे श्रीफल (बेल) के वृक्षसे शोभित एवं पश्चिम दिशाको प्राप्त, मेघपंक्तिसे श्यामवर्ण और अनेक विद्युल्लतासे सुशोभित है; वर्षासमयके समान विन्ध्याटवी भी सघनवृक्षसमूहसे श्यामवर्ण एवं असंख्य ह्रद (तालाब) से परिशोभित है; चन्द्रमा जिस प्रकार नक्षत्र समूहसे परिवेष्टित

१ विविक्त। २ प्रनृत्तनीलकण्ठा। ३ वारुण।

राज्यस्थितिरिव चमरमृग-वालव्यजनोपशोभिता समदगजघटा-परिपालिता च, गिरितनयेव स्थाणुसङ्गता मृगपतिसेविता च, जानकीव प्रसूतकुशलवा निशाचरपरिगृहीता च, कामिनीव चन्दन-मृगमदपरिमलवाहिनी रुचिरागुरु-तिलकभूषिता च, सोत्कण्ठेव विविधपल्लवानिलवीजिता समदना च, बालग्रीवेव व्याघ्रनखपङ्क्तिमण्डिता गण्डकाभरणा च, पानभू-

राज्येति। राज्यस्थितिः राज्यमर्यादा इव, चमरमृगाणां वालाः चामराणि व्यजनानि तालवृन्तानि च तैरुपशोभिता, तथा समदाभिः मदेन सह वर्त्तमानाभिः गजघटाभिः करिमण्डलैः परिपालिता परिरक्षिता। पक्षे—चमरमृगाणां वाला लोमान्येव व्यजनानि तैः तथोक्तैः 'व्यजनं तालवृन्तकम्' इत्यमरः, अन्यत्पूर्ववदेव।

गिरीति। गिरितनया हिमाचलसुता पार्वती तद्वदिव, स्थाणुना रुद्रेण 'स्थाणू रुद्र उमापतिः' इत्यमरः, सङ्गता मिलिता, तथा मृगपतिना वाहनीभूतसिंहेन सेविता वाहनेन शुश्रूषिता, पक्षे— स्थाणुभिः शाखापत्रादिशून्यतरुभिः सङ्गता, तथा मृगपतिभिः सिंहैः सेविता आश्रिता।

जानकीति। जानकी मैथिलात्मजा सीता तद्वदिव, प्रसूतौ गर्भाद्विमुक्तौ कुशलवौ तन्नामकसुतौ यया सा तथोक्ता, निशाचरेण लङ्काधिपतिना रावणेन परिगृहीता पञ्चवटीतोऽपहृता, पक्षे—प्रसूता जनिताः कुशानां बर्हीणां लवा अङ्कुरा यस्यां सा तथोक्ता, निशाचरैः उलूकादिपक्षिभिः परिगृहीता आश्रिता।

कामिनीति। कामिनी शृङ्गारनायिका तद्वदिव, चन्दनानुलेपन-मृगमदानुलेपनाभ्यां परिमलं सौगन्ध्यं वहति धारयतीत्येवंशीला, तथा रुचिरागुरुणा सुन्दरकाकतुण्डसौगन्ध्येन तिलकेन भालपट्टादौ सिन्दूरादिपुण्ड्रेण भूषिता अलङ्कृता, पक्षे— चन्दनानां वृक्षाणां मृगमदानां कस्तूरीणाञ्च सम्बन्धात् परिमलं सौगन्ध्यं वहति खनित्वादाधारत्वाच्च दधातीत्येवं शीला, तथा रुचिराभ्यां मनोहराभ्याम् अगुरुतिलकाभ्याम् आमोदितरुविशेषपुष्पतरुविशेषाभ्यां भूषिता शोभिता।

सोत्कण्ठेति। सोत्कण्ठा कान्तप्राप्तिसमुत्सुका नायिका तद्वदिव, विविधानाम् अनेकप्रकाराणां पल्लवानां किसलयानाम् अनिलैः पवनैः वीजिता सहचरीभिः मदनव्यथापनोदाय स्पर्शिता, पक्षे—स्वभावतः स्पृष्टा च, मदनेन कामेन मदनैः तदाख्यतरुविशेषैश्च सह वर्तमाना संयुक्ता।

बालेति। बालाः स्तनन्धयाः तेषां ग्रीवा गलदेशाः तद्वदिव, व्याघ्राः शार्दूलाः तेषां नखाः पुनर्भवः तेषां पंक्तिभिः श्रेणिभिः मण्डिता भूषिता 'वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः' इत्यमरः, बालानां गलदेशेषु दैवोत्पातरक्षार्थं व्याघ्रनखपङ्क्त्यो बध्यन्त इति सम्प्रदायः; तथा च—श्रीमद्भागवते—'शार्दूलदिव्यनखभूषणभूषिताय नन्दात्मजाय' इति। गण्डकः तत्तद्देशविशेषविख्यातो गण्डस्थलपर्यन्तवर्त्तिभूषणविशेष आभरणम् अलङ्करणं यस्यां सा, पक्षे—व्याघ्रनखपङ्क्तिभिः पर्यटनसमयोत्पन्ननखचिह्नावलीभिः मण्डिता, गण्डका वार्ध्रीणसाः त एव आभरणानि भूषणानि यस्याः सा तथोक्ता।

पानेति। पानभूमिः मद्यपानार्थस्थानं तद्वदिव, प्रकटितं पानाय योजितं मधु मद्यं तस्य कोशकानि

राज्यमर्यादा जिस प्रकार चामर व्यजनसे परिशोभित और मतवाले हस्तिगणसे परिवेष्टित रहती है, विन्ध्याटवी भी उसी प्रकार चमर नामक मृगगणके लोमव्यजनसे परिशोभित है, और वन्य मतवाले हस्तिगणसे परिवेष्टित है, पार्वती जिस प्रकार महादेवसे युक्त ( सम्मिलित ) और सिंहसेवित हैं, विन्ध्याटवी भी उसी प्रकार शाखापत्रसे रहित वृक्षसे सम्मिलित और सिंहसेवित है; जानकीजी जिस प्रकार कुश और लवको उत्पन्न करने वाली एवं निशाचर ( राक्षस रावण ) से परिगृहीत हुईं, विन्ध्याटवी भी उसी प्रकार कुशाओंको पैदा करने वाली और निशाचर ( उल्लू ) आदि प्राणिगणसे परिगृहीत है; कामिनी जिस प्रकार चन्दन, कस्तूरी और अगुरु अनुलेपन करनेसे सुगन्धिशालिनी एवं मनोहर तिलक धारणसे विभूषित रहती है, विन्ध्याटवी भी उसी प्रकार चन्दन वृक्ष और कस्तूरीसे सुगन्धिशालिनी एवं मनोहर अगुरुवृक्ष और तिलक वृक्षसे परिशोभित है; नायकके निमित्त उत्कण्ठिता कामातुर नायिकाका शरीर जिस प्रकार सखियोंद्वारा अनेकविध पल्लवके वायुसे सञ्चालित होता है, मदन ( दमनक ) नामक वृक्षसे युक्त विन्ध्याटवी से भी उसी प्रकार स्वभावतः अनेकविध पल्लववायुसे सञ्चालित हो रहा है, बालकका कण्ठस्थल जिस प्रकार व्याघ्रके नखमालाओंसे और गण्डक ( देशविशेषका भूषणविशेष ) से अलंकृत रहता है, विन्ध्याटवी भी उसी प्रकार व्याघ्रके नखपंक्तियोंसे और गैंडा पशुविशेषसे परिशोभित है, मद्यपानके स्थानमें जिस प्रकार मद्य और मृगचिह्नका आश्रय, विन्ध्याटवी भी उसी प्रकार भल्लूक ( भालू ) समूहसे परिपूर्ण और मृगगणका आश्रय है,

१ परिगृहीता। २ कृष्णागुरु''। ३ सोत्कण्ठवनितेव। ४ पदपंक्तिमण्डिता। ५ आपान।

मिरिव प्रकटित-मधुकोश[1]-शता प्रकीर्णविविधकुसुमा च, कचित् प्रलयवेलेव महावराह-दंष्ट्रा-समुत्खात-धरणीमण्डला, कचिद्दशमुखनगरीव चटुलवानरवृन्द-भज्यमान[2]-तुङ्ग-शालाकुला, कचिदचिर-निर्वृ[3]त्त-विवाहभूमिरिव हरित-कुश-समित्-कुसुम-शमी-पलाश-शोभिता, कचिदुन्मत्त-मृगपति-नाद-भीतेव कण्टकिता, कचिन्मत्तेव कोकिलकुल-कल[4]-प्रलापिनी, कचिदुन्मत्तेव वायुवेग-कृत-तालशब्दा, कचिद्विधवेव उन्मुक्ततालपत्रा,

पानपात्राणि यस्यां सा तथोक्ता, तथा प्रकीर्णानि पर्यस्तानि विविधानि अनेकप्रकाराणि कुसुमानि पुष्पाणि यस्यां सा, पक्षे—प्रकटितं प्रकाशितं मधूनां पुष्परसानां माक्षिकाणामित्यर्थः कोशानां तदाश्रयणाञ्च शतं यस्यां सा, अन्यत्तुल्यमेव ।

कचिदिति । कचित् कस्मिंश्चित्प्रदेशे एवमग्रेऽपि । प्रलयः सर्वत्र जलमयः तस्य वेला अवसरः तद्वदिव, महावराहेन परमेश्वरतृतीयावतारेण दंष्ट्रया दन्तेन समुत्खातं जलादूर्ध्वमानीतं धरणिमण्डलं समस्तपृथ्वीमण्डलं यस्यां सा तथोक्ता, महावराहैः पृथुलशूकरैः दंष्ट्राभिः दशनैः समुत्खातं विदारितं धरणिमण्डलं भूप्रदेशो यस्याः सा 'वराहः शूकरो घृष्टिः' इत्यमरः ।

प्रलयसमये परमेश्वरो हि वराहमूर्त्तिमाश्रित्य सलिलमग्नां भुवमूर्ध्वमानीतवानिति पौराणिकी वार्ता ।

कचिदिति । दशमुखस्य रावणस्य नगरी लङ्कापुरी तद्वदिव, चटुलाः चञ्चला ये वानराः शाखामृगाः तेषां वृन्देन समूहेन भज्यमानाः त्रोट्यमानाः तुङ्गा उन्नता याः शाला भवनैकदेशाः ताभिः आकुला व्याप्ता, पक्षे—चटुलवानरवृन्देन भज्यमानास्तुङ्गा उच्चशाला भवनानि ताभिः आकुला व्याकुला । रामरावणयोः संग्रामकाले कपिवृन्देन लङ्कायां भवनसमूहो नाशित आसीदिति रामायणीया कथा ।

कचिदिति । अचिरनिर्वृत्तः तत्कालनिष्पन्नो यो विवाहः परिणयः तस्य भूमिः स्थानं तद्वदिव, हरिता नीलवर्णा ये कुशा दर्भाः, समिधो यज्ञीयकाष्ठानि, कुसुमानि पुष्पाणि, शमी शिवा, पलाशा ब्रह्मवृक्षाः तैः शोभिता भूषिता, पक्षेऽपि तुल्यमेव ।

कचिदिति । उन्मत्तो मदमत्तो यो मृगपतिः सिंहः तस्य नादेन गर्जितेन भीतेव त्रस्ता सुन्दरीव, कण्टको रोमाञ्चः सञ्जातोऽस्या इति कण्टकिता, पक्षे—कण्टकयुक्ता च ।

कचिदिति । मत्ता मधुपानेनोन्मत्ता नायिकेव, कोकिलकुलवत् पिकसमूहवत् कलम् अस्फुटमधुरं प्रलपितुम् उन्मत्तवशात् अनर्थकं वक्तुं शीलं यस्याः सा, पक्षे—कोकिलकुलस्य पिकमण्डलस्य कलप्रलापोऽस्फुटमञ्जुलध्वनिरस्या अस्तीति सा तादृशी ।

कचिदिति । उन्मत्ता उन्मादवातव्याधियुक्ता स्त्रीव, वायुवेगेन व्याधिरूपपवनबाहुल्येन कृता विहिताः तालशब्दाः करतलध्वनयो यया सा, पक्षे—वायुवेगेन पवनाधिक्येन कृताः तालानां तालतरूणां शब्दा यस्यां सा तादृशी ।

कचिदिति । विगतो विनष्टो धवः पतिर्यस्याः सा सुन्दरीव, उन्मुक्तं स्वामिमरणात् परित्यक्तं तालपत्रं

और उसका पान पात्र रक्खा रहता है एवं अनेक प्रकारके पुष्प फैले रहते हैं, विन्ध्याटवीमें भी उसी प्रकार वे सब विदित हैं, शूकरावतार भगवान् जिस प्रकार अपने दांतोंसे पृथिवीमण्डलको उठा रक्खा था, विन्ध्याटवीके किसी किसी स्थानमें भी उसी प्रकार बड़े शूकरगणके दांतोंसे पृथिवी विदारित है जिससे मिट्टियोंके ढेर उठा हुआ है । संग्रामके समय लङ्का नगरीमें जिस प्रकार चञ्चल वानरगण उच्च उच्च भवनोंको तोड़ा करते थे, विन्ध्यावटीके किसी स्थलमें भी उसी प्रकार चञ्चल वानरगण उच्च उच्च शाल वृक्षोंको तोड़ रहे हैं, तत्काल सम्पन्न विवाहस्थानके समान विन्ध्यावटी के किसी किसी स्थानमें हरिद्वर्ण कुश, समिधा ( हवनकी लकड़ी ) पुष्प और शमीपत्र शोभित हो रहे हैं; मतवाले सिंहके गर्जनश्रवणसे भयवश रोमाञ्चिता कामिनीके समान किसी किसी स्थलमें विन्ध्यावटी कण्टकाकीर्ण हुई है ।

मद्यपान करनेसे मतवाली कामिनी जिसप्रकार कोकिलके समान अस्पष्ट और मधुर प्रलाप करती रहती है, विन्ध्याटवीके किसी २ प्रदेशमें भी उसी प्रकार कोकिलगणके अव्यक्त मधुर शब्द हो रहे हैं, मतवाली स्त्री जिस प्रकार वायुके वेगसे करतलध्वनि करती है ( ताली देती है ) विन्ध्याटवीके किसी किसी स्थानमें भी उसी प्रकार तालवृक्ष वायुके वेगसे शब्द कर रहा है, विधवा ( पतिहीना ) स्त्री जिस प्रकार कर्णालङ्कार ( तड़की, ढेला ) का परित्याग करती है, विन्ध्याटवीके किसी किसी स्थान में भी उसी प्रकार वायुके वेगसे तालवृक्ष पत्र परित्याग कर

१ कोशकशता । २ ···भग्न···उत्तुङ्ग । ३ उद्वृत्त··· । ४ क्वापि 'कल' इति पाठो नास्ति ।

क्वचित् समरभूमिरिव शर-शत-निचिता, क्वचिदमरपति-तनुरिव नेत्रसहस्र-सङ्कुला, क्वचिन्नारायणमूर्त्तिरिव तमालनीला, क्वचित् पार्थरथपताकेव वानराक्रान्ता, क्वचिदवनिपति-द्वार-भूमिरिव वेत्रलताशतदुष्प्रवेशा, क्वचिद्विराटनगरीव कीचकशतावृता, क्वचिदम्बरश्रीरिव व्याधानुगम्यमान-तरल-तारक-मृगा, क्वचिद्गृहीतव्रतेव दर्भ-चीर-जटा-वल्कल-धारिणी,

---

ताटङ्कः कर्णाभरणविशेषो यया सा तादृशी, पक्षे—उन्मुक्तानि युगान्तपवनाधिक्येन पातितानि तालानां तालतरूणां पत्राणि पर्णानि यस्यां सा तादृशी 'पत्रं पलाशं छदनं दलः पर्णं छदः पुमान्' इत्यमरः।

क्वचिदिति। समरो युद्धस्तस्य भूमिः स्थानमिव, शराणां मुञ्जदण्डानां बाणानाञ्च शतेन समुदायेन निचिता व्याप्ता।

क्वचिदिति। अमराणां देवानाम् 'अमरा निर्जरा देवा' इत्यमरः, पतिः प्रभुः इन्द्रः तस्य तनुः शरीरमिव, नेत्राणां लोचनानां तरुमूलानाञ्च यद्वा—जटानां सहस्रं तेन सङ्कुला व्याप्ता। 'जटांशुकयोर्नेत्रम्' इत्यमरः, 'नेत्रं मन्थगुणे वस्त्रभेदे मूले द्रुमस्य च' इति मेदिनी।

क्वचिदिति। नारायणस्य श्रीकृष्णस्य मूर्त्तिः शरीरमिव, तमालं तापिच्छं तद्वन्नीला श्यामवर्णा, पक्षे—तमालैः तन्नामकवृक्षैः नीला।

क्वचिदिति। पार्थोऽर्जुनः तस्य रथस्य पताका वैजयन्तीव 'पताका वैजयन्ती स्यात्' इत्यमरः, वानरेण हनूमता वानरैः शाखामृगैश्च आक्रान्ता अधिष्ठिता।

क्वचिदिति। अवनिः पृथ्वी तस्याः पतिः स्वामी राजेत्यर्थः तस्य द्वारभूमिरिव, वेत्राणि वेतसा लता वल्ल्यश्च तासां शतं समूहं तेन द्वारपालहस्तगतवेत्रयष्टिसमूहेनेत्यर्थः दुष्प्रवेशा दुःखेन प्रवेष्टुं योग्या, पक्षेऽपि तुल्यम्।

क्वचिदिति। विराटस्य मत्स्याधिपतेः नगरी पुरीव, कीचकशतेन स्वप्रियबान्धवकीचकसमूहेन राजश्यालकेन, पक्षे—कीचकाः सरन्ध्रवेणवः छिद्रेषु वायुप्रवेशेन शब्दायमानवंशगणा इत्यर्थः, तैः आवृता व्याप्ता 'वेणवः कीचकाः ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यमरः।

क्वचिदिति। अम्बरम् आकाशं तस्य श्रीर्लक्ष्मीरिव, व्याधेन व्याधरूपधारिणा शिवेन अनुगम्यमानम् अनुव्रज्यमानम् अत एव तरलं त्रासेन चलं तारकमृगं मृगशिरोनक्षत्रं यस्यां सा तथोक्ता, पक्षे—व्याधैः भिल्लैः अनुगम्यमानाः, अत एव तरला भयेन लोलाश्चञ्चलाः तारका लोचनकनीनिका येषां ते तथोक्ता मृगा हरिणा यस्यां सा तादृशी। पुरा प्रजापतिः परमसुन्दरीं स्वतनयां सन्ध्यां निरीक्ष्य कामान्धस्तामन्वधावत्, स्वधर्मं रिरक्षयिषुः सा पुत्री तु हरिणीस्वरूपमाश्रित्य पलायन्ती महादेवशरणं गतवती, प्रजापतिरपि हरिणस्वरूपमाश्रित्य तत्राप्यनुजगाम, महादेवस्तु तन्निरीक्ष्य प्रजापतेः शिरः कर्त्तनाय स्वधनुषा बाणं मुक्तवान्, तदा तु प्रजापतिरत्यन्तं लज्जितस्त्रस्तश्च सन् मृगशिरो नक्षत्रे प्रविष्टवान् शिवस्य बाणोऽपि आर्द्रानक्षत्रस्वरूपेण तदन्वतिष्ठदिति शिवपुराणीया कथाऽनुसन्धेया।

क्वचिदिति। गृहीतं स्वीकृतं व्रतं नियमो यया सा सैवंविधा सुन्दरीव, दर्भाः कुशाः, चीराणि जीर्णव-

---

रहा है; सङ्ग्रामभूमि जिस प्रकार बाणोंसे परिव्याप्त रहता है, विन्ध्याटवीके किसी किसी स्थानमें भी उसी प्रकार शरवण (शरपत, 'शरकण्डा' तृण) व्याप्त है; देवेन्द्रका शरीर जिस प्रकार सहस्रनेत्रोंसे युक्त है, विन्ध्याटवी के किसी किसी स्थानमें भी उसी प्रकार हजारों वृक्ष-मूल विद्यमान हैं, भगवान् विष्णुका शरीर जिस प्रकार तमाल (तमाकू) वृक्षके समान नीलवर्ण है, विन्ध्याटवीके कोई कोई स्थान भी उसी प्रकार तमालवृक्षसे नीलवर्ण है; अर्जुनकी पताकामें जिस प्रकार हनूमान्‌जी विराजमान थे, विन्ध्याटवीके किसी भागविशेषमें उसी प्रकार वानरगण विराजमान हैं; विविध द्वारपाल-हस्तगत वेत्रयष्टिसे राजाके द्वारदेशके समान, विन्ध्याटवीके किसी भागविशेषमें अनेक वेतस (बेंत वृक्ष) हैं जिससे प्रवेश करनेमें बहुत कठिन होता है, विराट राजाके राजधानीमें जिस प्रकार सैकड़ों कीचक थे उसी प्रकार विन्ध्याटवीके अंशविशेषमें सच्छिद्रवंशसमूह हैं, पूर्व समयमें जिस प्रकार व्याधरूपी महादेवका अनुसरणकर ब्रह्मा भयवश चञ्चल होकर आकाशमें मृगशिरा नक्षत्र रूपसे अवस्थित हुए, उसी प्रकार विन्ध्याटवीके अंशविशेषमें हरिणगण व्याधाके अनुसरण करनेपर भयसे चञ्चल नेत्र हो स्थित हो रहे हैं, व्रत करनेवाली कोई स्त्री जिस प्रकार कुश, जीर्णवस्त्र, जटा और वल्कल (वृक्षका छिल्का) धारण करती है विन्ध्याटवी भी किसी २

---

१ कप्याक्रान्ता, कप्याक्रान्ता। २ अमरपति। ३ कीचकावृता, कीचकाकुला।

अपरिमित-बहुलपत्रसञ्चयाऽपि सप्तपर्णभूषिता, क्रूरसत्त्वाऽपि मुनिजनसेविता, पुष्पवत्यऽपि पवित्रा विन्ध्याटवी नाम ।

तस्याञ्च दण्डकारण्यान्तःपाति सकलभुवनविख्यातम् उत्पत्तिक्षेत्रमिव भगवतो धर्मस्य, सुरपति-प्रार्थना-पीत-सकल-सागर-सलिलस्य मेरु-मत्सरादम्बरतल-प्रसारित-शिरःसहस्रेण दिवसकर-रथगमन-पथमपनेतुमभ्युद्यतेन अवगणित-सकलसुर-वचसा विन्ध्यगिरिणाऽप्य-

---

सनखण्डानि जटाः संहतकेशाः 'शिफाजटे संहतौ कचौ' इत्यनेकार्थः, वल्कलानि च परिधेयानि परिधारयितुं शीलं यस्याः सा तथोक्ता, पक्षे—दर्भाः कुशाः, चीराः तृणविशेषाः, जटाः मूलानि वल्कलानि च धारयितुं शीलं यस्याः सा तादृशी 'मूले लग्नकचे जटा' इत्यमरः ।

अपरीति । अपरिमितानि सङ्ख्याक्रान्तानि बहुलानि सघनानि पत्राणि दलानि तेषां सञ्चयः समूहो यस्यां सा तथोक्ताऽपि सप्तभिः पर्णैः भूषितेति विरोधः, सप्तपर्णसंज्ञकतरुभिर्विराजितेति तत्परिहारः । यत्र 'विरोध इव भासेत विरोधोऽसौ' इति लक्षणेन विरोधाभासोऽलङ्कारः । एवमग्रेऽपि । क्रूरसत्त्वेति । क्रूरं दुष्टं सत्त्वं हृदयं यस्याः सा तथोक्तापि मुनिजनसेवितेति विरोधः 'सत्त्वं द्रव्ये गुणे चित्ते व्यवसायस्वभावयोः' इत्यनेकार्थः, क्रूराः हिंस्राः सत्त्वा व्याघ्रादिप्राणिनो यस्यां सा तादृशीति तत्परिहारः । तथा पुष्पवती रजोधर्मवत्यपि पवित्रेति विरोधः, पुष्पाणि प्रसूनानि अस्याः सन्तीति तत्परिहारः ।

तस्याञ्चेति । तस्यां विन्ध्याटव्याम् अगस्त्यस्य कुम्भयोनेः आश्रमपदं तपोभूमिः आसीदिति वक्ष्यमाणेन सम्बन्धः । इह प्रथमान्तानि पदानि आश्रमस्य विशेषणानि । दण्डकारण्यस्य दण्डकसंज्ञकवनस्य अन्तः पाति तन्मध्यवर्ति । अत्रेदमितिवृत्तम्—सूर्यवंशीयः कश्चन दण्डको नाम भूपतिः शुक्राचार्यगुरोः अरजाख्यां पुत्रीं बलात्कारेण धर्षणं कृतवान्, तच्छ्रुत्वातीव कुपितः शुक्राचार्यस्तं नृपमभिशशाप—त्वं विनश्यसि, अद्यारभ्य सप्तदिनाभ्यन्तरे चेदं राज्यं महावनतया परिणतं यास्यती'ति । तत्र विन्ध्याचलशिखरप्रदेशस्थं राज्यं दण्डकारण्यं सञ्जातमिति । रामायणे प्रसिद्धमेतत् ।

सकलेति । सकलानि समस्तानि यानि भुवनानि भूर्भुव आदीनि तेषु विख्यातं प्रसिद्धम् । भगवतो माहात्म्यवतो धर्मस्य सुकृतस्य उत्पत्तिक्षेत्रमिव जन्मभूमिरिव, तत्र सर्वप्रकारधर्मोत्पत्तेरित्याशयः । अत्र जात्युत्प्रेक्षा, सा च भावाभिमानिनी वाच्येत्यवगन्तव्या ।

सुरेति । सुरपतिः इन्द्रः तस्य प्रार्थनया याचनया पीतानि चुलुकीकृतानि सकलसागराणां समस्तसमुद्राणां जलानि सलिलानि येन तस्य । इत आरभ्य षष्ठ्यन्तानि पदानि ऋषेर्विशेषणानि । पुरा लोकान् पीडयितुं कालेयाख्याः केचनासुरा दिनपर्यन्तं समुद्रजलेऽन्तर्हिताः सन्तो निशि बहिरागत्य लोकद्वयमत्यन्तमुपद्रवञ्चक्रुः । तद्विनाशाय नितरां चेखिद्यमानो देवाधिपतिरगस्त्यशरणं ययौ । बहुधा प्रार्थितो भगवानगस्त्यो निखिलसमुद्रसलिलानि चुलुके कृत्वा पपाविति महाभारतीया कथात्रानुसन्धेया ।

मेर्विति । मेरोः सुवर्णाद्रेः मत्सरात् उन्नतिविषयकशुभद्वेषात् 'मत्सरोऽन्यशुभद्वेषः' इत्यमरः, अम्बरतले आकाशतले प्रसारितानि विस्तारितानि विकटानि बृहन्ति यानि शिरांसि मस्तकानि तेषां सहस्रं समूहं येन स तेन, दिवसकरस्य सूर्यस्य रथगमनपथं स्यन्दनगमनमार्गम् 'ऋक्पूरब्धूःपथामानक्षे' इत्यच् प्रत्ययः, अपनेतुं निरसितुम् अभ्युद्यतेन प्रवृत्तेन, तथा अवगणितानि अनादृतानि सकलानां समस्तानां देवानां सुराणां वचांसि दिवसाधिपतेः गतिमार्गावरोधनिषेधकवाक्यानि येन तेन विन्ध्यगिरिणाऽपि जलबालकाद्रिणापि अनुल्लङ्घिता अनतिक्रान्ता सम्मानिता आज्ञा आदेशो यस्य तस्य तादृशस्य ।

---

स्थानविशेषमें उसी प्रकार कुश, कन्यान्यतृण, वृक्षकी जड़ और वल्कल धारण की हुई है । विन्ध्यवन, असंख्य नानाविध पत्रसमूहयुक्त होने पर भी सप्तपर्ण ( विशाल त्वचा वाले वृक्ष ) से शोभित, घातक जन्तुसमाकीर्ण होने पर भी मुनिगणसेवित, और पुष्पयुक्त ( स्त्री-रज और पुष्प-फूल युत ) होने पर भी पवित्र है ।

उस विन्ध्याटवीके अन्तर्गत दण्डक वनके बीचमें, समस्त संसारमें प्रसिद्ध और भगवान् धर्मके उत्पत्तिस्थानके समान महर्षि अगस्त्यका आश्रम था । जो अगस्त्य देवराज इन्द्रके प्रार्थनानुसार समस्त समुद्रजल पान कर लिए थे, एवं विन्ध्याचल सुमेरु पर्वतके प्रति शत्रुतासे आकाशमें अगणित शृङ्ग विस्तारपूर्वक देवताओंके वचनको

---

१ बहल । २ सप्तपर्णोपभूषिता । ३ भुवनख्यातम्, भुवनतलख्यातम् । ४ निपीत । ५'''जलस्य । ६ मेरुशिखर । ७ गगनतल''' । ८'''शिखरस्य । ९ गतिपथ । १०'''सुरसमूह''' ।

नुल्लङ्घिताज्ञस्य, जठरानल-जीर्ण-वातापिदानवस्य, सुरासुर-मुकुट[2]-मकरपत्र-कोटि-चुम्बित-चरण-रजसो दक्षिणाशा-वधू[3]-मुख-विशेषकस्य, सुरलोकादेकहुङ्कारनिपातित[4]-नहुष-प्रकट[5]-प्रभावस्य भगवतो महामुनेरगस्त्यस्य, भार्य्यया[6] लोपामुद्रया[7] स्वयमुपरचितालवालकैः करपुट-

पुरा पर्यटन् नारदो योगी विन्ध्याचलमासादयामास, अथ तेन कृतातिथ्यो नारदस्तं गिरिं प्रत्युवाच—गिरिमणे ! प्रतिदिनं सूर्यो हि सुमेरुं परिभ्रमति त्वां नेति नितरां चेखिद्यते मे चेतः, अतस्तदर्थं यतस्वेत्यभिधाय निर्गते तस्मिन् तथैवात्मानं विधातुं सूर्यमनुरुन्धन् तेन प्रत्याख्यातोऽतिकोपेन तद्गमनपथमवरोद्धुं वृद्धिमुपगच्छन् सुरैर्निवारितोऽपि नितरां ववृधे; तदैकतोऽधिकतापात् प्रज्वलन्तोऽपरत्रान्धकारावृतत्वात्किमपि कर्तुमक्षमा लोका देवान् तुष्टुवुः, ते च द्रुतमेव काश्यामगस्त्याश्रममाजग्मुः, विन्ध्यवृद्ध्यवरोधार्थं तमनुरुरुधुश्च, अथ तेषामनुरोधेन सभार्यके भगवत्यगस्त्ये तत्रोपस्थिते विन्ध्याद्रिः शिरोऽवनमय्य तं प्रणाममकरोत्, ऋषिस्तु—'प्रिय वत्स ! यावदहं पुनः प्रत्यावृत्तः स्यां तावत्त्वमेवंविधमेवावनतो भूत्वा तिष्ठ' इत्युक्त्वा दक्षिणाशां प्रस्थितो नेदानीमपि प्रत्यावृत्तः, विन्ध्याद्रिरपि तदाज्ञयाऽधुनापि तथैव तिष्ठतीति स्कन्दपुराणान्तर्गतकाशीखण्डीयकथा ।

जठरेति । जठरानलेन उदराग्निना जीर्णः अन्तः परिपाकं प्रापितो वातापिदानवो वातापिनामकासुरो येन तस्य तादृशस्य ।

पुरा इल्वलवातापिसंज्ञकौ भ्रातरावसुरविशेषावास्ताम् । तत्रेल्वलो विप्रस्वरूपं कृत्वा मेषस्वरूपस्थितं वातापिं मारयित्वा तन्मांसं पक्त्वा समुपस्थितान् विप्रान् भोजयामास, भक्षितवत्सु तेषु 'वातापे ! निर्गच्छ' इतील्वलेनाकारितः सुरवरप्रतापेन वातापिस्तेषामुदराणि विदार्यनिर्गच्छत्, ततश्च तौ तेषां वित्तादिकं चोरितवन्तौ । ततो देवा इत्थं निरीक्ष्य भगवतोऽगस्त्यस्य शरणमाययुः, आगत्य च प्रत्यपकर्त्तुं याचिताः स तेनैवरूपेण तन्मांसं भक्षयित्वा उदरे जीर्णं कृतवानिति महाभारतीया कथा ।

सुरासुरेति । देवा असुरा दानवास्तेषां मुकुटेषु किरीटेषु यानि मकरपत्राणि सुवर्णरचिता मकराकारपत्राः 'पत्रं वाहनपक्षयोः' इत्यमरः, तेषां कोटयः अग्रभागाः तैः चुम्बितानि स्पर्शितानि चरणरजांसि पद्रेणवो यस्य तस्य, देवदानवपूजितपदस्येत्यर्थः । दक्षिणा अवाची आशा दिगेव वधूः स्त्री तस्या मुखे आनने विशेषकस्य तिलकस्वरूपस्य 'दिशस्तुः ककुभः काष्ठाः आशाश्च हरितश्च ताः' 'चित्रपुण्ड्रविशेषकाः' इत्यमरः । अत्रागस्त्ये तिलकत्वारोपस्य दक्षिणदिशि वधूत्वारोपः कारणमिति परम्परितरूपकम् । तदुक्तं साहित्यदर्पणे—

'यत्र कस्यचिदारोपः परारोपस्य कारणम् । तत्परम्परितम् ········ ॥'

सुरेति । सुरलोकात् देवनगरात् ( स्वर्गात् ) एकहुङ्कारेण हुङ्कृतिमात्रेण निपातिते प्रच्यावितै नहुषे प्रकटः स्फुटः प्रभावो माहात्म्यं यस्य तस्य तादृशस्य, भगवतो माहात्म्यवतः महामुनेरुत्कृष्टमननशीलस्य ।

इह त्वष्टुः पुत्रे वृत्रे दधीच्यस्थिना वज्रं निर्माय हते सुराधिपे ब्रह्महत्यापापयुतेन मानससरोवरे निलीने सति सुरैः राजविहीनं स्वर्गं दृष्ट्वा चन्द्रवंशीयो राजा नहुषो निजनिजप्रभावैर्वर्द्धयित्वा स्वर्गराज्ये नियुक्तः । इन्द्रपदे चारूढो भवानिन्द्राणीं कथं न कामयते ? इति केनचिदुपदिष्टे स कदाचित्तां प्रार्थितवान्, ततस्तया कथितम् 'राजन् ! महर्षिभिर्वाहिनीभूतां शिविकामारुह्य यदि भवान् मद्भवनमागन्तुं शक्नोति तदा भवन्तमहं सेवये' इति । राजा तु तदेवाभ्युपेत्य भृग्वादीन् देवर्षीन् वाहकत्वेन संयोज्य शिविकामारुढः इन्द्राणीं कामयमानो तां प्रति व्रजन् शीघ्रं चलितुम् अग्रे गच्छन्तं भृगुं मूर्ध्नि चरणेन 'सर्प सर्प' इति कथयन्नताडयत्, एतन्मध्ये भृगोर्जटासु प्रच्छन्नो भगवानगस्त्यः तच्चरणेन ताडितः 'त्वं सर्पो भूत्वाऽधः पत' इति शशाप, तेन च राजा सर्पो भूत्वा हिमालयकन्दरायामपतदिति महाभारतीया कथात्रानुसन्धेया ।

भार्ययेति । भार्यया पत्न्या लोपामुद्रया तन्नामिकया स्वयम् आत्मना उपरचितानि निर्मितानि आल-

तिरस्कृत कर सूर्यके गमनमार्ग रोकनेको उद्यत हो गया था, किन्तु वह भी जिस अगस्त्यके आज्ञा का उल्लंघन नहीं किया ऐसे, एवं, जो अगस्त्य अपने जठरानलमें वातापि दानवको जीर्ण किये थे, देवगण और राक्षसगण स्वकीय मुकुटद्वारा जिस अगस्त्यके चरणधूलिको स्पर्श किया करते थे, और जो दक्षिण दिग्वधूके ललाट (भाल) का तिलक, एवं एकमात्र हुङ्कारसे जो नहुष राजाको स्वर्गसे नीचे गिराकर अपने माहात्म्यको प्रकाशित किये, उन्हीं भगवान् महर्षि अगस्त्यजी

१ असङ्घित । २ मुकुटतटघट्टितमरकतमयपलभङ्गकोटि··· । ३ दक्षिणामुखविशेषकस्य । ४ निपतित । ५ प्रकटन । ६ तन्नार्य्यया । ७ लोपामुद्रया च ।

सलिलसेक-संवर्द्धितैः सुतनिर्विशेषैरुपशोभितं पादपैः, तत्पुत्रेण च गृहीतव्रतेनाषाढिना[1] पवित्र-भस्म-विरचित-त्रिपुण्ड्रकाभरणेन कुश-चीवर[2]-वाससा[3] मौञ्ज-मेखलाकलितमध्येन गृहीत-हरितपर्णपुटेन[4] प्रत्युटजमटता भिक्षां दृढदस्युनाम्ना पवित्रीकृतम्, अतिप्रभूतेध्माहरणाच्च यस्येध्मवाह इति पिता द्वितीयं नाम चकार, दिशि दिशि शुकहरितैश्च[5] कदलीवनैः श्यामलीकृत[6]-परिसरं सरिता च कलसयोनि-परिपीत-सागरमार्गानुगतयेव बद्धवेणिकया गोदावर्या[7] परिगतमाश्रमपदमासीत्।

वालानि आवाया मूलसलिलाधारा येषां तैः 'स्यादालवालमावालमावापः' इत्यमरः, करपुटेन निजहस्तद्वयेन यः सलिलस्य जलस्य सेकः सिञ्चनं तेन सम्वर्द्धितैः वृद्धिं प्रापितैः, सुतनिर्विशेषैः पुत्रसदृशैः पादपैर्वृक्षैरुपशोभितं भूषितं तदाश्रमपदं मुनिस्थानम्।

तत्पुत्रेणेति। तस्य अगस्त्यस्य पुत्रेण सूनुना, गृहीतम् अङ्गीकृतं व्रतं ब्रह्मचारिव्रतं येन तेन, आषाढः पलाशदण्ड अस्यास्तीति तेन 'आषाढो व्रतिनां दण्डे मासे मलयपर्वते' इति विश्वः, विप्राणां पलाशदण्डस्यैव धारणमाह मनुः—'ब्राह्मणो बैल्वपालाशौ' इति, पवित्रं पूतं यद्भस्म तेन विरचितं विहितं त्रिपुण्ड्रकं रेखात्रययुतस्तिलकविशेष एव आभरणं भूषणं येन तेन, ब्राह्मणानां त्रिपुण्ड्रधारणमाह स्मृतिः—'ब्राह्मणानां त्रिपुण्ड्रकम्' इति। कुशा दर्भा एव चीवरं चीरं वासः वस्त्रं यस्य तेन, मौञ्ज्या मुञ्जविरचितया मेखलया कलितो बद्धः मध्यः कटिभागो येन तेन, तथा च मनुः - 'मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला' इति। गृहीतं याचितान्नरक्षणार्थमात्तं हरितं श्यामलं पर्णपुटं पत्ररचितपुटकं येन तेन, प्रत्युटजम् उटजमुटजं प्रति प्रतिपर्णशालमित्यर्थः 'पर्णशालोटजोऽस्त्रियाम्' इत्यमरः, भिक्षाम् अटता भिक्षणार्थं भ्रमणं विदधता भिक्षामित्यत्र 'अकथितञ्च' इत्यनेन कर्मसंज्ञायां 'कर्मणि द्वितीया' इति द्वितीया। दृढदस्युरिति नाम यस्य तेन तादृशेन पवित्रीकृतं तत्र स्थित्या पूतम्।

अतीति। पिता अगस्त्यः, अतिप्रभूता अतिप्रचुरा य इध्मानः काष्ठाः तेषाम् आहरणात् आनयनात् हेतोः, इध्म वहतीति 'इध्मवाह' इत्यन्वर्थं द्वितीयम् अपरं नाम अभिधेयं चकार विदधौ। इध्मवाह इत्यत्र 'कर्मण्यण' इत्यण्।

दिशीति। दिशि दिशि प्रत्येकदिशि 'नित्यवीप्सयोः' इति द्विर्वचनम्, शुकवत् कीरदेहवत् हरितैर्नीलवर्णैः कदलीवनैः रम्भाविपिनैः 'रम्भावृक्षेऽथ कदली' इति मेदिनी, श्यामलीकृतः कृष्णवर्णीकृतः परिसरः प्रान्तभूमिर्यस्य तत्। शुकहरितैरित्यत्र लुप्तोपमा।

सरितेति। कलसयोनिना अगस्त्येन परिपीतस्य चुलुकीकृतस्य मृतस्येत्याशयः, सागरस्य समुद्रस्य मार्गम् अध्वानम् अनुगतयेव अनुव्रजितयेव बद्धा धृता वेणिका सलिलधारा यया तया, बद्धा संकराविधानायैव संयता वेणिका केशरचनाविशेषो यया तया च, गोदावर्या तन्नामिकया सरिता नद्या परिगतं परिव्याप्तम्। अगस्त्येन चुलुकीकृततया निधनमुपगतस्य समुद्रस्य अनुव्रजनं सर्वदा केशसंयमनञ्च पतिव्रत्या विधेयमेवेत्याशयः। उक्तञ्च 'न प्रोषिते तु संस्कुर्यान्न वेणीं च प्रमोचयेत्' इति। 'अनुगतयेव' इति क्रियोत्प्रेक्षा। समासोक्तिरपि व्यञ्जनया। तदुक्तं दर्पणे—

की स्त्री लोपामुद्रा, अपनेसे आलवाल ( कियारियाँ ) बनाकर अपने हाथसे जलसेचनपूर्वक जिसे पुत्रतुल्य संवर्धित की थी ऐसे अनेक प्रकारके वृक्षसे वह आश्रम सुशोभित था। ब्रह्मचर्यावलम्बी और पलाशदण्डधारी दृढदस्यु नामक अगस्त्यका पुत्र, पवित्र भस्मद्वारा ललाटमें त्रिपुण्ड्र धारणपूर्वक कुशमय कौपीन ( विष्ठी ) धारण कर और मुञ्जरचित मेखलाद्वारा कटिदेश ( कमर ) को बांध कर हरितवर्ण पत्रपुटक ( पत्तेका दोंना ) धारणपूर्वक प्रत्येक पर्णशालासे भिक्षाके लिए भ्रमण करता हुआ उस आश्रमको पवित्र कर रहा था; दृढदस्यु, अतिप्रचुर मात्रामें काष्ठोंका आहरण करता था जिससे महर्षि अगस्त्य उसका दूसरा नाम 'इध्मवाह' रख दिये। ( वहां ) शुक पक्षीके समान हरितवर्ण कदली (केले) का वन समस्त दिशाओंके प्रान्त भागको श्यामवर्ण कर रहा था। भगवान् अगस्त्यके पान कर जानेसे विनाशप्राप्त समुद्रके मार्गका अनुसरण कर मानो गोदावरी नदी वेणी धारणपूर्वक उस आश्रम पदको परिवेष्टित कर प्रवाहित हो रही थी।

१ आषाढिव्रतिना। २ ...चीर। ३ वल्कल, मुञ्ज...। ४ हरिणकर्ण, पत्रपुटेन। ५ शुककुल...। ६ श्यामीकृत। ७ कावेर्या।

यत्र च दशरथवचनमनुपालयन्नुत्सृष्टराज्यो दशवदन-लक्ष्मी-विभ्रमविरामो[1] रामो महामुनिमगस्त्यमनुचरन् सह सीतया लक्ष्मणोपरचित-रुचिर[2]-पर्णशालः पञ्चवट्यां कञ्चित् कालं सुखमुवास । चिरशून्येऽद्यापि यत्र शाखानिलीन-निभृत-पाण्डु-कपोतपङ्क्तयो[3] लग्न-तापसाग्निहोत्र-धूमराजय इव लक्ष्यन्ते तरवः । बलिकर्म्म-कुसुमान्युद्धरन्त्याः सीतायाः करतलादिव सङ्क्रान्तो यत्र रागः स्फुरति लताकिसलयेषु । यत्र च पीतोद्गीर्णजलनिधि-जल-मिव मुनिना निखिलमाश्रमोपान्तवर्त्तिषु विभक्तं महाह्रदेषु । यत्र च[4] दशरथ-सुत-निशित[5]-शर-निकर-निपात-निहत-रजनीचर-बल[6]-बहुल-रुधिर-सिक्त[7]-मूलमद्यापि तद्रागाविद्ध[8]-निर्गत-

'समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः । व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः ॥'

यत्रेति । यत्र यस्मिन्नाश्रमस्थाने दशसु दिशासु अप्रतिहतो रथो यस्य स दशरथः तस्य वचनं वन-गमनादेशम् अनुपालयन् पालनं कुर्वन् तथैवानुतिष्ठन्नित्यर्थः, उत्सृष्टं त्यक्तं राज्यं येन सः, दशवदनो लङ्का-धिपतिर्दशाननस्तस्य या लक्ष्मीः राज्यश्रीः तस्या विभ्रमस्य विलासस्य विरामोऽवसानं यस्मात् स तथोक्तो रामः, महामुनिं मुनिश्रेष्ठम् अगस्त्यम् अनुचरन् सेवमानः, लक्ष्मणेन सुमित्रानन्दनेन उपरचिता निर्मिता रुचिरा मनोज्ञा पर्णशाला उटजो यस्य सः, कञ्चित्कालं पञ्चवट्यां जनस्थाने सीतया जनकनन्दिन्या सह सु-खम् आनन्दपूर्वकं यथा स्यात्तथा उवास निवसति स्म । 'विरामो राम' इत्यत्र यमकालङ्कारः ।तदुक्तं दण्डिना—

'सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः । क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ॥'

चिरेति । चिरशून्ये बहोः कालात् मुनिवृन्दरहिते, यत्र यस्मिन्नाश्रमपदे अद्यापि इदानींकालपर्यन्त-मपि, शाखासु शालासु निलीना अवस्थिता निभृता निःशब्दाः पाण्डवः श्वेता ये कपोताः पारावताः तेषां पङ्क्त्यो राजयः येषु ते, अत एव लग्नाः संलग्नाः तापसानां तपस्विनां यदग्निहोत्रं दैनिकयज्ञविशेषः तस्य धूमानाम् अग्निशिखानां राजयः पङ्क्तयो येषु ते तथोक्ता इव तरवो वृक्षा लक्ष्यन्ते अवलोक्यन्ते। इह पदा-र्थहेतुकं काव्यलिङ्गमलङ्कारः, तथा धूमपङ्क्तीनां संलग्नत्वस्योत्प्रेक्षणात् क्रियोत्प्रेक्षा चेत्युभयोरङ्गाङ्गिभावेन सङ्करालङ्कारः ।

बलीति । बलिकर्मणो देवपूजनकार्यस्य कुसुमानि प्रसूनानि उद्धरन्त्याः सञ्चयं कुर्वन्त्याः सीताया वैदेह्याः करतलात् हस्ततलात् लताकिसलयेषु व्रततिपल्लवेषु सङ्क्रान्तो लग्न इव सन् रागो लौहित्यं स्फुरति दीप्तिमान्भवति । सङ्क्रान्त इवेति क्रियोत्प्रेक्षा ।

यत्र चेति । यत्र च आश्रमपदे, मुनिना अगस्त्येन पूर्वं पीतं चुलुकीकृतं पश्चादुद्गीर्णम् उत्तोलितं नि-खिलं समग्रं जलनिधिजलं समुद्रसलिलम् आश्रमोपान्तवर्त्तिषु आश्रमनिकटस्थायिषु महाह्रदेषु महातडागेषु विभक्तमिव विभज्य स्थापितमिव। अत्रापि विभक्तमिवेति क्रियोत्प्रेक्षा, अत एव हि तडागानामगाधसलि-लयुक्तत्वं ध्वन्यते इत्यलङ्कारेण वस्तुव्यङ्ग्यम् ।

यत्र चेति । दशरथसुतयो रामलक्ष्मणयोः निशिताः तीक्ष्णा ये शरा बाणाः तेषां यो निकरः समूहः तस्य निपातेन वर्षणेन निहतानि घातितानि यानि रजनीचरबलानि असुरसैन्यानि तत्सम्बन्धि यद्बहलानि विपु-लानि रुधिराणि रक्तानि तैः सिक्तानि सिञ्चितानि मूलानि यस्य तम्, नवानि नूतनानि किसलयानि

रावण-राजलक्ष्मीके विलास शोभाको विराम करनेवाले रामचन्द्र, दशरथ वचन पालन करनेके लिए राज्य परित्याग पूर्वक सीताके साथ जिस आश्रममें रहकर महर्षि अगस्त्यकी परिचर्या करते हुए पञ्चवटी वनमें लक्ष्मणजीसे बनायी हुई पर्णशालामें कितने दिनों तक सुखसे वास किये । मुनिजनोंसे रहित आज भी जहाँ ( वृक्षके ) शाखाओंमें छिपी हुई निःशब्द-धूसरवर्ण कपोत पंक्तियाँ लगी हुई तपस्वियोंके अग्निहोत्र ( होम ) में धूम पंक्तियोंकी तरह लक्षित हो रही हैं । जिस आश्रममें देवपूजन करनेके निमित्त पुष्पचयनके समयमें सीताके करतलस्थित रक्तिमा जिस लता-पल्लवसमूहमें संलग्न हुई थी मानो आज भी लता-पल्लवोंमें लगी हुई वह रक्तिमा प्रकाशित हो रही है । इस प्रकार जिस आश्रममें महर्षि अगस्त्यद्वारा पान किये गये समस्त समुद्र जल पुनः उद्गीर्ण पूर्वक, आश्रमके समीपवर्ती महाह्रद समूहमें जो कि विभक्त कर रख दिया गया हो ( ऐसी प्रतीति हो रही है )। जिस आश्रममें राम और लक्ष्मणके तीक्ष्ण ( चोखे ) शरसमूहके आघातसे मारे गये राक्षस सैन्यगणके रक्तोंसे आश्रम वनस्थित जिस वृक्षसमूहका मूलदेश ( जड़ ) सिक्त हुआ था, नव पल्लवयुक्त उन्हीं वृक्ष समूहसे आज भी वह रक्तशोभित

१ रामो । २ अतिचिर । ३ '''पङ्क्तयोऽमललग्न''' । ४ 'च' पाठः क्वापि नास्ति । ५ 'निशित' अयमपि पाठः क्वापि नोपलभ्यते । ६ बलबहल । ७ रक्त । ८ तद्रागानुविद्ध ।

पलाशमिवाभाति नव-किसलय[1]मरण्यम् । अधुनापि यत्र जलधरसमये गम्भीर[2]मभिनव-जलधर-निर्वह[3]-निनादमाकर्ण्य भगवतो रामस्य त्रिभुवन-विवर-व्यापिनश्चापघोषस्य स्मरन्तो न गृह्णन्ति शष्प[4]-कवलमजस्रमश्रुजल-लुलित-दीनदृष्टयो[5] वीक्ष्य शून्या दश दिशो जरा-जर्जरित-विषाणकोटयो जानकीसंवर्द्धिता जीर्णमृगाः । यस्मिन्ननवरत-मृगया-निहत-शेष[6]-वन-हरिण-प्रोत्साहित[7] इव कृतसीताविप्रलम्भः कनकमृगो राघवमतिदूरं जहार । यत्र मैथिली-वियोगदुःख-दुःखितौ दशवदन-विनाश-पिशुनौ[8] चन्द्रसूर्य्याविव कबन्धग्रस्तौ समं राम-

पल्लवानि यत्र तत् तथोक्तम् अरण्यं वनं ( कर्तृ ), अद्यापि इदानींकालपर्यन्तमपि तेषां रुधिराणां रागेण रक्तिम्ना आविद्धानि युक्तानि विद्यमानानि निर्गतानि निःसृतानि पलाशानि पत्राणि यत्र तत् तथोक्तमिव आभाति शोभते । इहापि क्रियोत्प्रेक्षा ।

अधुनापीति । अधुनापि इदानीमपि यत्र आश्रमपदे जलधरसमये वर्षाकाले गम्भीरं मञ्जुलम् अभिनवा नूतना ये जलधरा मेघास्तेषां निवहस्य समूहस्य निनादं गर्जनम् आकर्ण्य श्रुत्वा भगवतः पूज्यस्य रामस्य दाशरथेः त्रिभुवनस्य विष्टपस्य विवराणि छिद्राणि तानि व्याप्नोति पूरयतीति स तस्य, चापघोषस्य धनुःशब्दस्य अत्र मातुः स्मरतीतिवत् कर्मणि षष्ठी, तेन धनुःशब्दमित्यर्थः, स्मरन्तः चिन्तयन्तः दशदिशः दशाशाः शून्याः रामलक्ष्मणसीतारहिताः, यद्वा सजातीयप्राणिरहिताः, वीक्ष्य अवलोक्य, अजस्रं निरन्तरम् अश्रुजलैः तेषां शोकजनितनयनसलिलैः लुलिता विह्वलीभूताः, दीनाः कातराः दृष्टयो लोचनानि येषां ते तथोक्ताः, तथा जरया वृद्धावस्थया जर्जरिताः विशीर्णा विषाणानां शृङ्गाणां कोटयोऽग्रभागा येषां ते तथोक्ताः, जानक्या वैदेह्या सम्वर्द्धिता शष्पसलिलादिप्रदानेन वृद्धिं प्रापिताः जीर्णमृगाः वृद्धहरिणाः शष्पं बालतृणं तस्य कवलं ग्रासं न गृह्णन्ति न स्वीकुर्वन्ति तेषां शोकेनेत्याशयः । अत्र गम्भीरजलदनिनादाकर्णनेन रामस्य चापघोषस्मृतेः स्मरणालङ्कारः, तथा शष्पग्रासग्रहणसम्बन्धेऽपि तदसम्बन्धप्रतिपादनादतिशयोक्त्यलङ्कारः । तदुक्तं दर्पणे—

'सदृशानुभवाद्वस्तुस्मृतिः स्मरणमुच्यते' । 'सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते' ।

एवञ्चोभयोरङ्गाङ्गिभावेन सङ्करालङ्कारः ।

यस्मिन्निति । यस्मिन् विपिने अनवरतं निरन्तरं या मृगया पशुहननव्यापारः तस्यां निहतेभ्यः रामेण व्यापादितेभ्यः शेषा अवशिष्टा ये वनहरिणाः काननमृगाः तैः प्रोत्साहित इव जानकीवञ्चनापूर्वकरामदूरनयने प्रकृष्टोत्साहं प्रापित इव कनकमृगः हाटकमयहरिणरूपधारी मारीचः, कृतो विहितः सीताया जानक्या विप्रलम्भो वञ्चना येन तथोक्तः सन् राघवं रामचन्द्रम् अतिदूरम् अनतिसमीपं जहार हरणमकृत । इह क्रियोत्प्रेक्षा ।

यत्रेति । यत्र पञ्चवट्यां मैथिली जानकी तस्या वियोगदुःखेन विरहजनितक्लेशेन दुःखितौ क्लेशितौ, दशवदनो रावणः तस्य विनाशपिशुनौ ध्वंसबोधकौ रामलक्ष्मणौ कौशल्यानन्दनसुमित्रानन्दनौ, चन्द्रसूर्याविव पुष्पवन्ताविव 'एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ' इत्यमरः, कबन्धः राहु राक्षसाधिपतिः तेन दनुकबन्धेन च ग्रस्तौ कवलीकृतौ गृहीतौ च सन्तौ समम् एककालं त्रिभुवनस्य जगत्त्रयस्थितलोकस्य महत् उत्कृष्टं भयम् आतङ्कं चक्रतुः विदधतुः । इह चन्द्रसूर्याविवेत्युपमा ।

हो पत्र-समूहरूपमें निकल रहा है । जिस आश्रममें सीताजी तृण और जलादि प्रदान कर जिन्हें संवर्धितकी थी, एवं वृद्धावस्था हो जानेके कारण जीर्ण शृङ्गवाले वेही समस्त वृद्ध हरिणगण वर्षा समयमें नवीन मेघके गम्भीर गर्जन सुनकर भगवान् रामचन्द्रके भुवनव्यापी कार्मुकध्वनि स्मरण करते हुए सहसा दशों दिशाओंको शून्य देखकर, निरन्तर अश्रुजलप्लावित नेत्र हो इस समय भी घासोंका ग्रास ग्रहण नहीं कर रहे हैं । जिस आश्रममें रामचन्द्र, सर्वदा मृगयाव्यापार ( शिकार ) में लिप्त रहकर जिन हरिणादिकोंको विनष्ट किये थे उनसे बचे हुए हरिणगण द्वारा उत्साहित होकर जो स्वर्णमृग ( स्वर्णमृग रूपधारी मारीच ) सीताको प्रतारणा कर रामचन्द्रको अत्यन्त दूर ले गया था । जिस आश्रममें, सीताके विरह दुःखसे दुःखित राम और लक्ष्मण, राहुग्रस्त चन्द्र और सूर्य के समान दनुकबन्धद्वारा धृत हो रावणके विनाश सूचनाकर एक समयमें ही त्रिभुवनमें रहनेवाले लोगोंको अत्यन्त भय

१ किसलम् । २ गम्भीररवम् । ३ 'निवह' इति पाठः क्वापि नास्ति । ४ सम्यक् शष्प । ५ लुलितदृष्टयः । ६ निःशेष, अशेष… । ७ प्रोत्सारित । ८ रावणविनाशसूचकौ ।

लक्ष्मणौ त्रिभुवनभयं महत्[1] चक्रतुः। अत्यायतश्च यस्मिन् दशरथसुत-शर[2]-निपातितो योजन-बाहोर्बाहुरगस्त्य-प्रसाद[3]नागतनहुषाजगर-कायशङ्कामकरो[4]दपिजनस्य। जनकतनया च[5] भर्त्रा विरहविनोद[6]नार्थ-मुटजाभ्यन्त[7]रलिखिता यत्र रामनिवास-दर्शनोत्सुका पुनरिव धरणीत[8]लादुल्लसन्ती वनचरै[9]रद्याप्यालोक्यते ।

तस्य चैवंविध[10]स्य सम्प्रत्यपि प्रकटोपलक्ष्यमाण-पूर्ववृत्तान्तस्यागस्त्याश्रमस्य नातिदूरे जलनिधि-पान-कु[11]पित-वरुणोत्साहितेन अगस्त्यमत्सरात्तदाश्रमसमीपवर्त्त्यपर इव वेधसा महाजल[12]निधिरुत्पादितः, प्रलयकाल-विघटिता[13]ष्ट-दिग्भाग-सन्धिबन्धं[14] गगनतलमिव भुवि

अत्यायतश्चेति । यत्र च दशरथसुतो रामः तस्य शरेण इषुणा निपातितः कर्तयित्वा पातितः अत्यायतः अतिविस्तृतः योजनबाहोः दनुकबन्धापरनाम्नो दैत्यस्यैव बाहुर्भुजः, अगस्त्यस्य मुनेः प्रसादनाय शिविकारोहणेन इन्द्राणीं प्रति यानकाले पादप्रहारकृतक्रोधोपशान्तये आगतः प्राप्तो यो नहुषाजगरस्य अजगर-( सर्प ) रूपिनहुषनृपतेः कायशङ्कां देहभ्रान्तिम् ऋषिगणस्य मुनिमण्डलस्य चकार कृतवान्। अत्र दनुकबन्धबाहौ नहुषाजगरभ्रान्त्या भ्रान्तिमानलङ्कारः। तदुक्तं दर्पणे—'साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थितः' इति । अत्रत्येतिवृत्तन्तु रामायणस्यारण्यककाण्डतोऽवगन्तव्यम् ।

जनकेति । यत्र आश्रमपदे जनकतनया वैदेही, भर्त्रा स्वामिना रामेण, विरहविनोदनार्थं जानक्याः वियोगव्यथालघुसम्पादनार्थम् उटजाभ्यन्तरे पर्णशालामध्ये 'पर्णशालोटजः स्त्रियाम्' इत्यमरः, लिखिता चित्रीकृता सा रामस्य निवासोऽवस्थानभूमिः तस्य दर्शनाय अवलोकनाय उत्सुका उत्कण्ठिता सती पुनर्भूयो धरणीतलात् पातालात् उल्लसन्तीव, वनचरैः किरातैः अद्यापि इदानींकालेऽपि आलोक्यते दृश्यते । अत्र उल्लसन्तीवेति क्रियोत्प्रेक्षा । अत्र 'पुनः' शब्दोपादानेन पूर्वं वैदेह्या मिथिलायां यज्ञभूमिकर्षणकाले पातालादुत्थानम् , लङ्कां विजित्याग्निप्रवेशेन विशुद्धायामपि तस्यां लोकापवादभीत्या निर्वासिता रामेण पुनः परीक्षाप्रकरणे भूमितलप्रवेशः ततश्चेदमुत्थानमिति प्रतीयते ।

तस्येति । एवंविधस्य उक्तरूपस्य तस्य च अगस्त्याश्रमस्य सम्प्रत्यपि अस्मिन् समयेऽपि प्रकटं स्पष्टम् उपलक्ष्यमाणा दर्शितदिशा ज्ञायमाना पूर्ववृत्तान्ताः पूर्वोदन्ता यस्य तस्य 'वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इत्यमरः। नातिदूरे समीप एव पम्पाभिधानं पम्पेतिसंज्ञकः पद्मसरः कमलकासारः 'कासारः सरसी सरः' इत्यमरः, विद्यत इति वक्ष्यमाणेन सम्बन्धः। इह प्रथमान्तपदानि पद्मसरोविशेषणानि । जलनिधयः समुद्राः तेषां पानेन चुलुकीकृतेन कुपितः जलाधिपतित्वात् क्रुद्धो यो वरुणः प्रचेताः 'प्रचेता वरुणः पाशी' इत्यमरः, तेन उत्साहितः अन्यं महासमुद्रं निर्मातुं दत्तोत्साहः तेन तथोक्तेन, वेधसा प्रजापतिना 'स्रष्टा प्रजापतिर्वेधाः' इत्यमरः, अगस्त्यमत्सरात् अगस्त्यं मुनिं प्रति शुभद्वेषात् 'मत्सरोऽन्यशुभद्वेषः' इत्यमरः, तस्य अगस्त्यस्य आश्रमसमीपवर्ती मुनिजनस्थाननिकटवर्ती, अपरोऽन्यो महाजलनिधिरिव महासागर इव उत्पादितः निर्मितः अतिविस्तृतत्वादित्याशयः । इह महाजलनिधिरिवेति द्रव्योत्प्रेक्षा ।

प्रलयेति । प्रलयकाले कल्पान्तसमये विघटिता विस्खलिताः, अष्टानाम् अष्टसंख्यकानां दिशां हरितां

उत्पन्न कर दिये। जिस आश्रममें रामचन्द्रके शराघातसे निपातित, दनुकबन्धका अतिदीर्घ बाहु, अगस्त्यजीके क्रोधके शान्ति निमित्त उपस्थित अजगररूपधारी नहुषके शरीरको सूचितकर मुनिगणको भ्रम उत्पन्नकर दिया था। और जिस आश्रममें रामचन्द्रजीने सीताके विरहदुःखको उपशमन करनेके लिये, अपनी पर्णशालाके मध्यमें सीताकी मूर्त्तिको चित्रित किया गया था, उसे देखकर वनचरगण इस समय भी मनमें ऐसा कहते हैं कि सीताजी मानो रामचन्द्रजीके वासस्थानको देखनेके लिये उत्कण्ठित हो दूसरीवार पातालसे उठकर आई हुई है।

इस समय भी उस आश्रमको देखने पर स्पष्टरूपसे पूर्ववृत्तान्त अवगत हो रहा है, इस प्रकार उस आश्रमके समीपमें ही 'पम्पा' नामका एक सरोवर है ( उसे कवि उत्प्रेक्षा करता है कि ) अगस्त्यजीके समुद्रपान करनेसे वरुणदेव उनके प्रति कुपित हो दूसरा एक महासमुद्र उत्पन्न करने के लिये विधाता (ब्रह्मा) को प्रोत्साहित किया जिससे अगस्त्यके प्रति विद्वेषवश उनके आश्रमके ही समीपवर्ती अन्य एक महासमुद्र उत्पन्न करा दिये हैं ( ऐसी प्रतीति होती है अत एव ) प्रलयकालमें समस्त दिशाओंका सन्धिबन्धन स्खलित होनेसे पृथिवीतलनिपतित आकाशके समान विद्यमान वह

१ अतिमहत् । २ '''बाण''' । ३ ''प्रसादेनागत''' । ४ चकार ऋषिगणस्य । ५ तनयभर्त्रा । ६ '''विनोदार्थम् । ७ अभ्यन्तरे । ८ धरणीतलादुल्लसन्तीव । ९ उपलभ्यते । १० 'एवंविधस्य' इति पाठः क्वापि नोपलभ्यते । ११ कुपितवरुणप्रोत्साहितेन । १२ जलनिधि । १३ '''विघट्टिताष्टदिग्विभाग''' । १४ बन्धनं ।

निपतितम्, आदिवराहसमुद्धृत-धरामण्डल-स्थानमिव सलिलपूरितम्[1], अनवरत-मज्ज-दुन्मद-शवरकामिनी-कुचकलस-लुलित-जलम्, उत्फुल्ल-कुमुद-कुवलय-कह्लारम्, उन्निद्रारविन्द-मधुबिन्दु-बद्धचन्द्रकम्[2], अलिकुल-पटलान्धकारितसौगन्धिकम्, सारसित-समद-सारसम्[3], अम्बुरुह-मधुपान-मत्त-कलहंसकामिनी-कृत-कोलाहलम्, अनेक-जलचर-पतङ्गशत[4]-सञ्चलनचलित[5]-वाचाल-वीचिमालम्, अनिलोल्लासित[6]-कल्लोल[7]-शिशिर-शीकरारब्ध-दुर्दिनम्,

विभागाः प्रदेशाः तत्तत्पर्वतावधिकाः तेषां सन्धयः संयोजनानि तेषां बन्धा बन्धनानि यत्र एवम्भूतम्, भुवि पृथिव्यां निपतितं गगनतलमिव नभस्तलमिव 'नभोऽन्तरिक्षं गगनम्' इत्यमरः, स्थितं तिष्ठन्तम् अत्यन्तस्वच्छत्वादतिविस्तृतत्वाच्चेत्यभिप्रायः। अत्रापि गगनतलमिवेति द्रव्योत्प्रेक्षा।

आदीति। आदिवराहेण विष्णोस्तृतीयावतारेण महावराहरूपेण समुद्धृतं सम्यक् प्रकारेण जलाद्बहिरानीतं यत् धरामण्डलं भूमण्डलं तस्य स्थानम् अवकाशः जलपूरितमिव सलिलपूरितमिव स्थितम् अतिविस्तृतत्वादिति भावः। अत्र जलपूरितमिवेति क्रियोत्प्रेक्षा।

अनवरतेति। अनवरतं सन्ततं मज्जन्त्यः अवगाहमानाः या उन्मदा यौवनगर्वाधिष्ठिताः शवरकामिन्यः भिल्लनार्यः तासां कुचकलसैः स्तनघटैः लुलितानि आलोडितानि जलानि सलिलानि यस्य तत् तथोक्तम्। इह कुचा एव कलसा इति विग्रहे रूपकम्, किं वा कुचाः कलसा इवेति विग्रहे उपमेति द्वयोरपि वारयितुमशक्यत्वात् सन्देहसङ्करः।

उत्फुल्लेति। उत्फुल्लानि प्रस्फुटितानि कुमुदानि श्वेतोत्पलानि कुवलयानि नीलोत्पलानि कह्लाराणि रक्तोत्पलानि च यत्र तत् तादृशम्। 'सिते कुमुदकैरवे' 'स्यादुत्पलं कुवलयमथ नीलाम्बुजन्म च' इत्यमरः।

उन्निद्रेति। उन्निद्राणि विकसितानि यानि अरविन्दानि पद्मानि तेषां मधुबिन्दुभिः मकरन्दकणिकाभिः यद्वा सलिलोपरि विहिताः चन्द्रकाः मयूरबर्हचन्द्राकारा यत्र तत् तादृशम्।

अलीति। अलिकुलानां भ्रमरवृन्दानां पटलेन समुदायेन अन्धकारितानि आवृतानि सौगन्धिकानि कह्लाराणि यत्र तत्। 'सौगन्धिकं तु कह्लारम्' इत्यमरः। अत्र कुलपटलयोर्मध्ये कस्याप्येकस्यैव कथनेनेष्टसिद्धावपरस्य ग्रहणं निरर्थकमेवेति कुशलाः।

सारसितेति। सारसितेन शब्देन सह वर्तमाना अत एव समदा मदोत्कटाः सारसा लक्ष्मणाप्रभृतयः यत्र तत् 'हंसस्य योषिद्वरटा सारसस्य तु लक्ष्मणाः' इति कोशः। अत्र छेकानुप्रासः, तदुक्तं दर्पणे—'छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा' इति।

अम्बुरुहेति। अम्बुरुहाणि पद्मानि तेषां यन्मधु मकरन्दः तस्य पानेन मत्ताः मदोत्कटा याः कलहंसकामिन्यः वरटाः ताभिः कृतो विहितः कोलाहलः कलकलो यत्र तत् तादृशम्।

अनेकेति। अनेके सहस्रशो ये जलचरा नक्रझषादयो जलजन्तवः तेषां पतङ्गानां पक्षिणाञ्च शतस्य मण्डलस्य सञ्चलनेन गमनागमनेन चलिताः क्षोभं प्राप्ताः वाचाला मुखरायमाणा च वीचिमाला लहरिसन्ततिर्यत्र तत् तादृशम्। इह छेकानुप्रासः।

अनिलेति। अनिलेन पवनेन उल्लासिता उत्थानं प्रापिता ये कल्लोला महातरङ्गाः तेषां शिशिरशीकरैः शीतलाम्बुकणैः आरब्धं कृतं दुर्दिनं मेघाच्छन्नदिनं यत्र तत् तादृशम्, वृष्टिजलमिव तेषामपि पतनादित्याशयः। अत्र वृत्त्यनुप्रासः, तदुक्तं दर्पणे—

'अनेकस्यैकधासाम्यमसकृद्वाप्यनेकधा। एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते॥'

देखनेमें आरहा है। पम्पासरोवरको देखनेसे यह प्रतीत होता है, कि आदिवराहद्वारा समुत्तोलित पृथिवीमण्डलका अवकाश (खाली जमीन) जलसे पूर्णकर रक्खा हुआ है। निरन्तर स्नान करनेवाली यौवन–गर्वित शबरस्त्रियों के कुचकुम्भ, पम्पासरोवरके जलको आलोडित कर रहा है, जिस सरोवरमें श्वेत, नील और रक्त ये तीन प्रकारके कमल प्रस्फुटित हो रहे हैं, विकसित कमलके मधुबिन्दुजल ऊपरमें गिरकर मयूरपुच्छस्थ चन्द्राकृति चिह्नके समान चिह्न उत्पन्न कर रहा है, भ्रमरगण सुगन्धित रक्तोत्पलसमूहको आच्छादन (ढाँक) कर बैठ रहे हैं, सारस पक्षिगण आमोदका शब्द कर रहे हैं, कलहंसीगण कमलरसपानमें मत्त होकर कोलाहल कररही हैं, अनेक जलचर पक्षियों के सञ्चरणसे तरङ्गपङ्क्तियाँ उत्पन्न हो शब्द कर रही हैं, वायुके वेगसे बड़ी बड़ी तरङ्गें उठ रही हैं, एवं उनसे शीतल

१ सलिलपरिपूरितम्। २ ...मधुद्रव, मधुबिन्दुनिष्यन्द..., मकरन्दबिन्दुबद्ध। ३ आरसित...। ४ ...पतत्रिशत...। ५ ...चञ्चलित। ६ अनिलोल्लसित...। ७ कल्लोलशिखरशीकरारचित।

अशङ्कितावतीर्णाभिरम्भःक्रीडारागिणीभिः स्नानसमये वनदेवताभिः केशपाशकुसुमैः सुरभीकृतम्, एकदेशावतीर्ण-मुनिजनापूर्यमाण-कमण्डलु-कल-जलध्वनि-मनोहरम्, उन्मिषदुत्पलवन-मध्यचारिभिः सवर्णतया रसितानुमेयैः कादम्ब-कदम्बकैरासेवितम्, अभिषेकावतीर्ण-पुलिन्दराज-सुन्दरी-कुच-चन्दनधूलि-धवलित-तरङ्गम्, उपान्त-जात-केतकी-रजः-पटल-बद्ध-कूल-पुलिनम्, आसन्नाश्रमागत-तापस-क्षालितार्द्र-वल्कल-कषाय-पाटल-तट-जलम्, उपतट-विटपि-पल्लवपुटानिल-वीजितम्, अविरल-तमाल-वीथिकान्धकारिताभिः

अशङ्कितेति । अशङ्कितं निर्जनत्वेन शङ्कारहितं यथा स्यात्तथा अवतीर्णाभिः अन्तःप्रवेशं कृतवतीभिः, अम्भःक्रीडायां जलकेल्यां रागिणीभिः अत्यधिकमनोरथयुक्ताभिः वनदेवताभिः वनाधिष्ठातृदेवीभिः स्नानसमये मज्जनकाले केशपाशानां कचसमूहानां कुसुमैः सुमनोभिः सुरभीकृतं सौगन्ध्यजनितम् ।

एकेति । एकदेशे एकभागे अवतीर्णैः अन्तःप्रवेशं कृतवद्भिः मुनिजनैः तपस्विगणैः आपूर्यमाणा जलेन भ्रियमाणा ये कमण्डलवः देवादिपूजनपात्रविशेषाः तेषां कलैः अव्यक्तमधुरैः जलध्वनिभिः सलिलपूरणशब्दैः मनोहरं मनोज्ञम् ।

उन्मिषदिति । उन्मिषतः प्रस्फुटत उत्पलवनस्य श्वेतकमलविपिनस्य मध्येऽन्तः चरन्तीभिः गच्छन्तीभिः, अत एव सवर्णतया श्वेतकमलकादम्बकदम्बकयोः सादृश्यतया रसितेन शब्देन अनुमेयैः अनुमातुं योग्यैः न तु पार्थक्येन चाक्षुषप्रत्यक्षगम्यैरित्याशयः, कादम्बकदम्बकैः कलहंससमूहैः आसेवितं समन्तात्पर्युपासितम् । 'कादम्बः कलहंसः स्यात्' 'स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम्' इत्यमरः । इह रसितानुमेयैरित्यनेन मीलितालङ्कारो ध्वन्यते, तथाहि दर्पणे—मीलितं वस्तुनो गुप्तिः केनचित्तुल्यलक्षणा' । एवञ्च वस्तुना अलङ्कारध्वनिरिति व्याख्यातारः ।

अभिषेकेति । अभिषेकाय मज्जनार्थम् अवतीर्णाः सलिलान्तःप्रविष्टा याः पुलिन्दराजस्य शबराधिपतेः सुन्दर्यः कामिन्यः तासां ये कुचा वक्षोजाः तेषां चन्दनधूलिभिः लिप्त-शुष्क-मलयजपांसुभिः धवलिताः शुभ्रीकृताः तरङ्गा ऊर्मयो यस्य तत् तादृशम् । इह शुभ्ररूपसम्पादनसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः ।

उपान्तेति । उपान्ते पानीयनिकटे जातानाम् उत्पन्नानां केतकीनां मालतीपुष्पाणां रजःपटलैः धूलिसमूहैः बद्धं रचितं कूले तटसमीपे पुलिनं सैकतं यस्य तत् । इह पूर्वोऽलङ्कारः ।

आसन्नेति । आसन्नाः समीपवर्त्तिनो ये आश्रमा तपस्विस्थानानि तेभ्य आगतैरायातैः तापसैः मुनिजनैः क्षालितानां धौतानाम् आर्द्राणां जलाविलानां तत्क्षणं कर्त्तयित्वा नयनेन निर्यासाविर्भावादित्यभिप्रायः, वल्कलानां परिधेयवृक्षत्वचां कषायैः तुवरैः 'तुवरस्तु कषायोऽस्त्री' इत्यमरः, पाटलं श्वेतरक्तं 'श्वेतरक्तस्तु पाटलः' इत्यमरः, तटजलं तीरान्तिकसलिलं यस्य तत् तादृशम्, तटनिकट एव क्षालनादित्याशयः ।

उपेति । तटस्य समीपमुपतटम् तत्र उपतटे तीरनिकट इत्यर्थः, ये विटपिनः पादपाः तेषां पल्लवाः किसलयानि तैः यः अनिलो वायुः तेन वीजितं तालवृन्तवायुरिवाचरितम् ।

अविरलेति । अविरलाः सान्द्रा या तमालवीथिका तापिच्छपङ्क्तिः 'कालस्कन्धस्तमालः स्यात्ता-

जलबिन्दुसमूह गिरकर वृष्टिके दिन बन रहे हैं, जलक्रीड़ा करनेमें अनुरागिणी वनदेवियाँ स्नानके समयमें निःसन्देह मनसे जलमध्यमें प्रवेशकर केशपाशस्थित कुसुमसमूहसे सरोवरके जलको सुगन्धमय कर रही हैं, जब तपस्वीगण एक ओर जलमध्यमें प्रवेशकर जलसे कमण्डलु भरने लगते हैं उस समय उसका अव्यक्त मधुर शब्द हृदयको आकर्षित करता है । कलहंसगण विकसित कुमुदवनमध्यमें विचरण कर रहे हैं, किन्तु वे कलहंसगण और कुमुदवन समानवर्ण होनेके कारण अलग २ प्रतीत नहीं हो रहे हैं, केवल शब्द सुनकर अनुमानसे ही उन लोगोंका पहचान होरहा है; शबरराजके स्त्रियोंके स्नान करनेसे जलमध्यमें प्रविष्ट उन लोगोंके स्तनलिप्तचन्दन धूलियाँ फैलकर तरङ्गपङ्क्तियोंको श्वेतवर्ण कर रही हैं, जलके समीपमें उत्पन्न हुए केतकी ( केवड़े ) पुष्पके परागसमूह जलमें गिरकर तीरके समीपमें पुलिकबन्धन ( बालूका ढेर ) बन रहे हैं, समीपवर्ती आश्रममें ही रहनेवाले तपस्वीगण वृक्षोंसे तत्काल आनीत वल्कल (पेड़के छिलके) को प्रक्षालित कर रहे हैं, उस समय उस वल्कलसे रस निकलकर तीरके समीपवर्ती जलको श्वेतरक्त वर्ण कर रहा है, तीरसमीपस्थ नानाविध वृक्षोत्पन्नपल्लवपत्रसमूहसे वायु जलके ऊपर पंखा चला रहा है, अविरल

१ रन्तः । २ केशकुसुमैः । ३ कलध्वनि । ४ उन्मिषितः··· । ५ कादम्बैः । ६···शवरी··· ७···धवलिततरम् । ८ 'जात' इति पाठः क्वचिन्नास्ति । ९ वृक्षपल्लवानिल··· । १० वीथ्यन्धकारिताभिः ।

वालि निर्वासितेन संचरता प्रतिदिनमृष्यमूकवासिना सुग्रीवेणावलुप्त-फल-लघु-लताभिः, उद-वासितापसानां देवतार्च्चनोपयुक्त-कुसुमाभिः उत्पतज्जलचर-पतङ्ग-पक्षपुट-विगलित-जलबिन्दुसेक-सुकुमार-किसलयाभिः लतामण्डप-तल-शिखण्डि-मण्डलारब्ध-ताण्डवाभिः अनेक-कुसुम-परिमल-वाहिनीभिर्वनदेवताभिः श्वास-वासिताभिरिव वनराजिभिरुपरुद्ध-तीरम्,

---

पिच्छोऽपि' इत्यमरः, तया अन्धकारिताभिः कृतान्धकाराभिः। इतोऽग्रे तृतीयान्तानि बहुवचनपदानि वनराजिभिरित्यग्रिमस्य विशेषणानि।

वालीति। वालिना इन्द्रात्मजेन वानराधिपतिना निर्वासितेन राजधानीतो निष्कासितेन, प्रतिदिनं प्रत्यहं सञ्चरता तत्रागच्छता, ऋष्यमूकाख्यो गिरिस्तत्र वासिना निवसनशीलेन, सुग्रीवेण बाल्यनुजेन अवलुप्तानि दूरीकृतानि फलानि याभ्यः ताः, अत एव लघ्व्यः फलभाररहिताः लता व्रतत्यो यासु ताभिः तादृशीभिः।

पुरा कश्चन मायावीनामासुरः वालिसुग्रीवयोः सह रणं कुर्वाणः तयोः प्रहारेणात्यन्तखिन्नः केनचिद्बिलेनाधः प्रविष्टः। तदा वाली सुग्रीवमाह—सुग्रीव! त्वं तावत् इहैव बिलमुखे तिष्ठ यावदहं तं निहत्यागच्छामि' इति विज्ञाप्य स्वयं तं हन्तुं तद्बिलमेव प्राविशत्, परन्तु व्यतीते बहुकाले तत्प्रतीक्षया तिष्ठन्नपि सुग्रीवः किं कर्तव्यमिदानीमित्येवं विचारयत्येव बिलमुखादाविर्भूतः शोणितः, अथ तं निरीक्ष्य 'प्रायो मम भ्राता वाली तेन हत' इति निश्चित्य बिलमुखे बृहन्तमेकं प्रस्तरं स्थापयित्वा किष्किन्धायामागत्य बान्धवेभ्यस्तद्वृत्तान्तं निवेद्य स्वयमभिषिक्तो वालिराज्यं शशास। अथातीते कियत्समये वाली तदसुरं निहत्य तेनैव पथा प्रत्यावृत्तो बिलमुखे प्रस्तरं वीक्ष्य कुपितः पादाघातेन तं दूरीकृत्य किष्किन्धामागत्य सुग्रीवचरितमतिक्रूरमित्यवधार्य स्वराज्याद्बहिर्निष्काशयामास। सोऽपि तद्दुःखदुःखितः ऋष्यमूकगिरौ निवासमकरोदिति रामायणीया किष्किन्धाकाण्डीया कथा।

उदवासीति। उदके जले वसन्तीत्युदवासिनश्च ते तापसास्तपस्विनश्चेति तेषां तथोक्तानाम्, 'पेषं वासवाहनधिषु च' इत्यनेनोदकस्योदादेशो ज्ञेयः। देवतार्चनेषु देवपूजासु उपयुक्तानि आवश्यकानि कुसुमानि पुष्पाणि यासु ताभिः तथोक्ताभिः।

उत्पतदिति। उत्पतन्त उड्डीय गच्छन्तो ये जलचरा नक्रझषाद्याः पतङ्गाः पक्षिणः तेषां पक्षपुटेभ्यः विगलिता च्युता ये जलबिन्दवः सलिलकणाः तैः सेकः सिञ्चनं तेन सुकुमाराणि विशेषमृदुलानि किसलयानि पल्लवानि यासां ताभिः तथोक्ताभिः।

लतेति। लतानां व्रततीनां ये मण्डपाः आच्छादितस्थानानि तेषां तलेषु अधःप्रदेशेषु शिखण्डिमण्डलेन मयूरगणेन आरब्धं प्रवर्त्तितं ताण्डवं नृत्यं यासु ताभिः तथोक्ताभिः,'ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने' इत्यमरः। इह वृत्त्यनुप्रासस्तल्लक्षणञ्चोक्तं प्राक्।

अनेकेति। अनेकेषां बहुप्रकाराणां कुसुमानां पुष्पाणां परिमलान् गन्धान् वहन्तीति ताः तादृशीभिः 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे' इत्यमरः, अत एव वनदेवताभिः विपिनाधिष्ठातृदेवीभिः (कर्त्रीभिः) स्वश्वासेन स्वीयश्वासवायुना वासिताभिः सुगन्धीकृताभिरिव वर्तमानाभिः; वनराजिभिः वनपङ्क्तिभिः उपरुद्धानि व्याप्तानि तीराणि तटानि यस्य तत् तथोक्तम्, सरोविशेषणमिदम्। अत्र वासिताभिरिवेति क्रियोत्प्रेक्षा।

---

तमालवृक्षसमूह उस तीरस्थवनको अन्धकारित कर दिया है, वानरराज वाली द्वारा किष्किन्धासे निकाले हुए सुग्रीव ऋष्यमूक पर्वत पर वास कर प्रतिदिन इस वनमें आकर नानाविध फल आहरण करते हैं जिससे समस्तलतायें भारहीन होकर वनपङ्क्तिमें विद्यमान हैं, जल मध्यमें रहकर तपस्या करनेवाले मुनियोंके देवतापूजनमें आवश्यक सभी पुष्प इस वनपङ्क्तिमें विराजमान है, जलचर पक्षिगण ऊपर होकर उड़नेके समय अपने पंखसे निःसृत जलबिन्दु गिराकर जिस वनके पल्लवोंको अधिक कोमल कर रहे हैं, जिस वनके लतामण्डपमध्यमें मयूरगण नृत्य कर रहे हैं, नानाजातीय पुष्पके सुगन्धिवहन करनेसे तत्तीरस्थवनपंक्तियां मानो वनदेवताओंके अपने श्वासवायुसे सौरभमय हो गयी हैं ऐसी प्रतीति हो रही है।

---

१ इह 'च' इत्यधिकः पाठः क्वचित्। २ परिलघु। ३ 'पतङ्ग' इति पाठः क्वचिन्नास्ति। ४ 'स्थित' इत्यधिकः पाठः क्वापि। ५ वनदेवतानिःश्वास, वनदेवताभिः स्वश्वासः। ६ रुद्ध'''।

अपरसागरशङ्किभिः सलिलमादातुमवतीर्णैर्जलधरैरिव बहल-पङ्क-मलिनैर्वनकरिभिरनवरत-पीयमानसलिलम्[1], अगाधमनन्तमप्रतिमम्[2] अपां निधानं पम्पाभिधानं पद्मसरः ।

यत्र च[3] विकच-कुवलय-प्रभा-श्यामायमान-पक्षपुटान्यद्यापि मूर्त्तिमद्रामशापग्रस्तानीव मध्यचारिणामालोक्यन्ते[4] चक्रवाकनाम्नां[5] मिथुनानि ।

तस्यैव पद्मसरसः[6] पश्चिमे तीरे राघव-शर-प्रहार-जर्जरित-जीर्ण-तालतरु-षण्डस्य[7] च समीपे दिग्गज-करदण्डानुकारिणा जरदजगरेण सततमावेष्टितमूलतया बद्धमहालबाल इव

अपरेति । 'अयम् अपरो भिन्नः सागरः समुद्रः' इति शङ्कन्तं भ्रमं जनयन्तीति तैः तथोक्तैः, सलिलं जलम् आदातुं ग्रहीतुम् अवतीर्णैः गगनादुत्तरितैः जलधरैः वारिदैरिव वहलपङ्कैः शरीरलग्नाधिककर्दमैः मलिनाः श्यामा तैः तथोक्तैः, वनकरिभिः आरण्यकहस्तिभिः अनवरतं निरन्तरम् आपीयमानानि समन्तात्पानं क्रियमाणानि सलिलानि पानीयानि यस्य तत् तादृशम् । अत्र जलधरैरिवेति जातिस्वरूपोत्प्रेक्षा ।

अगाधमिति । अगाधम् अप्राप्ततलम् अनन्तं शेषरहितम् अतिमहदित्यर्थः अप्रतिमं स्वसादृश्यरहितम्, अपां जलानां निधानं शेवधिस्वरूपम् अपरिमितसलिलयुक्तत्वादित्याशयः । 'पम्पा' इति अभिधानं नामधेयं यस्य तत्, पद्मानां कमलानामाकरीभूतं सरः कासारः पद्मसरः । अन्वयस्तु प्रागेवोक्तः ।

यत्रेति । यत्र यस्मिन् पम्पासरसि, विकचानि विकसितानि यानि कुवलयानि नीलोत्पलानि 'नीलोत्पलं कुवलयम्' इत्यमरः, तेषां याः प्रभाः कान्तयः ताभिः श्यामायमानानि निकटसञ्चरणात् श्यामवदाचरमाणानि पक्षपुटानि येषां तानि तथोक्तानि । मध्यचारिणां पम्पासरोवरान्तर्भ्रमणकारिणां चक्रवाकनाम्नां रथाङ्गसंज्ञकानां पक्षिणां पतत्रिणां मिथुनानि युगलानि, अद्यापि एतावत्समयपर्यन्तमपि मूर्त्तिमान् देदीप्यमानरूपो यो रामस्य दशरथतनयस्य शापः अभिसम्पातः तेन ग्रस्तानि गृहीतानीव आलोक्यन्ते दृश्यन्ते, तत्र विद्यमानैर्लोकैरिति शेषः ।

इह रामशापश्यामायमानपक्षपुटत्वेन ग्रस्तानीवेति वाच्या क्रियोत्प्रेक्षा । यद्यपि 'मालिन्यं व्योम्नि पापे' इति कविसमयप्रसिद्धया पापस्यैव मलिनत्वेन वर्णनं विहितं न तु शापस्य, तथापि तत्सादृश्यतयैव तथा वर्णनं कृतमित्यवधेयम् । इह च 'पम्पातटे सीताविरहविह्वलं दाशरथिं वीक्ष्य चक्रवाकाः हासं विदधुः ततस्तानेवं निरीक्ष्य 'यथा मां प्रियाविश्लेषः तथैव भवतामपि क्षपायां भविष्यति' इति रामः शशापेत्यैतिहासिकी वार्त्ता ।

तस्यैवेति । तस्य पम्पाभिधेयस्यैव पद्मसरसः कमलकासारस्य, पश्चिमे तीरे प्रतीच्यां तटे, राघवस्य रामस्य ये शरा बाणाः तेषां प्रहारेण वेधनेन जर्जरितानां विदारितानां जीर्णानां प्राचीनानां तालतरूणां तालद्रुमाणां षण्डस्य समुदायस्य समीपे महान् महीयान् जीर्णः पुरातनः शाल्मलीवृक्षः रोचनाख्यस्तरुरस्तीत्यग्रिमेण सम्बन्धः । अत्र प्रथमान्तानि पदानि शाल्मलीवृक्षविशेषणानि बोध्यानि । दिक्षु स्थितो गज ऐरावतादिः, तथा चामरः –'ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः । पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः॥' तस्य यः करदण्डः शुण्डादण्डः तमनुकर्त्तुं शीलं यस्य तेन तथोक्तेन, तत्तुल्यविशालेनेत्यर्थः, जरन् वृद्धो योऽजगरस्तन्नामकः पृथुलसर्पः तेन तादृशेन, बद्धं रचितं महत् दीर्घम् आलवालम् आवापः मूले सलिलानिर्गमनार्थखातमृत्परिवेष्टनमित्यर्थः, यस्य स तथोक्त इव । इह दिग्गजेत्यत्र समासगता आर्थी लुप्तोपमा, आलवाल इवेति वाच्या क्रियोत्प्रेक्षा च, उभयोरप्यङ्गाङ्गिभावेन सङ्करालङ्कारः ।

अपर समुद्रके भ्रमसे जलग्रहण करनेके लिये सरोवरमध्यमें प्रविष्ट मेघसमूहके समान, शरीर में प्रचुर कर्दम ( पंक ) संलग्न होनेसे मलिनवर्ण वन्यहस्तिसमूह सर्वदा उस सरोवरके जलको पान करते रहते हैं । इस प्रकार पम्पासरोवर अतलस्पर्श, अतिबृहत्, तुलनारहित, अक्षयजलयुक्त, एवं कमलों का आकर स्थान है ।

जिनके पम्पासरोवरके प्रस्फुटित नीलोत्पलद्वारा पक्षपुट श्यामवर्ण होगये हैं ऐसे आकाशमार्गमें विचरनेवाले चक्रवाकनामक पक्षिगण आज भी रामचन्द्रके मूर्त्तिमान् अभिशापग्रस्तके समान देखनेमें आरहे हैं ।

उस पद्माकर पम्पासरोवरके पश्चिमतीरमें रामचन्द्रजीके बाणप्रहारसे जर्जरित पुरातन तालवृक्षसमूहके समीपमें प्राचीन बहुत विशाल एक शाल्मलीवृक्ष ( शेमलका पेड़ ) है । दिग्गजोंके शुण्डदण्ड (सूंढ़) के समान बहुत विशाल एवं प्राचीन एक अजगर सर्प उसी शाल्मलीवृक्षके मूलदेशमें अपनेको वेष्टित कर रक्खा है जिससे बहुत बड़ा आलवाल

१ आपीयमानम् । २ अप्रतिष्ठम् । ३ 'च' इति पाठः क्वापि नास्ति । ४ मध्यचारिणालोक्यन्ते । ५ चक्रनाम्नां । ६ तस्यैवंविधस्य सरसः । ७ वालतरुखण्डस्य ।

तुङ्ग-स्कन्धावलम्बिभिरनिलवेल्लितैरहिनिर्म्मोकैर्धृतोत्तरीय इव दिक्चक्रवाल-परिमाणमिव गृह्णता भुवनान्तरालविप्रकीर्णेन शाखासंचयेन प्रलयकाल-ताण्डव-प्रसारित-भुजसहस्रमुडुपतिशेखरमिव विडम्बयितुमुद्यतः, पुराणतया पतनभयादिव गगनस्कन्ध-लग्नः निखिल-शरीर-व्यापिनीभिरतिदूरोन्नताभिर्जीर्णतया शिराभिरिव परिगतो व्रततिभिः, जरा-तिलक-बिन्दुभिरिव कण्टकैराचिततनुः इतस्ततः परिपीतसागरसलिलैर्गगनागतैः पत्त्ररथैरिव शाखान्तरेषु निलीयमानैः क्षणमम्बुभारालसैरार्द्रीकृतपल्लवैर्जलधरपटलैरप्युद्भ्रशिखरः,

---

पुरा हि वालिना राज्याद्बहिर्निष्काशित ऋष्यमूकगिरिस्थः वालिवधमिच्छन् हनूमद्द्वारा कृतराममैत्री सुग्रीवः वालिवधोपयोगि सामर्थ्यं भगवति रामचन्द्रेऽस्ति न वेति सन्दिहानः तत्परीक्षणार्थं स्वेन प्रेरितो रामचन्द्रः एकेनैव बाणेन पङ्क्तिबद्धान् सप्ततालवृक्षान् विदारयामास इति रामायणीया कथा ।

तुङ्गेति । तुङ्गम् उन्नतं स्कन्धं प्रकाण्डभागम् अंशभागञ्च अवलम्बितुम् आधारं कृत्वा लम्बमानी-भवितुं शीलं येषां तैः तथोक्तैः अनिलवेल्लितैः पवनचालितैः अहिनिर्म्मोकैः सर्पकञ्चुकैः धृतोत्तरीय इव गृहीतोपसंव्यानवस्त्र इव । क्रियोत्प्रेक्षा ।

दिक्चक्रेति । दिशां ककुभां चक्रवालं मण्डलं तस्य परिमाणम् इयत्ता परिमितं गृह्णतेव आयमानेनेव यद्वा विदधतेव, भुवनान्तराले संसारमध्यभागे विप्रकीर्णं इतस्ततो विस्तारितः तेन, शाखासञ्चयेन लता-संदोहेन 'शिखाशाखालताः समाः' इत्यमरः, प्रलयकाले कल्पान्तसमये यत् ताण्डवम् उद्धतनृत्यं तत्र प्रसारितम् इतस्ततो विपर्यस्तं भुजसहस्रं अनेकतरबाहवो येन स तं तादृशम् उडुपतिः तारापतिश्चन्द्रः शेखरो मस्तकालङ्कारो यस्य तं महादेवं विडम्बयितुम् अनुकरणं विधातुम् उद्यतः कृतप्रयत्न इव । इह गृह्णतेवेति उद्यत इवेति वाच्या क्रियोत्प्रेक्षा, विडम्बयितुमित्यार्थी उपमा, तत्र परस्परमेषामङ्गा-ङ्गिभावः सङ्करः ।

पुराणेति । पुराणतया पुरातनतया पतनभयादिव स्खलनशङ्कयेव वायुः पवनः स्कन्धे प्रकाण्डे लग्नः यस्य तादृशः । एतेन प्रकाण्डेषु वायुप्रवेगेन प्रकम्पो द्योतितः । इह समासोक्तिहेतूत्प्रेक्षयोः सङ्करः ।

निखिलेति । निखिलं समस्तं यत् शरीरं वपुः तद् व्याप्तुं शीलं यासां तादृशीभिः, अतिदूरोन्नताभिः अतिविप्रकृष्टमुत्थिताभिः, वृद्धत्वेनातिरिक्तमुत्पन्नाभिश्च; जीर्णतया प्राचीनतया ( वृद्धावस्थया ) शिराभिरिव अस्थिबन्धनैरिव व्रततिभिः लताभिः 'वल्ली तु व्रततिर्लता' इत्यमरः, परिगतः परिवेष्टितः ।

जरेति । जरायां वृद्धावस्थायां ये तिलकबिन्दवः समग्रशरीरेषु उत्पद्यमाना श्यामवर्णाश्चिह्नविशेषाः तैरिव कण्टकैः क्षुद्रशत्रुभिः आचिता व्याप्ता तनुः देहो यस्य स तथोक्तः । 'कण्टकः क्षुद्रशत्रौ च' इति विश्वः ।

इत इति । परिपीतानि सागराणां समुद्राणां सलिलानि तोयानि यैस्तैः इतस्ततः समन्तात् गगनागतैः विहायसपथोपस्थितैः, पत्त्ररथैः पक्षिभिरिव 'पतत्पत्त्ररथाण्डजाः' इत्यमरः । शाखानां स्कन्धानाम् अन्तरेषु मध्येषु क्षणं क्षणमात्रं निलीयमानैः गुप्ततया स्थितवद्भिः, अम्बुभारेण पीतसलिलभारेण अलसैः मन्थरगा-मिभिः, आर्द्रीकृतानि वर्षणेन क्लिन्नानि पल्लवानि अधः किसलयानि यैस्ते तैः, जलधरपटलैः मेघसमूहैः

---

( कियारी ) निर्भाग किया हो ऐसा प्रतीत हो रहा है, सर्पकञ्चुक ( सांपका केंचुआ ) उसके उच्चस्कन्धदेशमें लटका हुआ है जो कि वायुवेगसे सञ्चालित होकर उस शाल्मलीवृक्षके स्कन्धदेशमें मानो उत्तरीयवस्त्र धारण कर रक्खा हो ऐसा बोध कर रहा है, शाखासमूह चारों ओर फैलकर 'दिङ्मण्डल कितना दूर है' इस प्रकार मानो उसका परिमाण कर रहा है; इससे वह शाल्मलीवृक्ष, प्रलयकालीन भयङ्कर नृत्यके समय चारों ओर अगणित बाहुप्रसारणकारी महादेवजीका अनुकरणकरनेको प्रवृत्त है ऐसा प्रतीत हो रहा है। और प्राचीन हो जानेके कारण गिर जानेके डरसेही मानो वह शाल्मली वृक्ष आकाशके स्कन्धदेशको अवलम्बन कर रक्खा है, वृद्धावस्थाप्रयुक्त शिरासमूह जैसे सम्पूर्ण शरीरको व्याप्त कर रखता है उसी प्रकार अत्यधिक दूरमें उठे हुए लतासमूह उस शाल्मली वृक्षको वेष्टित कर रक्खे हैं, वृद्धावस्थामें सर्वाङ्गशरीरमें उत्पन्न श्यामवर्ण चिह्नके समान कण्टकसमूह उस वृक्षको सर्वाङ्गव्याप्त होकर विद्यमान है, समुद्रजल पान करके नाना दिशाओंसे आकाशमार्गमें उपस्थित पक्षीगणके समान, शाखासमूहके भीतरमें क्षणभर प्रच्छन्नभावसे ठहरे हुए एवं जलभारसे धीरे चलनेवाले मेघगण द्वारके जलसे

---

१ उडुपति शकलशेखरमिव । २ पवनस्कन्ध, ···वायुस्कन्ध··· । ३ निजकण्टकैः । ४ जलैः । ५ शाखान्तदेशेषु । ६···शिखरदेशः ।

तुङ्गतया[1] नन्दनवनश्रियमिवावलोकयितुमभ्युद्यतः, स्वसमीपवर्त्तिनामुपरि[2] संचरतां गगनतल-[3]गमन-खेदायासितानां रविरथतुरङ्गमाणां सृक्कपरिस्रुतैः फेनपटलैः सन्देहित-तूलराशिभि-र्धवलीकृतशिखरशाखः, वनगज-कपोलकण्डूयन-लग्नमद[4]-निलीन-मत्त मधुकरमालेन लोह-शृङ्खलाबन्धननिश्चलेनेव[5] कल्पस्थायिना मूलेन समुपेतः, कोटराभ्यन्तरनिविष्टैः स्फुरद्भिः[6] सजीव इव मधुकरपटलैः, दुर्य्योधन इवोपलक्षित-शकुनिपक्षपातः, नलिननाभ[7] इव वन-

रपि न दृष्टम् अत्युन्नततया नेक्षितं शिखरं प्रान्तप्रदेशो यस्य स तथोक्तः। अत्र पत्ररथैरिवेति वाच्योपमालङ्कारः, जलधरपटलानां शिखरावलोकनसम्बन्धासत्त्वेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्त्यलङ्कारश्चेत्युभयोः सङ्करः। अतिशयाभिधानेन चात्युन्नतत्वं गम्यते इत्यलङ्कारेण वस्तुध्वनिः।

तुङ्गेति। तुङ्गतया उन्नततया 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे' इत्यमरः, नन्दनवनम् इन्द्रोद्यानम् 'अथ नन्दनम्, इन्द्रोद्याने नन्दनस्तु तनये हर्षकारिणि' इति हैमः, तस्य या श्रीः शोभा ताम् अवलोकयितुमिव वीक्षितुमिव अभ्युद्यतः तत्परः। अत्र अवलोकयितुमिवेति क्रियोत्प्रेक्षा।

स्वसमीपेति। स्वसमीपवर्त्तिनां निजान्तिकस्थायिनाम् उपरि ऊर्ध्वं सञ्चरतां गच्छताम्, गगनतले आकाशतले गमनेन सञ्चारेण यः खेदः परिश्रमः तेन आयासितानां खेदमुपगतानां रविरथतुरङ्गमाणां सूर्यरथनियुक्ताश्वानां सृक्काभ्याम् ओष्ठप्रान्ताभ्यां 'प्रान्तावोष्ठस्य सृक्कणी' इत्यमरः, परिस्रुतैः पतितैः, सन्देहितः 'अयमेतद्वृक्षोत्पन्नः तूलसमुदायो न वा' एवमात्मनि सन्देहविषयीकृतः तूलराशिः कार्पासिकपिण्डो यैस्तैः फेनपटलैः श्वेतकफसमूहैः धवलीकृताः श्वेतीकृताः शिखरशाखा अग्रस्थायिन्यः शाखा यस्य सः। इहोक्तविधफेनपटलैरग्रस्थायिशाखानां श्वेतीकरणसम्बन्धाभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिः, अत एव चात्युन्नतत्वं गम्यत इत्यलङ्कारेण वस्तुध्वनिः।

वनगजेति। वनगजानाम् आरण्यकहस्तिनां कपोलयोः गण्डयोः कण्डूयनेन खर्जूयनेन लग्नेषु सक्तेषु मदेषु दानवारिषु निलीना अवस्थिता मत्ताः मधुपानेन क्षीबा मधुकरमाला भ्रमरपङ्क्तयो यत्र तेन तादृशेन 'गोस्त्रियोरुपसर्जनस्य' इत्युपसर्जनह्रस्वः, अत एव लोहशृङ्खलया लोहनिगडेन 'अथ शृङ्खला, अन्दुको निगडोऽस्त्री स्यात्' इत्यमरः, यद्बन्धनं नियन्त्रणं तेन निश्चलं स्थिरं तेनेव विद्यमानेन, कल्पस्थायिना प्रलयसमयं यावत् तिष्ठता मूलेन समुपेतः संयुक्तः। इह काव्यलिङ्गगुणोत्प्रेक्षयोः सङ्करः।

कोटरेति। कोटराभ्यन्तरे शरीरस्थछिद्रमध्ये निविष्टैः निलीनैः स्फुरद्भिः दीप्यमानैः मधुकरपटलैः भ्रमरवृन्दैः सजीव इव श्वासादिप्राणयुक्त इव कोटरे प्राणवन्मधुकराणां निरन्तरस्पन्दनादित्याशयः। इह गुणोत्प्रेक्षा।

दुर्योधन इति। दुर्योधनो धृतराष्ट्रप्रथमसुतः तद्वदिव, उपलक्षितो जनैर्लोचनविषयीकृतः शकुनीनां पक्षिणां पक्षैः छेदैः पातः पतनं यस्मिन् स तादृशः, पक्षे उपलक्षितः जनैर्लोचनविषयीकृतः शकुनौ गान्धाराधिपतौ मातुले पक्षपातः प्रणयो यस्य स तथोक्तः। इह पूर्णोपमा।

नलिनेति। नलिनं कमलं नाभौ यस्य स विष्णुरिव, वनमालया अरण्यपंक्त्या उपगूढ आच्छादितः, पक्षे वनमाला जानुपर्यन्तावलम्बिनी सर्वर्तुपुष्पोज्ज्वला मध्ये स्थूलकदम्बाढ्या तया स्रजा उपगूढ आश्लिष्ट इहापि पूर्ववदेवालङ्कारः। वनमालालक्षणमाह—

निम्नवर्त्ती पल्लवसमूहको भिगा रहे हैं, किन्तु अग्रप्रदेश देखनेमें समर्थ नहीं हो रहे हैं, वह शाल्मलीवृक्ष अत्यन्त उन्नत होनेके कारण मानो नन्दनवन को शोभा को देखनेके लिये उद्यत हुआ है, समीपवर्त्ती होकर ऊर्ध्वप्रदेशमें भ्रमण करनेवाले एवं सर्वदा आकाशगमनके परिश्रमसे थके हुए सूर्यरथनियुक्त घोड़ोंके ओष्ठप्रान्तसे निकले हुए फेनसमूह तूलसमुदायका संशय उत्पन्नकर उस शाल्मलीवृक्षके ऊपरवाले शाखासमूहको शुभ्रवर्ण कर रहे हैं, उसके मूलदेशमें गण्ड ( कपोल ) खर्जनके समयमें वन्यहस्तिगणके मदजल संलग्न हो गये हैं, उसके ऊपर मतवाले भ्रमरगणके बैठ जानेसे बोध हो रहा है कि मानो लोहेके शृङ्खलामें बद्ध होनेसे मूलदेश निश्चल होकर प्रलयकाल पर्यन्त रहेगा, भ्रमरगण कोटरमध्यमें रह कर विचरण करते हैं जिससे वह शाल्मली वृक्ष सजीव प्रतीत हो रहा है, दुर्योधनका जिस प्रकार शकुनिके प्रति पक्षपात ( महाभारत में ) देखनेमें आता है, उसी प्रकार शाल्मलीवृक्ष पर पक्षीगणके

१ उत्तुङ्गतया। २ समीप। ३ अम्बरतल। ४ मदसलिल। ५ बन्धननिश्चलेनेव। ६ पतद्भिः। ७ पद्मनाभ इव।

मालोपगूढः, नवजलधरव्यूह इव नभसि दर्शितोन्नतिः, अखिलभुवनतलावलोकनप्रासाद इव वनदेवतानाम्, अधिपतिरिव दण्डकारण्यस्य, नायक इव सर्ववनस्पतीनाम्, सखेव विन्ध्यस्य, शाखाबाहुभिरुपगुह्येव विन्ध्याटवीमवस्थितो महान् जीर्णः शाल्मलीवृक्षः।

तत्र च शाखाग्रेषु कोटरोदरेषु पल्लवान्तरेषु स्कन्धसन्धिषु जीर्णवल्कलविवरेषु च महावकाशतया विश्रब्ध-विरचित-कुलायसहस्राणि दुरारोहतया विगलितविनाशभयानि नानादेशसमागतानि शुक-शकुनिकुलानि प्रतिवसन्ति स्म। यैः परिणामविरलदलसंहतिरपि स वनस्पतिरविरल-दल-निचय-श्यामलं इवोपलक्ष्यते दिवानिशं निलीनैः।

---

'आजानुलम्बिनी माला सर्वर्तुकुसुमोज्ज्वला। मध्ये स्थूलकदम्बाढ्या वनमालेति कीर्तिता॥'

नवेति। नवा नूतना ये जलधरा मेघाः तेषां व्यूहो मण्डलं तद्वदिव, नभसि व्योम्नि दर्शिता प्रकटिता उन्नतिः उच्चत्वं येन स तथोक्तः, पक्षे नभसि श्रावणे मासि दर्शिता प्रकटिता उन्नतिः वृद्धिर्येन स तादृशः। 'नभः खं श्रावणो नभाः' इत्यमरः। अत्रापि पूर्ववदेवालङ्कार इति केचित्, तत्त्वविदस्तु उपरितनेष्वभङ्गश्लेष एवेत्याहुः।

अखिलेति। अखिलानि समस्तानि यानि भुवनतलानि जगन्ति तेषाम् अवलोकनं निरीक्षणं तदर्थं प्रासादो राजभवनमिव अत्युन्नतत्वादित्याशयः। वनदेवतानाम् अरण्याधिष्ठात्रीणां देवीनाम्। दण्डकारण्यस्य दण्डकाभिधवनस्य अधिपतिः स्वामी इव मुख्यत्वादित्यभिप्रायः। सर्ववनस्पतीनां पुष्पं विना फलं येषामेवंविधसर्वतरूणाम् 'वनस्पतिर्वृक्षमात्रे विना पुष्पफलद्रुमे' इति विश्वः। नायकः अध्यक्ष इव, अत्रापि मुख्यत्वादित्याशयः। विन्ध्यस्य बाल्यवालकपर्वतस्य सखा सुहृत् स इव तत्तुल्योन्नतत्वादित्याशयः। इह सर्वत्र जात्युत्प्रेक्षा। शाखा स्कन्धा एव बाहवो भुजाः तैः विन्ध्याटवीं विन्ध्यभूमिम् उपगुह्येव आश्लिष्येव अवस्थितः विद्यमानः। इह निरङ्गं केवलरूपकम्, तथा क्रियोत्प्रेक्षा च अनयोरङ्गाङ्गिभावेन सङ्करालङ्कारः।

तत्रेति। तत्र तस्मिन् शाल्मलीवृक्षे शाखाग्रेषु शाखप्रान्तेषु कोटरोदरेषु शरीरस्थच्छिद्राभ्यन्तरेषु पल्लवान्तरेषु किसलयमध्येषु स्कन्धसन्धिषु प्रकाण्डबन्धेषु जीर्णानि प्राचीनानि यानि वल्कलानि चोचानि तेषां विवरेषु छिद्रेषु, महान् अतिदीर्घः अवकाशः अन्तर्विस्तारः येषां तेषां भावस्तया तथोक्तया विश्रब्धं स्वविश्वासं निःसन्देहं यथा स्यात्तथा विरचितानि निर्मितानि कुलायसहस्राणि नीडसङ्घा यैस्तानि तथोक्तानि दुःखेन अत्यन्तोन्नतत्वात् क्लेशेन आरुह्यत इति दुरारोहः तस्य भावः तत्ता तया विगलितं हृदयात् प्रच्युतं विनाशभयं रुजादिभ्यो मृत्युभयं येषां तानि, नानादेशेभ्यो भिन्नभिन्नप्रान्तेभ्यः समागतानि सम्प्राप्तानि, शुकाः कीराः शकुनयस्तदतिरिक्ताः पतत्त्रिणः तेषां कुलानि समूहानि प्रतिवसन्ति स्म वासं कुर्वन्ति स्म।

यैरिति। दिवानिशं रात्रिन्दिवं नीलीनैः स्थितैः यैः शकुनिकुलैः, परिणामेन पुरातनतया विरलाः स्वल्पाः दलसंहतिः पत्रसमुदायो यत्र स तथोक्तोऽपि तरुणवृक्षवदभिनवदलानां सान्द्रत्वेनोत्पन्नत्वाभावात् जीर्णदलानाञ्च यथाक्रमं ह्रासादित्याशयः, स वनस्पतिः शाल्मलीतरुः, अविरलानि सान्द्राणि यानि दलानि

---

पक्षपात (पंखद्वारा उतरना) देखनेमें आ रहा है, शाल्मलीवृक्ष विष्णु भगवान्‌के समान वनमालासे परिवेष्टित है, मेघसमूह जिस प्रकार श्रावणके महीनेमें अपनी उन्नति (वृद्धि) दिखाते हैं, शाल्मली वृक्ष भी उसी प्रकार आकाशमें अपनी उन्नति (उच्चता) दिखला रहा है, समस्त भूमण्डल निरीक्षण करने के कारण वनदेवतागणके अत्युन्नत प्रासादके समान, दण्डकारण्यके अधिपतिके समान, समस्तवृक्षोंके अधिनायकके समान एवं विन्ध्यपर्वतके मित्रके समान यह शाल्मली वृक्ष स्वकीय शाखाबाहुद्वारा मानो जिस विन्ध्याटवीको आलिङ्गन कर विद्यमान है।

उस शाल्मलीवृक्षके शाखाके अग्रभागमें, कोटरके अन्दरमें, चारों तरफ पल्लवके बीचमें, बड़े बड़े शाखाके सन्धिस्थलमें एवं जीर्णवल्कलस्थ-विवरमध्यमें विस्तृत स्थान पाकर निःसन्देह भावसे पक्षियोंका वासस्थान निर्माण कर, नानास्थानसे आये हुए शुक, शारिका एवं अन्यान्य पक्षिगण उसके ऊपर बड़े कष्टसे चढ़ कर व्याधादिकोंसे मरणभय परित्यागपूर्वक वास कर रहे हैं।

---

१ कृतोन्नतिः। २ विन्ध्याचलस्य। ३ उपगृह्येव। ४ स्थितः। ५ शाल्मली। ६ वल्क। ७ 'च' इति पाठः क्वचिन्नास्ति। ८ विगतविनाशभयानि, विगतभयानि। ९ विरलसंहतिः, विरलदलसन्ततिः। १० श्यामः।

ते च तस्मिन्[1] वनस्पतावतिवाह्य रजनी[2]मात्म[3]नीडेषु प्रतिदिनमुत्थायोत्थायाहारान्वेषणाय नभसि विरचितपङ्क्तयो मदकल-हलधर[4]-हलमुखोत्क्षेप-विकी[5]र्णबहुस्रोतसमम्बरतले[6] कलिन्दकन्यामिव दर्शयन्तः, सुरगजोन्मूलित-विगलदाकाशगङ्गा-कमलिनीशङ्कामुपजनयन्तः, दिवस-कर-रथतुरग-प्रभानुलिप्त[7]मिव गगनतलमुपपाद[8]यन्तः, सञ्चारिणीमिव मरकतस्थलीं विडम्बयन्तः, शैवलपल्लवावलीमिवाम्बरसरसि प्रसारयन्तः, गगने[9]विततैः पत्त्रपुटैः कदलीदलैरिव दिनकर[10]-खर-कर-निकर-परिखेदितान्या[11]शामुखानि वीजयन्तः[12],

पर्णानि तेषां संहतिः समूहः तेन श्यामलः कृष्णवर्ण इव उपलक्ष्यते जनैरवलोक्यते, तत्र तत्र निलीनानां शुकशकुनीनां दलवत् कृष्णवर्णत्वादित्याशयः। इह श्यामलत्वं गुण इति तस्योत्प्रेक्षणादुत्प्रेक्षालङ्कारः।

ते चेति। ते शुकशकुनयः, 'विचरन्ति स्म' इत्यग्रिमेणान्वयः। अत्र प्रथमान्तपदानि 'ते' इत्यस्य विशेषणानि बोध्यानि। तस्मिन् शाल्मलीवृक्षे आत्मनीडेषु निजनिजकुलायेषु 'कुलायो नीडमस्त्रियाम्' इत्यमरः, निशां रात्रिम् अतिवाह्य अतिक्रम्य प्रतिदिनं प्रत्यहम् उत्थायोत्थाय उत्थानं विधायेत्यर्थः आहारान्वेषणाय भक्ष्यमार्गणाय नभसि आकाशे विरचिता कृता पंक्तिः श्रेणी यैस्ते तथोक्ताः। मदेन मधुपानेन कलो मत्तो यो हलधरो बलरामः तस्य हलमुखेन लाङ्गलप्रदेशेन य उत्क्षेपः ऊर्ध्वदेशे क्षेपणं तेन विकीर्णानि विक्षिप्तानि बहूनि स्रोतांसि प्रवाहा यस्याः तां तथोक्तां कलिन्दकन्यां यमुनामिव अम्बरतले गगने दर्शयन्तः दर्शनीयतां प्रापयन्तः। इह कालिन्दीद्वयस्वरूपोत्प्रेक्षणात् द्रव्योत्प्रेक्षालङ्कारः। अत्रत्यवृत्तान्तस्तु प्रागेव प्रतिपादितः।

सुरगजेति। सुरगजेन देवहस्तिना ऐरावतेनेत्यर्थः उन्मूलिता उत्पाटिता अत एव विगलन्ती अधः पतन्ती या आकाशगङ्गा मन्दाकिनी 'मन्दाकिनी वियद्गङ्गा' इत्यमरः, तस्याः कमलिनी पद्मिनी तस्याः शङ्काम् स्वेषु परेषां भ्रान्तिम् उपजनयन्तः उत्पादयन्तः तुल्यकृष्णवर्णत्वादित्याशयः। एवञ्चात्र भ्रान्तिमान् नामालङ्कारः स्पष्ट एव।

दिवसेति। गगनतलम् आकाशतलम्, दिवसकरस्य आदित्यस्य ये रथतुरगाः स्यन्दनयोजितसप्ताश्वाः तेषां प्रभाभिः श्यामरूपाभिः दीप्तिभिः अनुलिप्तं लेपनविषयीकृतमिव उपपादयन्तः विदधतः निजकान्तिभिरित्याशयः। इह अनुलिप्तमिवेति क्रियोत्प्रेक्षा।

सञ्चारिणीति। सञ्चारिणीं पर्यटनशीलां मरकतस्थलीं नीलमणिभूमिं विडम्बयन्तः अनुकुर्वन्त इव स्वकीयानामपि नीलवर्णत्वादित्याशयः। इहाऽप्युक्तालङ्कारः।

शैवलेति। अम्बरं गगनमेव सरः स्वच्छत्वाद्विपुलत्वाच्च कासारः 'कासारः सरसी सरः' इत्यमरः, तत्र शैवलपल्लवस्य शैवालकिसलयस्य आवलीं पंक्तिं प्रसारयन्तः विस्तारयन्त इव स्वेषां शैवालकिसलयवत् श्यामरूपत्वात् ह्रस्वह्रस्वत्वाच्चेत्याशयः। इह अम्बरमेव सर इति निरङ्गकेवलरूपकम्, प्रसारयन्त इवेति क्रियोत्प्रेक्षा चेत्यनयोरङ्गाङ्गिभावेन सङ्करालङ्कारः।

गगनेति। कदलीदलानि रम्भापत्राणि तैरिव श्यामरूपत्वादित्याशयः। गगने आकाशे विततैः विस्तृतैः पत्त्रपुटैः पक्षच्छदैः, दिनकरस्य आदित्यस्य खराः तीक्ष्णाः ये करनिकराः किरणसमूहाः तैः परिखेदितानि संक्लेशितानि आशामुखानि दिग्वदनानि वीजयन्तः स्वोत्पन्नपवनस्पर्शयुतं सम्पादयन्तः। इह कदलीदलैरिवेत्युपमा।

उस वृक्ष पर सब पक्षीगण प्रतिदिन अपने खोतेमें रात्रि व्यतीत कर, प्रातःकालमें उठ खाद्यवस्तु खोजनेके लिए आकाशमें जिस समय पङ्क्तिबद्ध होकर विचरण करते हैं, उस समय मद्यपानमत्त बलरामके हलद्वारा आकर्षण करनेसे विक्षिप्तप्रवाह यमुनाके समान आकाशमें वे पक्षिपंक्तियाँ देखनेमें आती हैं, एवं श्रेणीबद्ध होकर आकाशमें विचरण करनेवाले वे पक्षीगण, ऐरावतद्वारा उन्मूलित हो पतनशील आकाशगङ्गासे उत्पन्न पद्मलताओंका भ्रम उत्पन्न कर रहे हैं, अपने हरिद्वर्ण देहकान्तिसे प्रकाशित, सूर्यके रथमें नियुक्त घोड़ोंके प्रभाद्वारा पक्षीगण आकाशको अधिक रञ्जितकर रहे हैं, एवं गमनशील मरकतभूमिका अनुकरण कर रहे हैं, तथा आकाशरूपी सरोवरमें शैवाल ( सेंवार ) पल्लवश्रेणीको विस्तारित कर रहे हैं, कदली ( केला ) पत्रके समान आकाशमें विस्तृत पक्ष

१ तस्मिन् वनस्पतावतिवाह्य। २ निशाम्। ३ आत्मनो नीडेषु। ४ बलभद्रहलमुखाक्षेप। ५ विप्रकीर्ण। ६ उत्पादयन्तः। ७ अनुलिप्तगगनतलम्। ८ प्रदर्शयन्तः। ९ गगनावततैः। १० 'खर' इति पाठः क्वापि नास्ति। ११ परिखेदिताशामुखानि। १२ परिवीजयन्तः।

वियति विसारिणीं शष्पवीथीमिवारचयन्तः, सेन्द्रायुधमिवान्तरिक्षमादधाना विचरन्ति स्म शुकशकुनयः।

कृताहाराश्च पुनः प्रतिनिवृत्त्यात्मकुलायावस्थितेभ्यः शावकेभ्यो विविधान् फलरसान् कलममञ्जरी-विकारांश्च प्रहत-हरिण-रुधिरानुरक्त-शार्दूलनखकोटिपाटलेन चञ्चुपुटेन दत्त्वा अधरीकृत-सर्वस्नेहेनासाधारणेन गुरुणापत्यप्रेम्णा तस्मिन्नेव क्रोडान्तर्निहिततनयाः क्षपाः क्षपयन्ति स्म।

एकस्मिंश्च जीर्णकोटरे जायया सह निवसतः पश्चिमे वयसि वर्त्तमानस्य कथमपि पितुरहमेवैको विधिवशात् सूनुरभवम्। अतिप्रबलया चाभिभूता ममैव जायमानस्य प्रसववेदनया

---

वियतीति। वियति अम्बरे विसारिणीं विस्तारिणीं शष्पवीथीम् अभिनवतृणपङ्क्तिम् आरचयन्तः निर्माणं कुर्वन्त इव तृणपङ्क्तिवत् निजपङ्क्तेरपि श्यामरूपत्वाद्विस्तृतत्वाच्चेत्याशयः। इह आरचयन्त इवेति क्रियोत्प्रेक्षा।

सेन्द्रेति। अन्तरिक्षम् अम्बरं सेन्द्रायुधं शक्रधनुषा सह विद्यमानमिव 'इन्द्रायुधं शक्रधनुः' इत्यमरः, आदधानाः कुर्वाणाः, निजपंक्तया विविधरूपत्वादित्याशयः। इह सेन्द्रायुधमिति गुणोत्प्रेक्षा।

कृताहारा इति। कृतो विहित आहारो भोजनं यैस्ते तथोक्ताः, पुनः स्वभोजनानन्तरं भूयः प्रतिनिवृत्य परावृत्य, आत्मीया निजा ये कुलाया नीडानि 'कुलायो नीडमस्त्रियाम्' इत्यमरः, तत्र अवस्थितेभ्यः निवसितेभ्यः शावकेभ्यः शिशुभ्यः 'पृथुकः शावकः शिशुः' इत्यमरः, विविधान् अनेकप्रकारान् फलरसान् सस्यनिर्यासान्, कलमानां धान्यविशेषाणां मञ्जर्यो वल्लर्यस्तासां विकाराः परिपाकविशेषेण परिपक्वाः कणाः तांश्च, प्रहतस्य विनाशितस्य हरिणस्य कुरङ्गस्य रुधिरं शोणितं तेन अनुरक्ता रक्तवर्णीकृता या शार्दूलनखकोटिः व्याघ्रनखाग्रप्रदेशः तद्वत् पाटलेन श्वेतरक्तेन 'श्वेतरक्तस्तु पाटलः' इत्यमरः। इह लुप्तोपमा। चञ्चुपुटेन पक्षाङ्गुलसम्पुटेन 'चञ्चुः पक्षाङ्गुले त्रोट्याम्' इति हैमः, दत्त्वा दत्त्वा मुहुर्मुहुः तेभ्य आहारदानं वितीर्येत्यर्थः। अधरीकृतः निम्नत्वमापादितः सर्वः स्नेहः सन्तानभिन्नवृत्तिसमस्तप्रेम येन तेन तादृशेन, अत एव असाधारणेन तन्मात्रगतेन गुरुणा महता अपत्यप्रेम्णा सन्तानस्नेहेन, तस्मिन्नेव शाल्मलीतरावेव क्रोडानाम् उत्सङ्गानाम् अन्तर्निहिता मध्येषु रक्षिताः तनया अपत्यानि यैस्ते तथोक्ताः शुकशकुनयः क्षपाः त्रियामाः 'त्रियामा क्षणदा क्षपा' इत्यमरः, क्षपयन्ति स्म अतिवाहयन्ति स्म। इह वात्सल्यो रसः।

एकस्मिन्निति। जीर्णकोटरे दीर्घकालीननिष्कुहे जायया भार्यया निवसतः वासं कुर्वतः पश्चिमे अन्तिमे वयसि अवस्थायां वार्धक्य इत्यर्थः, वर्त्तमानस्य विद्यमानस्य कथमपि महता क्लेशेन पितुर्जनकस्य विधिवशात् दैवसंयोगात् अहमित्यात्मनिर्देशः एक एव नान्यः सुनुः तनयः 'आत्मजस्तनयः सुनुः' इत्यमरः, अभवन् अजनिषम्।

अतिप्रबलेति। मम जायमानस्यैव उत्पद्यमानस्यैव अतिप्रबलया अतिकठिनया प्रसववेदनया प्रसूतिपीडया अभिभूता आक्रान्ता सती मे मम जननी माता परलोकं लोकान्तरम् अगमत् अव्रजत्।

---

पुटद्वारा, सूर्यके प्रखर-किरणसमूहसे सन्तापित समस्त दिशाओंके मुखमें वायुसञ्चालित कर रहे हैं, आकाशमें विस्तृत अभिनव तृणपङ्क्तिको निर्माण कर रहे हैं, एवं आकाशको इन्द्रधनुषसे युककर चल रहे हैं।

वे पक्षिगण स्वयं भोजन करनेके बाद अपने स्थानपर आकर मारे हुए हरिणके रुधिरसे रञ्जित व्याघ्रनखाग्रके समान श्वेतरक्तवर्ण चञ्चुपुटद्वारा, अपने अपने नीड़ में अवस्थित बच्चोंको नानाविध फलरस एवं कलमधान्यके तण्डुल समर्पण कर, अन्यान्य समस्त स्नेहके अपेक्षा प्रबल एवं अतुलनीय गुरुतर सन्तानस्नेहवशसे उनको अपने गोदमें रखकर उसी शाल्मली वृक्षके ऊपर रात्रिका समय व्यतीत करते हैं।

मेरे वृद्ध पिता किसी एक जीर्णकोटरमें स्त्रीसहित वास कर रहे थे, अदृष्टवशसे अत्यन्तकष्टपूर्वक मैं ही उनका एकमात्र पुत्र उत्पन्न हुआ, मेरे जन्म समयमें ही अत्यन्त प्रसववेदनासे आक्रान्त होकर मेरी माता परलोकगमन

---

१ विस्तारिणीं। २ 'विचरन्ति स्म' एतावानेव क्वापि पाठ उपलभ्यते। ३ कलमफलविकारान्। ४ प्रसक्त। ५ दृत्वा दृत्वा। ६ स्वस्मिन्नेव। ७ 'सुखम्' इत्यधिकः पाठः क्वापि। ८ 'तत्र' इत्यधिकः पाठः क्वापि। ९ अहमेकः। १० प्रबलया।

जननी मे लोका[1]न्तरमगमत्। अभिमतजायाविनाशद्दुः[2]खितोऽपि खलु तातः सुतस्नेहादन्त[3]र्निगृह्य पटुप्रसरमपि शोकमे[4]काकी मत्संवर्धनपर एवाभवत्। अतिपरिणतवया[5]श्च कुशचीरानुकारिणीमल्पावशिष्ट जीर्ण-पिच्छजाल-जर्जरा[6]म् अवस्रस्तांशदे[7]शशिथिलाम् अपगतोत्पतनसंस्कारां पक्षस[8]न्ततिम् उद्वहन्, उपारूढकम्पतया [9]सन्तापकारिणीमङ्गलग्नां जरामिव विधुन्वन्, अकठोर-शेफालिकाकुसुम-नालं[10]-पिञ्जरेण कलममञ्जरी-दलन-मसृणित-क्षीणोपान्त[11]लेखेन स्फुटिताग्रकोटिना चञ्चुपुटेन, परनीडनिप[12]तिताभ्यः शालिवल्लरीभ्यस्तण्डुलकणानादायादाय त[13]रु-मूलनिपतितानि च शुककुलावदलितानि फलशकलानि समाहृत्य परिभ्रमितुमशक्तो मह्यम[14]दात्। प्रतिदिवसमात्मना च मदुपभु[15]क्तशेषम् अकरोदशनम्।

अभीति। अभिमतायाः अभीष्टाया जायायाः पत्न्याः विनाशेन लोकान्तरगमनेन दुःखितोऽपि क्लेशितोऽपि खलु निश्चयेन, तातः जनकः सुतस्नेहात् पुत्रवात्सल्यात्, पटुप्रसरमपि स्पष्टवेगमपि शोकं क्लेशम् अन्तर्निगृह्य हृदयमध्य एव निरुध्य मत्सम्वर्धनपर एव मम परिपोषणतत्पर एव अभवत् आसीत्।

अतिपरिणतेति। अतिपरिणतम् अत्यन्तपरिपक्वम् अतिवृद्धमित्यर्थः वयोऽवस्था यस्य स तादृशः, कुशो बर्हिः चीरं जीर्णवसनखण्डं तदनुकरोति तत्सामान्यमाश्रयति या सा तां तादृशीम्। अत्रार्थी उपमा। अल्पं वार्धक्येन निःसरणात् स्तोकमात्रम् अवशिष्टम् ऊर्वरितं यत् जीर्णपिच्छजालं पुरातनबर्हसमुदायः तेन जर्जरां विशीर्णाम्। अवस्रस्ते परिणतत्वात् गलिते अंसदेशे स्कन्धस्थाने शिथिलाम् अस्थिरावयवसम्बन्धाम्। अपगतो दूरीभूत उत्पतने आकाशविहरणे संस्कारः सामर्थ्यविशेषो यस्याः सा तां तथोक्ताम्, एतादृशीं पक्षसन्ततिं पतत्रसमुदायम् उद्वहन् धारयन्।

उपारूढेति। उपारूढः परिणतवयस्कत्वेन स्वभावत एवाविर्भूतः कम्पः शरीरसञ्चलनं यत्र सा तादृशी तस्या भावस्तया, सन्तापकारिणीं दुःखदायिनीम् स्वेच्छया सञ्चालयितुमसमर्थत्वादित्याशय; अङ्गलग्नां शरीरे विद्यमानां जरां परिणतावस्थामिव विधुन्वन् तामेव पक्षधारां कम्पयन् सञ्चालनं विधाय किञ्चिद्व्रजन्नित्यर्थः। इह जरामिवेत्युत्प्रेक्षा।

अकठोरेति। अकठोरं मृदुलं यच्छेफालिकाकुसुमं निर्गुण्डीपुष्पं तस्य यत् नालं वृन्तं तद्वत्पिञ्जरेण पिङ्गलवर्णेन, अत्र लुप्तोपमा। कलमस्य तदाख्यधान्यविशेषस्य या मञ्जर्यः शिखाः तासां दलनेन विदारणेन मसृणिता कृतचिक्कणा क्षीणा क्षयं प्राप्ता च उपान्तलेखा प्रान्तसमीपस्थायिनी रेखा यस्य स तेन तादृशेन। तथा चञ्चुपुटेन पक्षाङ्कुलेन परिश्रमात् स्फुटिता क्षयं प्राप्ता अग्रकोटिः अग्रिमप्रखरदेशो यस्य तेन तादृशेन।

परेति। परेषाम् अन्येषां शकुनीनां नीडानि कुलायाः तेभ्यः निपतिताः स्रस्ताः याः शालिवल्ल्यः धान्यमञ्जर्यः ताभ्यः तथोक्ताभ्यः तण्डुलकणान् आदायादाय गृहीत्वा गृहीत्वा वृक्षमूलनिपतितानि तरुमूलच्युतानि शुकानां कीराणां कुलेन समूहेन अवदलितानि विदार्य भूमौ पातितानि फलशकलानि फलखण्डानि

कर गयी। उस समय मेरे पिता, अभिमत पत्नीके मरणसे अत्यन्त दुःखित हो पुत्रस्नेहवशसे उस दारुण शोकको हृदयमध्यमें रोक कर अकेले मेरे परिपोषणमें ही यत्नवान् हुए। मेरे अत्यन्त वृद्ध पिताजीका पक्षद्वय, कुशनिर्मित जीर्णवस्त्रके समान जीर्ण हो गया था, सभी लोम जीर्ण एवं अल्पमात्र अवशिष्ट रहनेके कारण पक्षद्वय विशीर्ण हो गया था। एवं अवनत स्कन्धदेशमें शिथिलता आ गयी थी, जिससे उड़नेका सामर्थ्य नहीं रह गया तथापि वे स्वभावतः कम्प उत्पन्न होनेसे क्लेशदायक देहलग्न वृद्धावस्थाके समान उस पक्षयुगलको सञ्चालन कर गमनागमन किया करते थे। उनका चञ्चुपुट, कोमल शेफालिका (सिंगरहार) पुष्पके वृन्तके समान पिङ्गलवर्ण हो गया था, और धान्यमञ्जरीको खण्डकरनेसे उस चञ्चुपुटका शेषभाग रेखायुक्त, चिकण (पालिस) और क्षीण हो गया था, तथा उसके अग्रका तीक्ष्णभाग भी क्षयप्राप्त हो गया था। वे अन्यत्र भ्रमण करनेमें असमर्थ हो उसी चञ्चुपुटद्वारा अन्यपक्षीके आवासमें गिरे हुए धान्यमञ्जरीसे तण्डुलकणोंको लेकर, एवं अन्यपक्षीगणद्वारा खण्डनकर जिन्हें वृक्षमूलमें फेंक दिया गया था, उन समस्त फलखण्डोंको लाकर मुझे भोजन करनेके लिये देते थे, और प्रतिदिन मेरे भोजन करनेसे जो बच जाता था उससे अपना भोजन करते थे।

१ परलोकमगच्छत्। २...शोकदुःखितोऽपि, दुःखदुःखितोऽपि। ३ अभ्यन्तरे निरुध्य। ४ शोकवेगम्। ५ अतिपरिणततया च। ६ जर्जरीम्। ७ स्रस्तांसदेशाम्। ८ पक्षसंहतिम्। ९ इह 'च' इत्यधिकः पाठः क्वापि। १० कुसुमपिञ्जरेण। ११ क्षीरोपान्तलेखेन। १२...पतिताभ्यः। १३ वृक्ष…। १४ मह्यमाहारमदात्। १५ मदुपयुक्तशेषम्।

एकदा तु प्रभातसन्ध्यारागलोहिते गगने च कमलिनी-मधुरक्त-पक्षसम्पुटे वृद्धहंस इव मन्दाकिनीपुलिनादपर-जलनिधि-तटमवतरति चन्द्रमसि, परिणत-रङ्कु-रोम-पाण्डुनि व्रजति विशालतामाशाचक्रवाले, गजरुधिर-रक्त-हरिसटा-लोहिनीभिः प्रतप्त-लाक्षिक-तन्तु पाटलाभिरायामिनीभिः अशिशिरकिरणदीधितिभिः पद्मरागशलाकासम्मार्जनीभिरिव समुत्सार्यमाणे गगनकुट्टिमकुसुमप्रकरे तारागणे, सन्ध्यामुपासितुमुत्तराशावलम्बिनि मानससरस्तीर-

समाहृत्य एकीकृत्य परिभ्रमितुं दूरे सञ्चरितुम् अशक्तोऽसमर्थो मह्यं वैशम्पायनाय अदात् भक्षयितुं दत्तवान्। एवं प्रतिदिवसं प्रत्यहमुक्तविधिना, आत्मना स्वयञ्च। मया उपभुक्तस्य भक्षितस्य भक्षितस्य शेषम् अवशिष्टम् अशनं भोजनम् अकरोत् कृतवानासीत्।

एकदेति। एकदा एकस्मिन् काले स्फुटतया जाते प्रत्यूषसि मृगया कोलाहलध्वनिः उदचरदिति वक्ष्यमाणेन दूरेणान्वयः। प्रभातस्य प्रत्यूषस्य या सन्ध्या तत्सम्बन्धी यो रागो रक्तिमा तेन लोहिते रक्तवर्णे, विशेषणमिदं गगने चन्द्रमसि च, तदानीमुभयोरपि तथैव सम्भवात्। अत एव च गगने चेत्यत्र चकारोपादानं सार्थकमित्यवधेयम्। अत एव कमलिन्याः नलिन्याः मधुना लोहितवर्णपुष्परसेन अनुरक्तम् अनुरञ्जितं पक्षसम्पुटं पतत्रयुगलं यस्य तस्मिन्, वृद्धहंस इव पुरातनकलहंस इव, अलसगतिव्यञ्जनाय वृद्धपदम्। चन्द्रमसि हिमांशौ मन्दाकिनीपुलिनात् वियद्गङ्गासैकतात् अपरः पश्चिमो यो जलनिधिः समुद्रः तस्य तटं तीरम् अवतरति उत्तीर्णे सति। इह वृद्धहंस इवेत्युपमा।

परिणतेति। परिणतस्य पुरातनस्य रङ्कोर्मृगविशेषस्य रोमाणि लोमानि तद्वत् पाण्डुनि पीतशुभ्रे 'पाण्डुस्तु पीतभागार्धः केतकी धूलिसन्निभः' इति शब्दार्णवः। आशाचक्रवाले दिङ्मण्डले 'दिशस्तु ककुभः काष्ठा आशाश्च हरिताश्च ताः' 'चक्रवालं तु मण्डलम्' इत्यमरः, विशालताम् अन्धकारापगमाद्विस्तीर्णतां व्रजति गच्छति सति। अत्र लुप्तोपमा।

गजेति। गजानां हस्तिनां यद्रुधिरं शोणितं तेन रक्ता लोहितवर्णा या हरिसटाः सिंहस्कन्धकेसराः तद्वत् लोहिनीभिः रक्तवर्णाभिः, इह रुधिररक्तपदार्थयोरापाततः पौनरुक्त्येऽपि दर्शितदिशा पार्थक्यस्य स्पष्टमुपलम्भात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासोऽलङ्कारः तदुक्तं दर्पणे—

'आपाततो यदर्थस्य पौनरुक्त्येन भासनम्। पुनरुक्तवदाभासः स भिन्नाकारशब्दगः॥' इति।

हरिसटावदिति लुप्तोपमा चेत्यनयोरङ्गाङ्गिभावेन सङ्करालङ्कारः। प्रतप्ता उष्णीकृता ये लाक्षिका जतुविकारोत्पन्नाः तन्तवः सूत्राणि तद्वत् पाटलाभिः श्वेतरक्ताभिः। अत्र लुप्तोपमालङ्कारः। आयामिनीभिः विस्तारवतीभिः, अशिशिरा उष्णाः किरणा रश्मयो यस्य तस्य सूर्यस्य दीधितिभिः प्रभाभिः, पद्मरागस्य लोहितकमणेः याः शलाकाः इषीकाः तासां सम्मार्जनीभिः गृहादिशोधिनीभिः 'सम्मार्जनी शोधिनी स्यात्' इत्यमरः, ताभिरिव विद्यमानाभिः, अत्र जात्युत्प्रेक्षा। गगनम् आकाशमेव कुट्टिमं बद्धभूमिः (बहिर्द्वारं) तस्य कुसुमप्रकरः पुष्पसमुदायः तस्मिन् तारागणे नक्षत्रमण्डले समुत्सार्यमाणे दूरीक्रियमाणे सति। इह नक्षत्र मण्डले कुसुमप्रकरस्यारोपस्य गगने कुट्टिमत्वारोपो निमित्तमिति परम्परितरूपकमलङ्कारः, तदुक्तं दर्पणे—यत्र कस्यचिदारोपः परारोपस्य कारणम्। तत्परम्परितम्………… ॥

सन्ध्यामिति। उत्तराशा उदीचीदिक् तदवलम्बिनि तदवस्थिते सप्तर्षिमण्डले ताराभूते मरीच्यादिसप्तदेवर्षिसमूहे सन्ध्यां प्रातः सन्ध्याम् उपासितुं विधातुमिव मानससरस्तीरं मानससरोवरतटं प्रति

एक दिन प्रातः कालमें शिकारका कोलाहल ध्वनि उत्पन्न हुआ। उस समयमें गगनतल और चन्द्रमण्डल सन्ध्यारागसे रक्तवर्ण हो गया था, कमलरसरञ्जित-पक्षशाली वृद्ध कलहंसके समान चन्द्र, आकाशगङ्गाके सैकतमय किनारे से पश्चिम समुद्रके तीरमें अवतीर्ण हो गये थे, वाद; वृद्ध रङ्कुमृगके लोमके समान पाण्डुवर्ण दिङ्मण्डल अन्धकारके हट जानेसे विस्तृत होने लगा, हाथीके रक्तसे रञ्जित सिंहके जटाके समान लोहितवर्ण अथवा उत्तप्त लाक्षासूत्रके समान श्वेतरक्तवर्ण सूर्यका किरण, पद्मरागमणिके शलाकासे निर्मित सम्मार्जनी (झाडू) के समान आकाशरूप भूमिसे नक्षत्ररूप पुष्पसमूहको हटाने लगा, उत्तर भागमें अवस्थित सप्तर्षिमण्डल प्रातःसन्ध्या करनेके लिये ही जिस मानस सरोवरके तीरमें अवतरित होने लगे, पश्चिम समुद्रके तीरमें शुक्तिका पुटक उन्मीलित हो उसके मध्यमें

१ गगनतले, गगनतल...गगनकमलिनी। २ मधुरक्तपक्षपुटे। ३ आतप्तलाक्षिक, सन्तप्तलाक्ष, आनन्तलाक्षा...। ४ आगामिनीभिः। ५ रत्नशलाकासंमार्जिनीभिः। ६ मानससरसः।

मिवावितरति सप्तर्षिमण्डले, तटगत-विघटित-शुक्ति-सम्पुटविप्रकीर्णमरुणकर-प्रेरणाधोगलितमुडुगणमिव मुक्ताफलनिकरमुद्वहति धवलितपुलिनमुदन्वति पूर्वेतरे, तुषारबिन्दुवर्षिणि विबुद्धशिखिकुले विजृम्भमाणकेशरिणि करिणी-कदम्बक-प्रबोध्यमान-समदकरिणि क्षपाजलजडकेसरं कुसुमनिकरमुदयगिरि शिखरस्थितं सवितारमिवोद्दिश्य पल्लवाञ्जलिभिः समुत्सृजति कानने, रासभ-रोम-धूसरासु वनदेवताप्रासादानां तरूणां शिखरेषु पारावतमालायमानासु धर्म्मपताकास्विव समुन्मिषन्तीषु तपोवनाग्निहोत्रधूमलेखासु, अवश्यायशीकरिणि

अवतरति अवरोहति सति तत्समये सप्तर्षिगणस्य उदीच्यामस्तगमनादेवमभिधानम् । इह च सन्ध्यामुपासितुमिवेति क्रियोत्प्रेक्षा । सप्तर्षिपदवाच्याश्च—

'मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः ॥' इति ।

तटगतेति । पूर्वं इतरो यस्मात् तस्मिन् पश्चिमे इत्यर्थः । उदन्वति समुद्रे 'इतरस्त्वन्यनीचयोः' इत्यमरः, बहुव्रीहिसमासत्वादेव नात्र सर्वादित्वप्रयुक्तकार्यमित्यवधेयम् । तटगतानि तीरस्थितानि विघट्टितानि स्फुटितानि यानि विस्तारितभागद्वयानि तत्र शुक्तिसम्पुटेषु समुद्रमण्डूकीपुटेषु मध्ये विकीर्णम् असंयोगभावेनावस्थितम्, धवलितं निजकान्त्या श्वेतीकृतं पुलिनं सैकतं येन तं तथोक्तम्, अरुणकरैः दिनकरकिरणैः या प्रेरणा नोदना तया अधोगलितं भूमिपतितम् उडुगणं नक्षत्रमण्डलमिव मुक्ताफलनिकरं मौक्तिकसमूहम् उद्वहति धारणं कुर्वति सति । अत्र उडुगणमिवेति जातिस्वरूपोत्प्रेक्षा ।

तुषारेति । अत्र काननविशेषणानि सप्तम्यन्तपदानि । तुषारस्य रात्रिपतिततुहिनस्य बिन्दवः कणाः तान् वर्षति दलाग्रभागेभ्यः पातयतीति तस्मिन् तथोक्ते, विबुद्धं जागरितं शिखिकुलं मयूरगणो यत्र तस्मिन् तथोक्ते, विजृम्भमाणा तत्क्षणनिद्रात्यागेन जृम्भाविधायिनः केशरिणः सिंहा यत्र तस्मिन् तादृशे, करिणीनां हस्तिनीनां कदम्बकं समूहः तेन प्रबोध्यमाना स्वच्छन्दक्रीडार्थं शुण्डाकर्षणेन जागरणं कुर्वाणाः समदा दानजलस्यन्दिनः करिणो गजा यस्मिन् तस्मिन् तादृशे, एतादृशे कानने वने 'काननं गहनं वनम्' इत्यमरः, क्षपायाः रात्रेः जलेन तत्सम्बन्धितुषारसलिलेन जडाः स्तिमिताः केशराः किञ्जल्काः यस्य तं तथोक्तं कुसुमनिकरं स्वोत्पन्नपुष्पसमूहम्, उदयगिरिः उदयाचलः तस्य शिखरे शृङ्गे स्थितं विद्यमानं सवितारं सूर्यम् उद्दिश्येव उद्देश्यं कृत्वेव पल्लवानि किसलयान्येव अञ्जलयः तैः समुत्सृजति प्रक्षिप्य समर्पयति सति । इह उद्दिश्येवेति क्रियोत्प्रेक्षा, 'पल्लवाञ्जलय' इत्यत्र निरङ्गकेवलरूपकम्, तथा समासोक्तिश्चेति परस्परमेषामङ्गाङ्गिभावेन सङ्करात् सङ्करालङ्कारः ।

रासभेति । रासभस्य गर्दभस्य रोमाणि लोमानि तद्वत् धूसरासु धूम्ररूपासु । वनदेवतानाम् अरण्याधिष्ठात्रीणां प्रासादा उन्नतत्वाद्विपुलत्वाच्च अट्टालिकारूपाः तरवो वृक्षाः तेषां शिखरेषु अग्रप्रान्तेषु पारावतानां कपोतानां माला पंक्तिः तद्वत् आचरन्तीषु संलग्नास्विति तासु तथोक्तासु, तपोवनेषु मुन्याश्रमेषु यानि अग्निहोत्राणि 'सायं प्रातर्जुहोति' इति श्रुत्या तपस्विनाम् अग्न्याधानानि अग्निहोत्रहोमाः इत्यर्थः तेषां धूमलेखासु धूमपंक्तिषु, धर्मपताकास्विव यज्ञादौ धर्मोद्घोषणाय वैजयन्तीष्विव समुन्मिषन्तीषु समुल्लसन्तीषु । इह रासभरोमधूसरास्वित्यत्र लुप्तोपमा पारावतमालायमानास्वित्यत्र च व्यङ्ग्योपमा, धर्मपताकास्विवेत्यत्र जातिस्वरूपोत्प्रेक्षा चेति परस्परमेषामङ्गाङ्गिभावेन सङ्करात् सङ्करालङ्कारः ।

अवश्यायेति । अवश्यायः तुषारः 'अवश्यायस्तु नीहारः तुषारः' इत्यमरः, तस्य शीकरोऽम्बुकणाः ते

रहनेवाला मुक्तासमूह अपने किरणोंसे पुलिन देशको श्वेतवर्ण कर प्रकाशित हो शोभ करने लगा कि-मानो जिस प्रकार सूर्यरश्मियोंको छोड़नेके लिए नक्षत्रपुञ्ज पृथिवीमें गिर रहे हों, वनमध्यमें वृक्षके पत्तोंसे शिशिरबिन्दु गिरने लगे, मयूरगण जग गये, सिंहगण जाग कर जृम्भा (हाफी) करने लगे, हस्तिनीगण मदस्रावी हाथियोंको जगाने लगीं, नानाविध वृक्षगण पल्लवरूप अञ्जलिद्वारा उदयाचलके ऊपर भागमें अवस्थित सूर्यको मानो लक्षित कर रातके शिशिरजलसे सिक्त स्वकीय कुसुमसमूह निक्षेप करने लगे, गदहेके लोमके समान धूसरवर्ण तपोवनस्थ अग्निहोत्र यज्ञके धूमसमूह वनदेवतागणके अट्टालिकास्वरूप उच्च वृक्षसमूहके ऊपर भागमें कपोतगणके समान संलग्न होकर धर्मपताकाके समान ऊपर उत्थित होने लगा, शिशिरबिन्दु वहन कर, कमलवन कम्पित कर, परिश्रान्त

१ अम्बरादवतरति । २ ... पुलिनतटम्, पुलिनतलम् । ३ ... मानमदकरिणि स्पष्टे च जाते प्रभाते । ४ स्थितसवितारम् । ५ उत्सृजति । ६ धूसरासु वनराजिषु । ७ पताकासु ।

यदहमविकलेन्द्रियः पुनरेव प्राणिमि। धिङ्मामकरुणमतिनिष्ठुरमकृतज्ञम्। अहो! [1]सोढ-पितृमर[2]णशोकदारुणं येन मया जीव्यते, उपकृतमपि नापे[3]क्ष्यते। खलं हि खलु मे हृदयम्। अहं[4] हि लोकान्तरमु[5]पगतायामम्बायां नियम्य शोका[6]वेगमाप्रसव-दिवसात् परिणतवयसापि सता ता[7]तेन तैस्तैरुपायैः संवर्द्धनक्लेशमतिमहान्तमपि स्नेहवशादगणयता यत् परिपालितः, तत्सर्वमेकपदे विस्मृतम्। अतिकृपणाः खल्वमी प्रा[8]णाः, यदुपकारिणमपि तातमत्याति[9]-गच्छन्तं नानुगच्छन्ति। सर्वथा[10] न कञ्चित् न खलीकरोति जीवित-तृष्णा, यदीदृशावस्थं[11]-

---

गृहीतनामा स्यात् यः प्रातरनुचिन्त्यते' इति त्रिकाण्डशेषः, ताते जनके एवम् उक्तविधिना उपरतेऽपि मृतेऽपि चाण्डालस्य किरातस्य प्रक्षेपेणापमृत्युं प्राप्तेऽपीत्यर्थः, अहम् अविकलेन्द्रियः विषयग्रहणे यथास्थित-समर्थेन्द्रियः पुनरेव साम्प्रतमपि प्राणिमि श्वसिमि जीवनायाभिलषामीत्यर्थः, अतः अकरुणं निर्दयं तथावि-धेऽपि समये तातं परित्यज्य स्वप्राणरिरक्षयिषया निःसरणादित्याशयः। अतिनिष्ठुरम् अतिक्रूरं निष्करुणत्वा-दित्याशयः। अकृतज्ञं कृतम् अनेन ममैतादृशमुपकारं विहितमिति न जानाति यः स तं तादृशम्, तद्विहितो-पकाराचिन्तनादिति भावः। मां वैशम्पायनं धिक् धिक्कारः 'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु' इति धिग्योगे मामित्यत्र द्वितीया। अहो आश्चर्यम्। येन मया वैशम्पायनेन, सोढेन असाधारणदुःखमनु-भूतेन पितृमरणशोकेन तातमरणविषादेन दारुणं भयङ्करं यथा स्यात्तथा जीव्यते जीवनानि धार्यन्ते, उपकृतमपि तातविहितोपकारोऽपि नापेक्ष्यते स्मृतिपथे नानीयते अतश्चापि मां धिगित्यन्वयः।

अहमिति। हि निश्चयेन 'हि पादपूरणे हेतौ विशेषेऽप्यवधारणे' इति मेदिनी। मे मम हृदयं मनः खलम् अधमम् उपकाराज्ञत्वादित्याशयः। 'खलः कल्के भुवि स्थाने क्रूरे कर्णे जपेऽधमे' इति हैममेदिन्यौ। हि यस्मात् कारणात् लोकान्तरं परलोकम् उपगतायां प्राप्तायाम् अम्बायां जनन्यां शोकावेगं विषादप्रवाहं नियम्य अन्तर्निरुध्य, आप्रसवदिवसात् मज्जन्मदिनादवधि, परिणतवयसापि वृद्धावस्थेनापि अत एव समस्तकर्मायोग्येनेत्याशयः, एतादृशेनापि सता तैस्तैरुपायैः प्राग्दर्शितैः क्षीरभुक्तशेषभक्ष्यसंयोजनादिभिः संवर्द्धनक्लेशं मत्परिपालनदुःखम् अगणयता तद्गणनामविदधता तातेन पित्रा अहं यत्परिपालितः परिपोषितः, एकपदे तत्काले 'एकपदं तत्काले नपुंसकं, वर्त्मनि स्त्री स्यात्' इति रामाश्रमीटीका, 'तत्क्षणैकपदं तुल्ये' इति हलायुधश्च, तत्सर्वं विस्मृतं मानसपथान्निःसारितं मयेति शेषः, तस्य प्रतीकारा-विधानादनुव्रजनाभावाच्चेत्याशयः।

अतीति। अमी एते मे प्राणा असवः अतिकृपणाः खलु अत्यन्ततुच्छा एव, यत् यस्माद्धेतोः उपकारि-णमपि तातम् उपकृतिविधायिनमपि पितरम् अद्य अस्मिन्नहनि अतिगच्छन्तं मामतिक्रम्य व्रजन्तं नानु-गच्छन्ति नानुव्रजन्ति। सर्वथा सर्वप्रकारेण जीविततृष्णा जीवनेच्छा कञ्चित् कमपि जनं न खलीकरोति नाधमीकरोति इति न, किन्तु सर्वमेव खलीकरोति सर्वमित्यर्थः। नञ्द्वयोपादानेन प्रकृतमर्थं दृढीकृतम्। अखलं खलं सम्पद्यमानं करोतीति खलीकरोति अभूततद्भावे च्विः। यत् यस्मात् कारणात् जलाभिलाषः

---

इस प्रकारका मृत्युमुखमें पतित होने पर भी मैं स्वस्थचित्त होकर फिर भी जीने की इच्छा करता हूँ। क्या आश्चर्य ? मैं पितृमरणशोक सहकर भयङ्कररूपसे जीवन धारण करता हूँ, उनके उपकारको भी स्मरण नहीं करता हूँ, निश्चय मैं निर्दयी, अतिनिष्ठुर और अकृतज्ञ हूँ अत एव मुझे धिक्कार है। मेरा हृदय निश्चय ही नीचाशय है; जिस कारण, मेरी माता परलोक गमन की, उस शोकवेगको हृदयमध्यमें अवरुद्ध कर मेरे पिता अतिप्राचीन होने पर भी स्नेहवशसे उस जन्मदिनसे लेकर अनेकविध दारुण परिपालनक्लेशको तुच्छ मनमें समझ कर उन उन उपायोंसे मुझे जो परिपालन किये थे, उन सबोंको सहसा तुरत विस्मृत कर गया हूँ। मेरा प्राण भी अत्यन्त नीचाशय है; कारण—पिताजी इतने उपकार कर आज मुझे छोड़ कर चले गये, किन्तु प्राण उनका अनुगमन नहीं कर रहा है। जीवनकी अभिलाषा प्राणीवर्गको सर्वप्रकारका नीचाशय कर देती है; जिस कारण

---

१ अकृतज्ञं विसोढपितृ…। २ मरणम्। ३ नापेक्षते। ४ मया। ५ लोकान्तरगतायाम्। ६ शोकवेग। ७ 'तातेन' इति क्वचिन्नास्ति। ८ मे प्राणाः, मम प्राणाः। ९ तातं क्वापि गच्छन्तम-थापि, मध्य क्वापि…यान्तम्। १० सर्वथा कञ्चिन्न, सर्वथा न कञ्चन। ११ ईदृगवस्थं।

मपि मामायासयति जलाभिलाषः। मन्ये चागणित-पितृमरण-शोकस्य निर्घृणतैवं केवल-मियं मम सलिलपानबुद्धिः। अद्यापि दूरत एव सरः। तथाहि जलदेवतानूपुर-रवानुकारि दूरेऽद्यापि कलहंस-विरुतमेतत्, अस्फुटानि श्रूयन्ते सारसरसितानि, अयञ्च विप्रकर्षादा-शामुख-विसर्पण-विरलः सञ्चरति नलिनी-षण्डपरिमलः। दिवसस्येयमतिकष्टा च दशा वर्त्तते। तथाहि रविरम्बरतलमध्यवर्त्ती स्फुरन्तमातपमनवरतमनल-धूलि-निकरमिव विकि-रति करैः, अधिकामुपजनयति तृषम्। आतप-सन्तप्त पांसु-पटल-दुर्गमा भूमिः, अतिप्र-बल-पिपासावसन्नानि गन्तुमल्पमपि मे नालमङ्गकानि, अप्रभुरस्म्यात्मनः सीदति मे हृदयम्,

---

जलपानेच्छा, ईदृशावस्थमपि अत्यन्तविषादव्यग्रमपि माम् आयासयति जलपानविधानाय सम्प्रेष्य क्लेशं जनयति। एवञ्च जीवनाभिलाषयैव इयं जलाभिलाषा, सा यदि जीवनाभिलाषा नाभविष्यत्तदा यदा जलतृष्णा सञ्जाता तदैव मृतः सन् तातमनुव्रजिष्यमिति नूनं जीवनाभिलाषैव सम्प्रति मां दुःखमुत्पादय-तीत्याशयः। इह जीवितृष्णेति विशेषेण आयासासादनसामान्यसमर्थनात् विशेषेण सामान्यसमर्थनरू-पोऽर्थान्तरन्यासः।

मन्य इति। मन्ये जाने च अगणितपितृमरणशोकस्य गणनातीततातमरणविषादस्य मम केवलम् इयं सलिलपानबुद्धिः जलाभिलाषा निर्घृणतैव निष्करुणतैव तत्प्रयुक्तैवेत्याशयः, अन्यथा अक्लिन्नकण्ठो निष्प्राणतातमनुव्रजेयमिति तात्पर्यम्।

इह निर्घृणताजलाभिलाषयोर्हेतुहेतुमतोस्तादात्म्येन प्रतिपादनात् हेत्वलङ्कारः। तथा हि दर्पणे—

'अभेदेनाभिधा हेतुर्हेतोर्हेतुमता सह' इति।

अद्यापीति। अद्यापि साम्प्रतमपीत्यर्थः, दूरत एव विप्रकर्षादेव सरस्तीरं सरोवरतटम्। तदेव निरू-पयति—तथाहीति। जलदेवतानां जलाधिष्ठात्रीणां देवीनां नूपुराणां पादाङ्गदानां 'पादाङ्गदं तुलाकोटिमञ्जीरो नूपुरे स्त्रियाम्' इत्यमरः, यो रवो ध्वनिः तदनुकर्त्तुं शीलं यस्य तत् तादृशम्, दूरे विप्रकर्षे अद्यापि इदानी-मपि एतत् श्रूयमाणम्, कलहंसानां कादम्बानां विरुतं कूजितम्। अस्फुटानि अव्यक्तानि सारसानां लक्ष्म-णानां रसितानि कूजितानि श्रूयन्ते आकर्ण्यन्ते। विप्रकर्षात् दूरात् आशामुखेषु दिगाननेषु नानादिक्षिव-त्यर्थः, विसर्पणेन प्रसरणेन विरलः स्वल्पः नलिनीषण्डानां कमलिनीवनानां परिमलः सौरभम्।

दिवस्येति। दिवसस्य दिनस्य इयं पुरो दृश्यमाना अतिकष्टा अत्यन्तं क्लेशदायिनी दशा अवस्था वर्त्तते अस्ति मध्याह्नसमय इत्यर्थः। एतदेव दर्शयति—तथाहीत्यादिना। अम्बरतलस्य आकाशस्य मध्यवर्त्ती मध्यगामी रविः सूर्यः, अनवरतम् अविच्छिन्नं स्फुरन्तं देदीप्यमानम् आतपं तेजः अनलधूल्यो वह्निकणिकाः तेषां निकरमिव समूहमिव करैः रश्मिभिः विकिरति क्षिपति। अत्रोपमालङ्कारः। अधिकाम् अत्यर्थां तृषां पिपासाम् उपजनयति सम्पादयति।

आतपेति। आतपेन रविरोजसा सन्तप्तैः उष्णैः पांसुपटलैः रजःसमूहैः दुर्गमा दुःखेन गन्तुं योग्या भूः मही। अतिप्रबलया अत्यधिकया पिपासया जलपानेच्छया अवसन्नानि खिन्नानि मे मम अङ्गकानि शरीरक्षुद्रावयवाः अल्पमपि किञ्चिदपि गन्तुं चलितुं नालं न समर्थानि। आत्मनः शरीरस्य अप्रभुः अस-मर्थं अस्मि भवामि स्वेच्छया सञ्चलनासमर्थोऽस्मीत्यर्थः। मे मम हृदयं सीदति सखेदं भवति। चक्षुर्नेत्रम्

---

मुझे ऐसे शोकसे अत्यन्त आकुल होने पर भी जलपानकी इच्छा कष्ट देती थी। मैं मनमें किया—पिताका मृत्युशोक ग्रहण नहीं करा कर यह निर्दयता उत्पन्न हुई है, केवल उसीसे मेरी यह जलपानकी अभिलाषा हुई है। अभी भी सरोवर दूर ही है, कारण—जलदेवताके चरणनूपुरके शब्दतुल्य ये कलहंसगणके शब्द अभी भी दूरसे सुनाई दे रहे हैं। सारस–पक्षीगणके शब्द भी अस्पष्ट सुनाई दे रहे हैं। इस कमलवनमें सौगन्ध्य भी दूर रहने के कारण, एवं चारों तरफ विस्तृत होकर क्रमशः अल्प अल्प होकर विद्यमान है। दिनकी भी यह अवस्था ( मध्याह्नवेला ) अत्यन्त कष्टकर होती है, कारण—सूर्य आकाशके मध्यवर्त्ती होकर किरणजालसे अविश्रान्त अग्निस्फुलिङ्गके समान प्रखर रौद्र विस्तार करते हैं, एवं प्राणियोंको अत्यन्त पिपासा उत्पन्न करते हैं। धूपकी गर्मीसे उत्तप्त धूलिसमूहद्वारा पृथिवी दुर्गम हो गयी है, अत्यन्त प्रबल पिपासासे मेरे समस्त अङ्ग अवसन्न हो गये हैं, अतः थोड़ा भी कोई चलने नहीं

---

१ मामावासयति, मामयमासयति, मामभिलाषयति। २ निर्घृणतयैव। ३ दूर एव सरस्तीरम्। ४ नूपुरानुकारि। ५ विरुतमेतम्। ६ एतानि चास्फुटानि। ७ 'अयञ्च' इति पाठ क्वचिन्नास्ति। ८ इयं कष्टा दशा, अतिकष्टा दशाः। ९ तृषाम्। १० आतपस्पर्शसन्तप्त...। ११ भूः। १२ अलमप्रभुर...।

अन्धकारतामुपयाति चक्षुः, अपि नाम खलो विधिरनिच्छतोऽपि मे मरणमद्यैव[1] उपपादयेत्।'

इत्येवं[2] चिन्तयत्येव मयि तस्मात् सरसो नातिदूरवर्त्तिनि[3] तपोवने जाबालिर्नाम महातपा मुनिः प्रतिवसति स्म[4]। तत्तनयश्च हारीतनामा मुनिकुमारकः[5] सनत्कुमार इव सर्वविद्यावदातचेताः, समानवयोभिः[6]रपरस्तपोधन-कुमारकै[7]रनुगम्यमानस्तेनैव पथा द्वितीय इव भगवान् विभावसुरतितेजस्वितया दुर्निरीक्ष्यमूर्त्तिः, उद्यतो दिवसकर-मण्डलादिवोत्कीर्णः तडिद्भिरिव विरचितावयवः[8], तप्त-कनक-द्रवेणेव बहिरुपलिप्त-मूर्त्तिः, आपिशङ्गावदातया[9]

---

अन्धकारतां तिमिरताम् उपयाति प्राप्नोति। अपिशब्दः प्रश्ने, नामशब्दः सम्भावनायाम्। तथा च—

"अपिः सम्भावनाप्रश्नशङ्कागर्हासमुच्चये। तथा युक्तपदार्थे च कामचारक्रियासु च॥" इति विश्वः।

"नाम कामे (कोपे)ऽभ्युपगमे विस्मये स्मरणेऽपि च। सम्भाव्यकुत्साप्राकाश्यविकल्पेष्वपि दृश्यते॥" इति मेदिनी। खलः अमङ्गलकरणाद्दुर्जनः 'पिशुनो दुर्जनः खलः' इत्यमरः, विधिः विधाता अनिच्छतोऽपि अनभिलषितोऽपि मे मम मरणं मृत्युम् उपपादयेत् विदधेत्।

इत्येवमिति। इत्येवं पूर्वोक्तविधिना मयि वैशम्पायने चिन्तयत्येव विचारयत्येव सति, तस्मात् पूर्वप्रतिपादितात् सरसः सरोवरात् अदूरवर्त्तिनि समीपस्थायिनि तपोवने तपस्विजनाधिष्ठितविपिने जाबालिर्नाम जाबालिसंज्ञकः महत् उग्रं तपो यस्य एतादृशो मुनिः तपोनिधिः प्रतिवसति स्म निवसति स्म।

तत्तनय इति। तस्य तपोनिधेः तनय आत्मजः 'आत्मजस्तनयः सूनुः' इत्यमरः, हारीत इति नाम अभिधेयं यस्य तादृशो मुनिकुमारकः तापसबालकः, तदेव कमलसरः सिस्नासुरुपागमत्' इत्यग्रेतनेन सम्बन्धः। तमेव सम्प्रति विशेषयति—सनत्कुमार इत्यादिना। सनतो ब्रह्मणः कुमार इति सनत्कुमारः प्रजापतेः पुत्र इत्यर्थः 'सनत्कुमारो वैधात्रः' यद्वा—सनत् सर्वस्मिन् समये कुमारः कौमारव्रतावलम्बी। उक्तञ्च पुराणे—'तथोत्पन्नस्तथैवाहं कुमार इति विद्धि माम्। तस्मात् सनत्कुमारेति नामैतन्मे प्रतिष्ठितम्॥' स इव सर्वविद्यावदातचेताः निखिलविद्यानिर्मलहृदयाः इह पूर्णोपमा। समानवयोभिः सवयोभिः अपरैः तद्व्यतिरिक्तैः तपोधनकुरकैः तापसदारकैः अनुगम्यमानः अनुव्रज्यमानः तेनैव पथा तेनैव वर्त्मना द्वितीय एतदपर भगवान् ज्ञानवान् धर्मवान् वा,—"भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्य कीर्त्तिषु। माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षेऽथ ना रवौ" इति मेदिनी। विभावसुरिव अग्निरिव अतितेजस्वितया अत्युत्कृष्टदीप्तिमत्तया,—'तेजो दीप्तौ प्रभावे च स्यात्पराक्रमरेतसोः' इति मेदिनी। दुर्निरीक्ष्या दुःखेन द्रष्टुं योग्या मूर्त्तिः स्वरूपं यस्य स तथोक्तः। विभावसुरग्निरिवेति द्रव्योत्प्रेक्षा। उद्यतः उदयं विदधतः दिवसकरमण्डलात् सूर्यविम्बात् उत्कीर्ण इव टङ्केन रचयित्वा उद्धृत इव, तडिद्भिः सौदामिनीभिः विरचिता निर्मिता अवयवा अङ्गानि यस्य स इव, तप्तम् उष्णं यत् कनकं सुवर्णं तस्य द्रवेण रसेन बहिः मूर्तेरेव बहिः उपलिप्ता लिम्पिता मूर्त्तिः स्वरूपं यस्य स तादृशः। एते त्रयोऽपि क्रियोत्प्रेक्षालङ्काराः।

आपिशङ्गेति। स्फुरन्त्या देदीप्यमानया, आपिशङ्गा किञ्चित्पिङ्गलवर्णा चासौ अवदाता धवला चेति

---

पाता, मैं भी इच्छानुसार देहसञ्चालन करने नहीं पा रहा हूँ, मेरा हृदय अवसन्न होकर पड़ गया है, चक्षु अन्धकारत्वको प्राप्त कर रहा है, अब क्या मेरी, इच्छा नहीं रहने पर भी खलस्वभाव विधाता आज ही मेरा मृत्यु सम्पादन कर सकेगा?।

मैं इस प्रकार मन ही मन चिन्ता करने लगा, इस समयमें उसी सरोवरके अनतिदूरवर्ती तपोवनमें जाबालि नामके महातपस्वी एक मुनि निवास करते थे, उनके लड़के, समस्त विद्याओंकी शिक्षा प्राप्त कर सनत्कुमारके समान विशुद्धचेता हारीतनामका मुनिकुमार, समवयस्क अन्यान्य मुनिकुमारगणके साथ उसी कमलपरिपूर्ण पम्पासरोवरमें स्नान करनेके लिए उसी मार्गसे उपस्थित हुए। महातेजस्वी होनेके कारण द्वितीय अग्निके समान उनकी आकृतिके प्रति दृष्टिपात करना दुष्कर था, उनकी आकृति मानो उदयमान सूर्यमण्डलसे उत्कीर्ण कर बाहर की गयी थी, विद्युद्द्वारा मानो समस्त अङ्ग निर्माण किया गया था, और अग्निके उत्तापसे तरलीकृत सुवर्णद्वारा

---

१ अद्य, अथ। २ एवं। ३ अदूरवर्त्तिनि। ४ 'स्म' इति क्वचित् पाठो नास्ति। ५ तापस कुमारकः। ६ समवयोभिः। ७ कुमारैः। ८ रचितावयवः। ९ शिङ्गावदातया।

देह-प्रभया स्फुरन्त्या सबालातपमिव दिवसं सदावानलमिव वनमुपदर्शयन्, उत्तप्त-लौह-लोहिनीनामनेक-तीर्थाभिषेकपूतानामंसस्थलावलम्बिनीनां जटानां निकरेणोपेतः, स्तम्भित-शिखा-कलापः, खाण्डववन-दिधक्षया कृत-कपट-वटु-वेश इव भगवान् पावकः, तपोवन-देवतानूपुरानुकारिणा धर्म्मशासन-कटकेनेव स्फाटिकेनाक्षवलयेन दक्षिणश्रवणावलम्बिना विराजमानः, सकल-विषयोपभोग-निवृत्त्यर्थमुपपादितेन ललाटपट्टके त्रिसत्येनेव भस्म-

---

तथा 'अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः' इत्यमरः, देहप्रभया शरीरकान्त्या, दिवसं तत्कालमित्यर्थः सबालातपमिव अभिनवसूर्यालोकयुक्तमिव वनं तद्विपिनं सदावानलमिव अरण्याग्निना युक्तमिव उपदर्शयन् प्रकटयन् जनानिति शेषः। इह सबालातपमिवेत्यत्र सदावानलमिवेत्यत्र च गुणोत्प्रेक्षा।

उत्तप्तेति। उत्तप्तम् उष्णीकृतं यल्लोहम् अश्मसारः,—'लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी। अश्मसारः' इत्यमरः। तद्वत् लोहिनीनां रक्तवर्णानाम् अनेकानि विविधानि यानि तीर्थानि गङ्गादीनि तेषु अभिषेकेण स्नानेन पूतानां पवित्रीकृतानाम्, अंसस्थले भुजशिरःस्थाने अवलम्बिनीनाम् अवलम्बमानानां जटानां सटानां 'व्रतिनस्तु जटा सटा' इत्यमरः, निकरेण समूहेन उपेतः सहितः। उत्तप्तलोहलोहिनीनामित्यत्र लुप्तोपमा।

स्तम्भितेति। स्तम्भितो बद्धः शिखानां चूडानां कलापः समूहो येन स तथोक्तः—"शिखा शाखा बर्हिचूडालाङ्गलिक्यग्रमात्रके। चूडामात्रे शिफायां च ज्वालायां प्रपदेऽपि च॥" इति मेदिनी। खाण्डववनस्य विविधमहौषधिपूर्णखाण्डवाख्यविपिनस्य दिधक्षया दग्धुमिच्छया कृतो विहितः कपटेन व्याजेन वटुवेशो द्विजरूपं येन स तादृशः, भगवान् माहात्म्यवान् पावको वह्निरिव दीप्तिस्वरूप इत्यर्थः। इह्रोपमा।

अत्रायं महाभारतीयेतिहासः—पुरा खलु श्वेतकिसंज्ञको भूपतिः द्वादशसांवत्सरिकं यज्ञमकृत। तत्र निरन्तरहविर्भक्षणेनाग्नेः मन्दाग्निरुत्पन्ना, ततश्च तत्प्रतिकर्त्तुं स खण्डुराज्ञया बहुविधमहौषधियुक्तं खाण्डववनं जिघत्सुर्द्विजरूपेण श्रीकृष्णस्य पार्थस्य च साहाय्यमाश्रित्य तद्विपिनं भस्मीचकारेति।

तपोवनेति। धर्मशासनस्य गुरुकृतविधिनिषेधादिरूपधर्मादेशस्य कटकं त्राणाय परिधिरूपेण वर्त्तमानं सैन्यं तेनेव 'कटकस्त्वद्रिनितम्बे बाहुभूषणे सेनायां राजधान्यां च' इति हैमः, भूपतेस्त्राणाय दुर्गाद्बहिः परिधिरूपेण सैन्यं यथा तिष्ठति तथा सव्येतरश्रोत्रे गुरुभिर्निरूपितस्य विधिनिषेधरूपधर्मस्य त्राणाय सैन्येनेव वलयाकारजपमालिकया विद्यमानमित्याशयः। स्फाटिकेन स्फटिकमणिरचितेन दक्षिणश्रवणावलम्बिना सव्येतरश्रोत्रस्थायिना, अक्षवलयेन वलयाकारजपमालिकया विराजमानः शोभमानः। इह धर्मशासनकटकेनेवेत्यत्र आर्थी उपमा, जात्युत्प्रेक्षा च, अनयोर्हि अङ्गाङ्गिभावेन साङ्कर्यात् सङ्करालङ्कारः।

सकलेति। सकलानां समस्तानां विषयाणां स्रक्चन्दनरमणीप्रभृतीनां भोग्यवस्तूनाम् उपभोगनिवृत्त्यर्थम् उपभोगोपमरमार्थम् उपपादितेन विहितेन, त्रयाणां सत्यानां शपथानां समाहार इति त्रिसत्यं तेनव, नाहं विषयानुरक्तो भविष्यामि, नाहं विषयानुरक्तो भविष्यामि, नाहं विषयानुरक्तो भविष्यामि इति शपथत्रयलक्षणेनेत्यर्थः 'सत्यं कृते च शपथे तथ्ये च त्रिषु तद्वति' इति मेदिनी। ललाटपट्टके भालफलके भस्मत्रिपुण्ड्रकेण विभूतित्रितिलकेन भस्मनस्तिर्यग्रेखात्रयेणेत्यर्थः, अलङ्कृतो मण्डितः। इह त्रिसत्येनेवेति गुणोत्प्रेक्षा।

---

मानो उनका शरीरका भाग लेपन किया गया हुआ था। प्रकाशमान ईषत्पिङ्गलवर्ण तथा निर्मल देहकान्तिद्वारा वे मानो उस समयके अभिनव—रौद्रसमन्वितके समान एवं वनके मानो दावानल संयुक्तके समान दर्शन करा रहे थे। प्रज्वलित लौहके समान रक्तवर्ण एवं बहुतर तीर्थस्नान करनेसे पवित्र जटासमूह, उनके स्कन्धदेशमें लम्बित था, एवं शिखासमूह बद्ध था, खाण्डववन दग्ध करनेकी इच्छासे कपटवटुवेशधारी भगवान् अग्निके समान उनका स्वरूप तेजःपुञ्जमय था। तपोवनके अधिष्ठात्री देवीके नूपुरके समान स्फटिकनिर्मित जपमाला, धर्मोपदेशके रक्षाके निमित्त मण्डलाकार अवस्थित सैन्यगणके समान दक्षिण कर्णमें लम्बित रहनेसे वह शोभाको पा रही थी। समस्तभोग्य वस्तुओंमें उपभोगनिवृत्ति होनेके करण 'मैं भोग नहीं करूँगा' इस प्रकारका तीन बार

---

१ जटावलीनां। २···पटुवेष इव। ३···अनुलम्बिना, विलम्बिना। ४ निवृत्तिमुप,। ५ उत्पादितेन। ६ ललाटपट्टे। ७ त्रिसत्यकेन।

त्रिपुण्ड्रकेणालङ्कृतः, गगन-गमनोन्मुखबलाकानुकारिणा[1] स्वर्गमार्गमिव दर्शयता सततमुद्ग्रीवेण स्फटिक-मणि[2]-कमण्डलुनाध्यासित-वामकरतलः, स्कन्धदेशावलम्बिना कृष्णाजिनेन नील[3]पाण्डुभासा तपस्तृष्णानिपीतेनान्तर्निष्पतता[4] धूम-पटलेनेव परीत-मूर्त्तिः, अभिनव-विससूत्र-निर्मितेनेव परिलघुतया पवनलोलेन निर्म्मांस-विरलपार्श्वास्थिपञ्जरमिव[5] गणयता वामांसावलम्बिना यज्ञोपवीतेनोद्भासमानः, देवतार्चनार्थमागृहीत-वनलता-कुसुम-परिपूर्ण[6]-पर्णपुट-सनाथ-शिखरेणाषाढदण्डेन व्यापृत-सव्येतर-पाणिः, विषाण[7]-शिखरोत्खातामुद्वहता स्नानमृदमुपजात-परिचयेन नीवारमुष्टि-संवर्द्धितेन कुश-कुसुम-लतायास्यमान[8]-लोल-दृष्टिना

गगनेति । गगनगमनाय आकाशोड्डयनाय उन्मुखी ऊर्ध्वानना या बलाका विसकण्ठिका तामनुकर्त्तुं शीलं यस्य तेन तादृशेन 'बलाका विसकण्ठिका' इत्यमरः, स्वर्गमार्गं दिवौकसपन्थानं दर्शयतेव प्रकटयतेव उद्ग्रीवत्वादित्याशयः । सततं निरन्तरम् उद्ग्रीवेण उन्नतकन्धरेण एवंविधेन स्फटिकमणिकमण्डलुना स्फटिकरत्नरचितकुण्ड्या 'अस्त्री कमण्डलुः कुण्डी' इत्यमरः, अध्यासितम् अवलम्बितं वामकरतलं सव्यहस्ततलं यस्य स तादृशः । इह गगनगमनोन्मुखबलाकानुकारिणेत्यत्रार्थी उपमा, दर्शयतेवेति क्रियोत्प्रेक्षा च, अनयोश्चाङ्गाङ्गिभावेन साङ्कर्यात् सङ्करालङ्कारः ।

स्कन्धेति । तपस्तृष्णया तपो मे वृद्धिं प्राप्नोत्वितीच्छया निपीतेन निगीलितेन, पुनरन्तर्निष्पतता जठरमध्याद्विसरता धूमपटलेनेव धूमसमुदायेनेव विद्यमानेन, स्कन्धदेशावलम्बिना बाहुमूलभागाश्रितवता, नीला अश्वेता पाण्डुः श्वेता च भा कान्तिर्यस्य तेन तादृशेन कृष्णाजिनेन कृष्णसारमृगचर्मणा परीतमूर्त्तिः व्याप्तशरीरः । धूमपटलेनेवेति जात्युत्प्रेक्षा ।

अभीति । अभिनवैः प्रत्यग्रैः विससूत्रैः मृणालतन्तुभिः 'मृणालं विसमब्जादि' इत्यमरः, निर्मितेनेव कृतेनेव अत्यन्तसूक्ष्मत्वादित्याशयः । परिलघुतया अत्यन्तभारशून्यत्वेन अणुतया पवनेन वायुना लोलेन चञ्चलेन, अतएव निर्मांसं प्रायेण व्रतादिवशात् पिशितशून्यम् सुतरां विरलम् असङ्कीर्णं पार्थक्येन दृश्यमानं यत् पार्श्वास्थिपञ्जरं पार्श्वगतास्थिनिकरः, तद्गणयतेव तत्संख्यां विदधतेव, वामे सव्ये अंसे स्कन्धे अवलम्बिना अवस्थानशीलेन यज्ञोपवीतेन यज्ञसूत्रेण उद्भासमानः देदीप्यमानः । इह 'अभिनवविससूत्रनिर्मितेनेव' इत्यत्र 'गणयतेव' इत्यत्र च क्रियोत्प्रेक्षा, तयोश्च परस्परं नैरपेक्ष्येण स्थितत्वात् संसृष्टिरलङ्कारः ।

देवतेति । देवतानां परमेश्वराणाम् अर्चनार्थं पूजनार्थम् आगृहीतैः आत्तैः वनलताकुसुमानि अरण्यवल्लिप्रसूनानि तैः परिपूर्णं भृतं यत् पर्णपुटं पत्रपुटं तेन सनाथं युक्तं शिखरम् ऊर्ध्वभागो यस्य स तेन तादृशेन, आषाढदण्डेन पलाशतरुरचितदण्डेन 'पलाशो दण्ड आषाढः' इत्यमरः, व्यापृतो व्यापारयुक्तः । सव्येतरो दक्षिणः पाणिः करो यस्य स तादृशः ।

विषाणेति । विषाणशिखरेण शृङ्गाग्रेण उत्खाताम् उत्खनितां स्नानमृदं हारीतस्यैवाप्लवनमृत्तिकाम् उद्वहता विषाणशिखरेणैव धारयता, उपजातः समुत्पन्नः परिचयः अहिंसाजनकत्वेन विशेषज्ञानं यस्य तेन तादृशेन, नीवारमुष्टिभिः मुष्टिपरिमितवनव्रीहिभिः प्रतिदिनं तदर्थत्यागैरित्यर्थः, संवर्द्धितः वृद्धिं प्रापितः तेन तादृशेन, कुशकुसुमलताभिः पार्श्वद्वयस्थायिनीभिः दर्भपुष्पव्रततीभिः आयास्यमाने संस्पर्शात् खेदं

प्रतिज्ञाके तीन चिह्नके समान ललाट देशमें भस्मद्वारा अङ्कित त्रिपुण्ड्रसे वे अलंकृत थे । आकाशमें उड़जानेके कारण उन्मुख बकपक्षीके समान सर्वदा उद्ग्रीव स्फटिकनिर्मित एक कमण्डलु उनके वाम हाथमें था जो कि स्वर्ग जानेके लिए पथप्रदर्शन करा रहा था । नील और पाण्डुवर्ण स्कन्ध देशस्थित एक कृष्णसारका चर्म उनके देहमें परिवेष्टित था, उससे यह प्रतीत हो रहा था कि मानो तपस्यावृद्धिके कामनासे वे जो धूमसमूहपान करते थे, वह उदरके अभ्यन्तरसे निर्गत होकर शरीर परिवेष्टन कर रहा है । एक यज्ञोपवीत, हारीतके वामस्कन्धके ऊपर भागसे लम्बित था, अत्यन्त सूक्ष्म होनेके कारण मानो अभिनव मृणालसूत्रद्वारा निर्मित हुआ था ऐसी प्रतीति हो रही थी, और अत्यन्त लघु ( हल्का ) होनेके कारण वह यज्ञोपवीत वायुके भारसे कम्पित हो रहा था, जिससे प्रतीत हो रहा था मानो वह यज्ञोपवीत, हारीतके मांसहीन विरल ( खण्ड खण्ड कर ) पार्श्वास्थिसमूहको गणना कर रहा हो । हारीतके दक्षिण हस्तमें एक पलाशका दण्ड था, उसके ऊपर भागमें देवता पूजा करने के लिये एकत्रित वन्यलताके कुसुमसमूहसे परिपूर्ण एक पत्रपुटक ( पत्तेका दोना ) बधा हुआ था । प्रतिदिन अनेकवार

१...अनुकारिस्वर्गमार्गमिव । २ 'मणि' इति क्वचित् पाठो नास्ति । ३ नीलया । ४ अन्तरपगच्छता, अन्तर्निवसता । ५ पार्श्वपञ्जरमिव । ६ कुसुम पूर्ण । ७ विषाणोत्खाताम् । ८...उपास्यमान ।

तपोवनमृगेणानुगम्यमानः, विटप इव कोमल-वल्कलावृत-शरीरः, गिरिरिव समेखलः, राहुरिवासकृदास्वादित-सोमः, पद्मनिकर इव दिवसकर-मरीचिपः, नदी-तट-तरुरिव सतत-जल-क्षालन-विमलजटः, करि-कलभ इव विकच-कुमुद-दल-शकलसित-दशनः, द्रौणिरिव कृपानुगतः, नक्षत्रराशिरिव चित्रमृग-कृत्तिकाश्लेषोपशोभितः, घर्म्मकाल-दिवस इव क्षयितदोषः, जलधर समय इव प्रशमितरजः प्रसरः, वरुण इव कृतोदवासः, हरिरिवापनीत-

---

प्राप्यमाणे अतएव लोले चपले दृष्टी लोचने यस्य तेन तादृशेन, तपोवनमृगेण मुन्याश्रमहरिणा अनुगम्यमानः अनुव्रज्यमानः ।

विटप इति । विटप इव तरुशाखेव, कोमलेन मृदुलत्वादेव परिधानयोग्येनेत्याशयः,अपरत्र मूलादिभागात् कोमलेन त्वचा चोचेन आवृतम् आच्छादितं शरीरं वपुर्यस्य स तादृशः। गिरिः अचलः स इव,मेखलया मुञ्जरचितकटिसूत्रेण मध्यदेशेन च सह विद्यत इति समेखलः। राहुः विधुन्तुद इव 'तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः' इत्यमरः, असकृत् अनेकशः आस्वादितः सोमयागसमये पीतः पूर्णिमासु ग्रस्तश्च सोमः सोमलतारसः इन्दुश्च येन स तादृशः 'सोमस्त्वोषधीतद्रसेन्दुषु' इति हैमः, एतेनात्यन्तसोमयागविधायित्वं व्यञ्जितम् । पद्मानां पङ्कजानां निकरः समूह इव, दिवसकरस्य सूर्यस्य मरीचीन् किरणान् पिबति ग्रीष्मर्तौ पञ्चाग्निसाधनात् ऊर्ध्ववदनः सन् ग्रसते अपरत्र पूर्णप्रस्फुटनात् स्पृशतीति मरीचिपः। नद्याः सरितः तटं तीरं तस्मिन् तरुः वृक्षः तद्वदिव, सततम् अनवरतं त्रिसन्ध्यं जले सलिले क्षालनम् अवगाहनं तेन विमला निर्मला रजोरहिता इत्यर्थः, जटा सटा यस्य स तादृशः, अन्यत्र सततं निरन्तरं जलक्षालनेन स्रोतःसलिलप्रक्षालनेन विमला मृत्तिकाहीना जटा मूलप्रदेशो यस्य स तादृशः। करिणां गजानां कलभः त्रिंशद्वर्षवयस्कः तद्वदिव, विकचं विकसितं यत् कुमुदं कैरवं तस्य दलशकलवत् पर्णखण्डवत् सिताः स्वच्छाः दशना दन्ता दन्तौ च यस्य स तादृशः । इदं पक्षद्वयेऽपि तुल्यम् । द्रोणस्य द्रोणाचार्यस्यापत्यं द्रौणिः अश्वत्थामा तद्वदिव, कृपाम् अनुकम्पाम् अनुगतः प्राप्तः सर्वस्य दुःखत्राणे दयायुक्त इत्यर्थः 'कृपा दयाऽनुकम्पा स्यात्' इत्यमरः, अन्यत्र कृपः कृपाचार्यः तेन अनुगतः सङ्ग्रामादौ सहितः। नक्षत्राणाम् ऋक्षाणां राशिः निकरः तद्वदिव, चित्रमृगस्य विचित्रहरिणस्य कृष्णसारस्य या कृत्तिका चर्म तस्य आश्लेषेण सम्बन्धेन धारणेन उपशोभितः शोभां प्राप्तः,अपरत्र चित्रं चित्रासंज्ञकं चतुर्दशं नक्षत्रम्, मृगं मृगशिराख्यं पञ्चमं नक्षत्रम्, कृत्तिका तदाख्यं तृतीयं नक्षत्रम् , अश्लेषा एतत्संज्ञकं नवमं नक्षत्रम् , तैरुपशोभितः । घर्मकालस्य ग्रीष्मसमयस्य दिवसो दिनं तद्वदिव, क्षयिताः नाशं प्रापिताः दोषाः कामक्रोधादयो यस्य स तादृशः, अपरत्र क्षयिता समुत्पादितह्रासा दोषा रात्रिर्यस्य स तादृशः 'दोषा रात्रिमुखे रात्रौ' इति विश्वः । जलधराणां मेघानां समयः कालः प्रावृट्काल इत्यर्थः,तद्वदिव, प्रशमितः चित्तवृत्तिनिरोधाभ्यासेन निवारितः रजःप्रसरः प्रवर्तकगुणव्यापारः कामक्रोधादिर्येन स तादृशः,अपरत्र प्रशमितः वर्षणेन निवारितः रजःप्रसरः पांशुविस्तारो येन यत्र वा स तादृशः । वरुणः प्रचेताः तद्वदिव 'प्रचेता वरुणः पाशी' इत्यमरः, कृतो विहित उदके सलिले वासो

---

मुष्टिपरिमित नीवारधान्य द्वारा जिसको सम्वर्द्धित कराया गया था, उससे परिचित उस तपोवनका हरिण हारीतके पीछे पीछे गमन कर रहा था, वह हरिण, हारीतके निमित्त शृङ्गके अग्रभागके द्वारा उद्धृत मृत्तिका वहन कर ले जा रहा था, और मार्गके उभय पार्श्वके कुश और पुष्पलताके संस्पर्शसे उस हरिणका नेत्र, वेदना पाकर चञ्चल हो रहा था। वृक्षके शाखाके समान हारीतका शरीर कोमल वल्कलसे आच्छादित था। पर्वतके समान हारीतकी मेखला थी। राहु जिस प्रकार अनेकबार चन्द्रमाका ग्रास किया है, हारीत भी उसी प्रकार अनेकबार सोमरस पान किये हुए थे। कमलसमूहके समान पञ्चाग्नि तपस्याके समय सूर्यरश्मि-पान करनेसे, सर्वदा प्रवाहजलके प्रक्षालनसे नदीतीरस्थ-वृक्षमूल जिस प्रकार होता है, कालत्रय अवगाहन करनेसे हारीतका जटासमूह भी उसी प्रकार निर्मल हो गया था। हस्तिशावकके समान हारीतका दन्तसमूह प्रस्फुटित कुमुदके पत्रखण्डके समान शुभ्रवर्ण था। कृपाचार्य जिस प्रकार सर्वदा अश्वत्थामाके पश्चाद्भागमें रहते थे, हारीतके चित्तमें भी भी वसी प्रकार सर्वदा दया रहती थी। नक्षत्रसमूह जिस प्रकार चित्रा, मृगशिरा, कृत्तिका और अश्लेषा नक्षत्रद्वारा शोभित होता है; हारीत भी उसी प्रकार विचित्र हरिण चर्म धारण करनेसे शोभित होते थे। ग्रीष्मके दिनमें जिस प्रकार रात्रि क्षयप्राप्त हो जाती है, हारीतका भी उसी प्रकार रागद्वेषादि दोष क्षयप्राप्त हो गया था, वर्षा

---

१ अनुयातः। २ वल्काकृत...। ३ दिनकर...। ४ विरल...। ५ ...कलभः। ६ विश्लेषाः। ७ क्षपितबहुदोषः।

नरकभयः, प्रदोषारम्भ इव सन्ध्या-पिङ्गल-तारकः, प्रभातकाल इव बालातप-कपिलः, रवि-रथ इव दृढनियमिताक्षचक्रः, सुराजेव निगूढ-मन्त्रसाधन-क्षपित-विग्रहः, जलधिरिव कराल-शङ्खमण्डलावर्त्त-नाभिगर्त्तः, भगीरथ इव दृष्ट-गङ्गावतारः, मधुकर इवासकृदनुभूतपुष्कर-वनवासः, वनचरोऽपि कृतमहालयप्रवेशः, असंयतोऽपि मोक्षार्थी,

व्रतविशेषः जलदेवतात्वेनावस्थानञ्च येन स तादृशः 'उदकस्योदः संज्ञायाम्' इति पा० सूत्रेणोदादेशः । हरिर्वासुदेव इव, अपनीतं दूरीकृतं नरकभयं नरकप्राप्तिभीतिः तदाख्यासुरभीतिश्च येन स तादृशः, एकत्र निरन्तरतपोऽर्जनात् अपरत्र तन्नाशादित्याशयः । प्रदोषो रजनीमुखं तस्य आरम्भः प्राक् समयः तद्वदिव, 'प्रदोषो रजनीमुखम्' इत्यमरः, सन्ध्यावत् दिवसरजनिसन्धिवत् पिङ्गले पीतवर्णे तारके कनीनिके यस्य स तादृशः, एतद्धि महापुरुषस्य लक्षणम्, तदुक्तं सामुद्रिक शास्त्रे—'क्षुद्रोऽपि चक्रवर्ती स्यात् पीततारक-चक्षुषी' । अपरत्र सन्ध्यया सन्ध्यासमयवर्णेन पिङ्गलाः पीताः तारका उडूनि यस्मिन् स तादृशः । प्रभातं प्रत्यूषः तस्य कालः समयः तद्वदिव, बालातपवत् अभिनवदिनकरालोकवत् कपिलः पीतरक्तवर्णः, अपरत्र बालातपेन कपिलः । रवेः दिनाधिपस्य यो रथः स्यन्दनः तद्वदिव, दृढं यथा स्यात्तथा नियमितं निगृहीतम् अक्षाणाम् इन्द्रियाणां चक्रं समूहो येन स तादृशः, परत्र दृढं नियमितानि निबद्धानि अक्षो मध्यदण्डः स्यन्दनावयवश्च यस्मिन् स तादृशः । सुष्ठु सुन्दरो यो राजा स्वकर्मकुशलो भूपतिः तद्वदिव, निगूढम् अतिगुप्तं यत् मन्त्रसाधनम् इष्टदेवतामन्त्राराधनं तेन क्षपितः व्रतश्रमाद्याधिक्यात् कृशीकृतः विग्रहो देहो येन स तादृशः, भूपतिपक्षे तु—निगूढेन अतिगुप्तेन मन्त्रसाधनेन रहस्यालोचनेन क्षपितः क्षयं प्रापितः विग्रहः शत्रुजनितक्लेशः संग्राम इत्यर्थः येन स तादृशः । जलधिः समुद्रः स इव, करालो दन्तुर उच्चनीचो यः शङ्खः तस्य मण्डलावर्त्तवत् मण्डलसदृशावर्त्तवत् नाभिगर्तो यस्य स तादृशः, समुद्रपक्षे तु—कराल-शङ्खः महच्छङ्खः मण्डलावर्तः मण्डलसदृशेन जलावर्तश्च नाभिगर्त इव नाभिश्वभ्र इव यस्मिन् स तादृशः 'गर्तावटौ भुवि श्वभ्रे' इत्यमरः । भगीरथः सगरप्रपौत्रः स इव, दृष्टः अवलोकितः गङ्गाया जाह्नव्या अवतार अवतरणभूमिः सुरालयाद्विप्पतनञ्च येन स तादृशः । भ्रमरो मधुकरः स इव, असकृत् बहुशः अनुभूतः तपस्यार्थम् अनुभवविषयीकृतः, पुष्करे तत्संज्ञकतीर्थे वने विपिने च वासः स्थितिः येन स तादृशः, अपरत्र मधुपानायानेकशोऽनुभूतः पुष्करवने पङ्कजवने वासो येन स तादृशः। इह 'विटप इव' इत्यारभ्य 'भ्रमर इव' इत्यन्तं यावत् श्लेषोपमेति केचित् । दर्पणकारोक्तदिशा पूर्णोपमालङ्कार इति विभावनीयम् ।

वनचर इति । वने विपिने चरतीति वनचरः वनवासी एतादृशः सन्नपि कृतो विहितो महालयेषु उच्चैस्तरभवनेषु प्रवेशो येन स तादृश इति विरोधः, कृतचित्तवृत्तिनिरोधाभ्यासेन सम्पादितो महालये पर मात्मनि प्रवेशः प्रत्यक्षज्ञानविषयता येन स तादृश इति तत्परिहारः 'महालयो विहारे स्यात् तीर्थे च पर-मात्मनि' इति मेदिनी ।

असंयत इति । असंयतः धारणाध्यानसमाधिरहितोऽपि मोक्षार्थी संसारप्रपञ्चबन्धनासम्बन्धार्थी इति

---

समय जिस प्रकार वृष्टिद्वारा धूलिसमूहको प्रशमित करता है हारीत भी उसी प्रकार योगाभ्यासद्वारा कामक्रोधा-दिको प्रशमितकर दिये थे । वरुण जिस प्रकार जलमें वास करते हैं, हारीत भी उसी प्रकार जलमें वास करते थे, कृष्णचन्द्र जिस प्रकार नरकासुरका वधकर उससे भय निवारण किये थे, हारीत भी उसी प्रकार सर्वदा तपस्याकर नरक आनेका भय निवारण कर दिये थे । प्रदोषारम्भसमयमें नक्षत्रसमूह जिस प्रकार सन्ध्या-रागसे पिङ्गलवर्ण रहता है, उनके नयनके कनीनिकाद्वय भी उसी प्रकार सन्ध्यासमयके समान पिङ्गलवर्ण था । प्रातःसमय जिस प्रकार अभिनव रौद्रसे पिङ्गलवर्ण हो जाता है, हारीत भी उसी प्रकार स्वकीयतेज से अभिनव रौद्रके समान पिङ्गलवर्ण हो गये थे । सूर्यके रथमें जिस प्रकार अक्षदण्ड और चक्रसमस्त दृढरूपसे आबद्ध है, हारीतके इन्द्रियसमूह भी उसी प्रकार दृढभावसे आबद्ध (निगृहीत) था । कार्यदक्ष राजा लोग जिस प्रकार गुप्तभावसे मन्त्रणा कर युद्धकी निवृत्ति करते हैं, हारीत भी उसी प्रकार गुप्तभावसे इष्टमन्त्रकी उपासना कर शरीरका क्षय करते थे । समुद्रमें जिस प्रकार मनुष्यके नाभिरन्ध्रके समान बाहरमें मण्डलाकारसे आवर्त्त ( जलका चक्कर ) एवं उसके मध्यमें एक वृहत् शङ्ख रहता है, हारीतका भी उसी प्रकार विषम शङ्खपुच्छके समान गोलाकार नाभि-गर्त्त था । भगीरथ जिस प्रकार पृथिवीमें गङ्गाका अवतरण देखे थे, हारीत भी उसी प्रकार गङ्गाका अवतरणस्थान हरद्वारको देखे थे । भ्रमर जिस प्रकार मधुपान करनेके लिये कमलवनमें वास करता है, हारीत भी उसी प्रकार

---

१...पिशङ्ग...। २ नियमिताक्षचक्रः, दृढसंयमिता...। ३...क्षपित...। ४ जलनिधिरिव । ५...आवर्त्तगर्त्तः । ६ असकृदृष्ट...। ७ भ्रमरः ।

सामप्रयोगपरोऽपि सततावलम्बितदण्डः, सुप्तोऽपि प्रबुद्धः, सन्निहितनेत्रद्वयोऽपि परित्यक्तवामलोचनस्तदेव कमलसरः सिस्नासुरुपागमत्।

प्रायेणाकारण-मित्राण्यतिकरुणार्द्राणि च[1] सदा खलु भवन्ति सतां चेतांसि। यतः स मां तदवस्थमालोक्य समुपजातकरुणः[2] समीपवर्त्तिनम्[3] ऋषिकुमारकमन्यतममब्रवीत्' 'अयं

---

विरोधः धारणाध्यानसमाधीनामभावे मोक्षासम्भवादित्याशयः। असंयतोऽपि तत्समये संयमविरतोऽपि मोक्षार्थी भविष्यत्काले संयमाश्रयणान्मोक्षाभिलाषीत्यर्थः। मोक्षप्राप्तिर्हि संयमेनैव भवतीति सिद्धान्तः। तथा च पातञ्जलयोगदर्शने—'देशबन्धश्चित्तस्य धारणा' 'तत्र प्रत्ययैकतानता ध्यानम्' 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' 'त्रयमेकत्र संयमः' इत्युक्तम्।

सामेति। साम प्रथमोपायसान्त्वनं तत्प्रयोगपरोऽपि तदनुष्ठानपरायणोऽपि सततं निरन्तरम् अवलम्बितः आश्रितः दण्डः तुरीयोपायो येन स इति विरोधः, साम एतत्संज्ञकतृतीयवेदः तत्प्रयोगपरोऽपि सततालम्बितयष्टिक इति तत्परिहारः।

सुप्त इति। सुप्तो निद्रितोऽपि प्रबुद्धः कृतजागरण इति विरोधः, सुप्तः शयनावस्थावत् सांसारिकज्ञानरहितोऽपि प्रबुद्धः 'सर्वं खल्विदं ब्रह्मे'ति परमात्मविषयकोत्कृष्टतत्त्वालोचक इति तत्परिहारः। अत्र भानुचन्द्रस्तु—सुष्ठुशोभनाप्ताः=जटा यस्येति विग्रहे परिहारं प्रदर्श्य 'प्ता' इत्यस्य जटायां प्रयोगे प्राचीनपद्यमुदाजहार। तद्यथा—

— "राजा राजार्चिताङ्घ्रेरनुपचितकलो यस्य चूडामणित्वं
नागा नागात्मजार्थं नभसितधवलं यद्वपुर्भूषयन्ति।
मा रामा रागिणी भून्मतिरिति यमिनां येन योऽदाहि मारः
स प्ताः सप्ताश्वनुन्नारुणकिरणनिभाः पातु बिभ्रत्त्रिनेत्रः॥" इति।

शृङ्गारतिलकटीकास्थमिदम्।

सन्निहितेति। सन्निहितं सम्यग्विधिना वदने स्थापितं नेत्रद्वयं लोचनयुगलं यस्य तथोक्तः सन्नपि, परित्यक्तं दूरीकृतं वामं दक्षिणेतरं लोचनं नयनं येन स इति विरोधः, परित्यक्ता वामलोचना रमणी तत्सम्बन्ध इत्यर्थः येन स तथोक्तः ब्रह्मचर्याश्रयणादित्याशयः, इति तत्परिहारः। तदेव पम्पासंज्ञकं कमलसरः पङ्कजमयसरोवरं सिस्नासुः स्नातुमिच्छुः सन् उपागमत् प्राप्तवान्।

प्रायेणेति। प्रायेण बाहुल्येन अकारणमित्राणि कारणाभावेन स्नेहकारीणि अतिकरुणार्द्राणि अतिशयपरक्लेशदूरीकरणेच्छया क्लिन्नानि, खलु निश्चयेन सदा सर्वस्मिन् समये सतां साधूनां चेतांसि हृदयानि भवन्ति। यतः यस्माद्धेतोः स जाबालितनयो हारीतनामा तदवस्थं विभूतपूर्वक्लेशदशापन्नं मां वैशम्पायनम् आलोक्य दृष्ट्वा समुपजाता समुत्पन्ना करुणा दया यस्यैतादृशः समीपवर्तिनं निकटस्थायिनम् अन्यतमं बहुषु कमप्येकम् ऋषिकुमारकं मुनितनयम् अब्रवीत् अवोचत्।

अयमिति। अयं पुरो दृश्यमानः शुकशिशुः कीरशावकः कथमपि महता क्लेशेन असंजातपक्षपुट एव

---

तपस्याके लिये पुष्करतीर्थ और महारण्यमें वास करते थे। हारीत वनचर होने पर भी उत्कृष्ट अट्टालिका प्रवेश करते थे (जंगलमें वास कर परमात्माका ज्ञानगोचर करते थे)। वे बद्ध नहीं होने पर भी मुक्तिके प्रार्थी थे (तत्क्षणमें संयम नहीं करने पर भी भावि समयमें संयम कर मुक्तिलाभ करनेकी इच्छा करते थे)। हारीत सर्वदा सामप्रयोगमें रहने पर भी सर्वदा दण्डप्रयोग करते थे (सामवेदोक्त कार्यका अनुष्ठान करते थे और सर्वदा यष्टि धारण करते थे)। वे निद्रित होने पर भी जागरित थे (निद्रितके समान बाह्यज्ञानरहित थे एवं परमात्मासे प्रकृष्ट ज्ञानलाभ करते थे)। मिखमुखमण्डलमें दो नेत्र रहने पर भी हारीत, वामनेत्र त्याग किये हुए थे, (स्त्रीसंसर्गत्याग किये हुए थे)।

प्रायः साधुजनका चित्त, किसी कारणके बिना सर्वदा दूसरोंके प्रति हितैषी एवं अत्यन्त दयार्द्र होकर रहता है, जिस कारण, वैसी अवस्था मेरी देख कर हारीतको दया उत्पन्न हुई. वे समीपवर्ती किसी ऋषिकुमारसे बोले—

---

१...च सदा भवन्ति सतां चेतांसि, सतां खलु भवन्ति सदा चेतांसि, इति क्वचिदुपलभ्यते। २...णः। ३ समीपतरवर्तिनम्।

कथमपि शुक-शिशुरसञ्जात-पक्षपुट एव तरुशिखरादस्मात् परिच्युतः । श्येन-मुख-परिभ्रष्टेन वाऽनेन भवितव्यम् । तथाह्यस्याल्पशेषं जीवितम्, अयमामीलित-लोचनो मुहुर्मुहुरत्युल्बणं श्वसिति, मुहुर्मुहुर्मुखेन पतति, मुहुर्मुहुश्चञ्चुपुटं विवृणोति, न शक्नोति शिरोधरां धारयितुम् । तदेहि यावदेवायमसुभिर्न वियुज्यते तावदेव गृहाणैनम् अवतारय सलिलसमीपम्" इत्यभिधाय तेन मां सरस्तीरमनाययत् ।

उपसृत्य च जल-समीपमेकदेश निहित-दण्ड-कमण्डलुरादाय स्वयं मां मुक्तप्रयत्नम् उत्तानित-मुखम् अंगुल्या कतिचित् सलिल-विन्दूनपाययत् । अम्भःक्षोदकृतसेकञ्च समुपजात-प्रज्ञम् उपतट-प्ररूढ-नलिनी-पलाशस्य जलशिशिरायां छायायां निधाय यथासमुचितमकरोत् स्नानविधिम् । अभिषेकावसाने चानेकप्राणायामपूतोऽपि जपन्नघमर्षणानि प्रत्यग्रमग्नैरु-

---

असमुत्पन्न पतत्रपुट एव अस्मात् प्रत्यक्षात् तरुशिखरात् वृक्षप्रदेशात् परिच्युतो निपतितः । वा अथवा अनेन शुकशिशुना श्येनमुखपरिभ्रष्टेन सिञ्चानकवदननिपतितेन भवितव्यम् । तदेवोपपादयति—तथाहीति । अतिदवीयः अत्यन्तदूरः तस्य भावस्तया तादृश्या अस्य कीरशावकस्य अल्पशेषं किञ्चिदवशिष्टं जीवितं जीवनम् । अयम् आमीलितलोचनः सङ्कुचितनेत्रः मुहुर्मुहुः अनेकशः अत्युल्बणं नितान्तदीर्घं यथा स्यात्तथा श्वसिति प्राणिति, मुहुर्मुहुः वारम्वारं मुखेन वदनेन पतति परिच्यवति, चञ्चुपुटं त्रोटीपुटं विवृणोति व्यावृणोति, शिरोधरां ग्रीवां धारयितुं सारल्येन स्थापयितुं न शक्नोति न समर्थो भवति । तत् तस्मात् कारणात् एहि आगच्छ यावदेव यावत्समयम् अयं शुकशिशुः असुभिः प्राणैः न विमुच्यते न त्यक्तो भवति तावदेव तावत्समयम् इमं शुकशिशुं गृहाण धारय, सलिलसमीपं जलान्तिकम् अवतारय प्रापय' इति पूर्वोक्तविधिना अभिधाय उक्त्वा तेन मुनिकुमारकेण सरस्तीरं पम्पासरोवरतटम् अनाययत् प्रापयत् ।

उपसृत्य इति । जलसमीपं सलिलान्तिकम् उपसृत्य प्राप्य च, एकस्मिन् देशे भागे निहतौ स्थापितौ दण्डकमण्डलू दण्डकुण्डिके येन स तादृशो हारीतः, स्वयम् आत्मना माम् आदाय गृहीत्वा, मुक्तः परित्यक्तः प्रयत्नः सलिलपाने उद्योगः वदनविकासादिव्यापार इत्यर्थः येन तं तादृशम् अत्यन्तावसन्नत्वादित्याशयः । उत्तानितमुखम् ऊर्ध्वीकृताननम् अङ्गुल्या कराग्रेण कतिचित् कियन्तः सलिलविन्दून् जलकणान् अपाययत् पानमकारयत् ।

अम्भ इति । अम्भक्षोदैः सलिलप्रदानसमये कुमारककराच्युतैः जलबिन्दुभिः सलिलकणैः कृतो विहितः सेकः सिञ्चनं यस्य तं तादृशं च, अत एव समुपजाता समुत्पन्ना प्रज्ञा प्रकृष्टबोधो यस्य तं तादृशं माम्, उपतटे तीरनिकटे प्ररूढा प्रादुर्भूता या नलिनी कमलिनी तस्याः पलाशस्य पत्रस्य, जलेन सलिलसेकेन शिशिरा शीतला यस्यां तस्यां तादृश्यां छायायाम् अनातपे निधाय संस्थाप्य यथासमुचितं यथायोग्यं शरीरेषु मृत्तिकालेपनादियुक्तमित्यर्थः स्नानविधिं मज्जनविधिम् अकरोत् कृतवान् ।

अभिषेकेति । अभिषेकस्य स्नानस्य अवसाने अन्ते च, अनेकैः बहुविधैः प्राणायामैः पूरककुम्भकरेचकाख्यैः वायुनिरोधानिरोधरूपयोगाङ्गविशेषैः पूतोऽपि पापरहितोऽपि । अघं दुष्कृतं मृष्यते प्रमार्ज्यते एभि-

---

'इस शुक-शावककी पांख नहीं उठता है, यह किस कारणसे इस वृक्षके ऊपरसे गिर गया है, अथवा यह शावक श्येन-पक्षीके मुखसे पतित होकर पड़ा हुआ है । देखो, इसकी आयु अल्पमात्र अवशिष्ट है; कारण—यह नयन मुद्रितकर बारम्बार अतिदीर्घ निश्वास त्याग कर रहा है, बारंबार मुखसे गिरता है, मुहुर्मुहुः चञ्चुद्वय विवृत कर रहा है, मस्तक उत्तोलन करनेमें समर्थ नहीं हो रहा है; इस लिए आओ जब तक इसका प्राणवियोग नहीं हो रहा है, तब तक ही इसको पकड़ो एवं जलके समीप ले चलो, ऐसा कह कर उस ऋषिकुमारद्वारा मुझे सरोवरके किनारे ले गये ।

ऋषिकुमार हारीत जलके समीपमें जाकर दण्ड और कमण्डलु एक भाग रख कर अपनेसे ही निश्चेष्टप्राय मुझे पकड़ कर मेरे मुखको अङ्गुलिद्वारा ऊपर उठा कर कितने जलबिन्दु पान करा दिये । उनके अङ्गुलीनिःसृत जल-सेकसे मेरी समस्त चेतनता उत्पन्न हुई, उस समय वे, तीरके समीपमें उत्पन्न कमलपत्रके शीतल छायामें मुझे रखकर

---

१ इह 'प्रायः' इत्यधिकः पाठः । २ तथाहि अतिदवीयस्तया प्रपातस्यावशेषजीवितः । ३ निःश्वसिति । ४ वमति । ५ विमुच्यते । ६ इमम् । ७ क्वचित् 'च' इति नास्ति । ८ आमुक्तप्रयत्नम् । ९ उन्नमित मुखम्, उत्तानितमन्मुखम् । १० उपजातनवीनप्राणम् । ११ उपतटप्ररूढस्य यज्ञनवनलिनीदलस्य । १२ स्वोचितम्, समुपचितम् । १३ अभिमताभिषेक । १४...पूतो जपन् पवित्राण्यघमर्षणानि ।

न्मुखो रक्तारविन्दैर्नलिनीपत्र-पुटेन भगवते सवित्रे दत्त्वार्घमुदतिष्ठत् । आगृहीत-धौत-धवल-वल्कलश्च सज्योत्स्न इव सन्ध्यातपः करतल-निर्धूनन-विशद-सटः प्रत्यग्रस्नानार्द्र-जटेन सकलेन तेन मुनिकुमार-कदम्बकेनानुगम्यमानो मां गृहीत्वा तपोवनाभिमुखं शनैः शनैरगच्छत् ।

अनतिदूरमिव गत्वा दिशि दिशि सदासन्निहित-कुसुमफलैः ताल-तिलकतमाल-हिन्ताल-वकुल-बहुलैः, एलालताकुलित-नारिकेल-कलापैः, आलोल-लोध्र-लवली-लवङ्ग-पल्लवैः, उल्लसत्-चूत-रेणु-पटलैः, अलिकुल-झङ्कार-मुखर-सहकारैः, उन्मद-कोकिल-कुल-कलालाप-कोला-

रिति तानि तादृशानि अघमर्षणानि सूक्तानि, एतानि हि 'ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत' इत्यारभ्य 'दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः' इत्यन्तानि वरुणदेवतास्तुतिरूपाणि बोध्यानि। अन्यत्रापि 'सर्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम्' इति। उन्मुखः उपरिभागकृताननः दिनाधिपामुखः सन्नित्यर्थः प्रत्यग्रभग्नैः तत्कालोत्खातैः रक्तारविन्दैः रक्तवर्णकमलैः, नलिनीपत्रपुटेन रक्तकमलाधारभूतेन कमदलपुटकेन भगवते माहात्म्यवते सवित्रे आदित्याय अर्घं पूजां दत्वा समर्प्य उदतिष्ठत् उत्थितोऽभूत् ।

आगृहीतेति । आगृहीतं स्नानानन्तरं सम्यक् प्रकारेण परिहितं धौतं क्षालितं धवलं स्वच्छं वल्कलं वृक्षत्वक् येन स तथोक्तः, अत एव ज्योत्स्नया चन्द्रिकया सहेति सज्योत्स्नः, सन्ध्यातपः सायंसम्बन्धि सूर्यप्रकाश इव । करतलाभ्यां हस्ततलाभ्यां निर्धूननेन आस्फालनेन ताडनेनेत्यर्थः विशदा नीरजाः सटा जटा यस्य स तादृशः,प्रत्यग्रेण नूतनेन तत्कालविहितेन स्नानेन मज्जनेन आर्द्रा स्विन्ना जटा यस्य स तेन तादृशेन, तेन पूर्वोक्तेन मुनिकुमारकादम्बकेन ऋषिपुत्रसमूहेन अनुगम्यमानः अनुव्रज्यमानो हारीतो मां वैशम्पायनं गृहीत्वा आदाय शनैः शनैः मन्दं मन्दं तपोवनाभिमुखं निजाश्रमसम्मुखम् अगच्छत् अव्रजत् ।

अनतिदूरमिति । अनतिदूरं किञ्चिद्दवीयसं मार्गं गत्वा आश्रमं स्वस्थानमपश्यदिति सुदूरस्थायिन्या क्रियया सम्बन्धः । इव शब्दोऽत्र वाक्यालङ्कारे । इह तृतीयान्तानि यानि पदानि सन्ति तानि अग्रिमस्य "कानने"रित्यस्य विशेषणानि बोध्यानि । दिशि दिशि प्रतिदिशम् । सदा सर्वदा सन्निहितानि अवस्थितानि समीपवर्त्तीनि कुसुमानि पुष्पाणि फलानि रसोद्भवानि च येषु तैः तादृशैः, तालाः स्वनामप्रसिद्धाः तिलकाः श्रीमद्वृक्षविशेषाः, तमालाः तापिच्छा, हिन्तालाः फलतरुविशेषाः, बकुलाः केसराश्च बहुला अधिका येषु तैः तादृशैः । एलालताभिः चन्द्रवालावल्लीभिः आकुलिता व्याप्ता नारिकेलानां लाङ्गलीनां तरूणां कलापाः समूहा येषु तैस्तादृशैः । आलोलाः पवनवेगेन समन्ताच्चपलाः लोध्राणां गालवानां लवलीनां लताविशेषाणां लवङ्गानां श्रीसंज्ञकानां पल्लवाः किसलयानि येषु तैः तादृशैः । उल्लसन्ति पवनवेगेन प्रचलन्ति चूतानाम् आम्रपुष्पाणाम् 'आम्रश्चूतो रसालोऽसौ' इत्यमरः, रेणुपटलानि परागसमूहा येषु तैः तादृशैः । अलिकुलस्य भ्रमरगणस्य झङ्कारैः 'झम्' इत्येवंविधशब्दैः मुखरा वाचालाः सहकारा अतिसुगन्धिरसाला येषु तैः तादृशैः 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः । उन्मदस्य मदोन्मत्तस्य कोकिलकुलस्य पिकगणस्य

यथोचित स्नानक्रिया सम्पादन किये। स्नानके बाद हारीत बहुतर प्राणायाम कर पवित्र होने पर भी अघमर्षण सूक्त जप कर सूर्यके अभिमुख होकर, कमलपत्रको आधारित कर अभिनव उद्धृत रक्तकमलद्वारा भगवान् सूर्यदेवको अर्घदान देकर तीर परसे उठ गये। उसके बाद वे प्रक्षालित शुभ्रवर्ण एक वल्कल परिधान किये, उससे सन्ध्या समयमें ज्योत्स्नासम्मिलित सूर्यालोकके समान वे देखे जाने लगे। बाद वे करयुगलके आस्फालनसे जटासमूहको स्वच्छ कर, सद्यः स्नान किये हुए आर्द्र जटा–समन्वित वे समस्त मुनिकुमारगणके साथ मुझे लेकर धीरे धीरे तपोवनके ओर चले गये।

मैं थोड़े दूरमें जाकर द्वितीय ब्रह्मलोकके समान अतिमनोहर एक आश्रमका दर्शन किया। वह आश्रम चारों ओर वनसे परिवेष्टित था। उस वनमें सर्वदा होनेके कारण नानाजातीय पुष्प और फल विद्यमान था। और ताल, तिलक, तमाल, हिन्ताल और बकुलादि समस्त वृक्षोंकी अधिक संख्या थी। एलायची लतासे परिवेष्टित बहुतर नारिकेल वृक्ष था। लोध्र एवं लवङ्गके पल्लवसमूह वायुवेगसे कम्पित होता था, और आम्रपुष्पके परागसमूह विकीर्ण होता

१ अर्घ्यम् । २ आगृहीतधवल...। ३ सहज्योत्स्न इव । ४...निधूतविशदजटः । ५ कमण्डलुमापूर्य्य-कमलकिञ्जल्कसुरभिणा शुचिना सरोवारिणा प्रत्यग्रस्नानार्द्रजटेन । ६ कुमारक । ७ क्वचित् 'शनैः' इत्येकमेव पदमुपलभ्यते। ८ कुसुमपटलैः। ९...तिलकतालीतमाल। १० नालिकेरी...। ११ लोल। १२...पुष्पैः। १३ उल्लसित...। १४...कुलकलाप...।

हलिभिः, उत्फुल्ल-केतकी-कुसुम[1]-मञ्जरीरजः पुञ्ज-पिञ्जरैः, पूगीलता-दोलाधिरूढ-वनदेवतैः, तारकावर्ष[2]मिवाधर्म्म-विनाश-पिशुनं कुसुम-निकरमनिल-चलितमनवरतमतिधवलमुत्सृजद्भिः, संसक्तपादपैः काननै[3]रुपगूढम्, अचकित-प्रचलित-कृष्णसार[4]-शत-शबलाभिः, उत्फुल्ल-स्थल[5]-कमलिनी-लोहिनीभिः, मारीच[6]मायामृगावलून-प्ररूढ[7]-वीरुद्दलाभिः, दाशरथि-चाप-कोटि-क्षत-कन्द[8]-गर्त्तविषमित-तलाभिः, दण्डकारण्यस्थलीभिरुपशोभितप्रान्तम्, आगृहीतसमित्कुशकुसुममृद्भि[9]: अध्ययन-मुखर-शिष्यानुगतैः[10] सर्वतः प्रविशद्भि[11]: मुनिभिरशून्योपकण्ठम्[12], उत्कण्ठित[13]-

कलालापः अव्यक्तमधुरध्वनिरूपः कोलाहलः कलकलः एषामस्तीति तैः तादृशैः। उत्फुल्लानां प्रस्फुटितानां केतकीकुसुमानां मालतीपुष्पाणां या मञ्जर्यः वल्लर्यो 'वल्लरिर्मञ्जरिः स्त्रियौ' इत्यमरः, तासां रजःपुञ्जैः परागपटलैः पिञ्जराणि पीतवर्णानि येषु तैः तादृशैः। पूगीनां क्रमुकानां या लता वल्ली तद्वत् कृशतरवः ता एव दोला अधिरोहिणी 'दोला प्रेङ्खः पुमान् प्रेङ्खा, निश्रेणिरधिरोहिणी' इति रत्नकोशः, स्थानविशेषे दोलावदनेकानां कुटिलीभूतत्वादित्याशयः, तासु अधिरूढा आश्रिता वनदेवता अरण्याधिष्ठात्र्यो देवता येषु तैः तादृशैः। अधर्मस्य पापस्य विनाशो ध्वंसः तस्य पिशुनं सूचकं देवार्च्चनोपयोगित्वादित्याशयः, आनिलचलितं पवनान्दोलितम्, अतिधवलम् अत्यन्तशुभ्रं कुसुमनिकरं प्रसूनवृन्दम्, तारकावर्षमिव उल्कापातमिव अनवरतं निरन्तरम् उत्सृजद्भिः परित्यजद्भिः। संसक्ता मिथो मिलिताः पादपाः तरवो येषु तैः तथोक्तैः काननैः वनैः उपगूढम् आश्लिष्टम् आच्छादितमित्यर्थः 'गहनं काननं वनम्' इत्यमरः। 'पूगीलता–दोलाधिरूढ–वनदेवतैः' इत्यत्र वनदेवतानां तथाविधदोलाधिरोहणसम्बन्धाऽभावेऽपि तत्सम्बन्धप्रतिपादनादतिशयोक्तिरलङ्कारः। 'तारकावर्षमिव' इत्यत्र पूर्णोमालङ्कारः।

अचकितेति। अचकितेत्यारभ्य 'गर्त्तविषे'त्यन्तानि स्त्रीलिङ्गपदानि दण्डकारण्यस्थलीभिरित्यस्य विशेषणानि। अचकितानाम् अभीतानां हिंसाभावादित्याशयः, प्रचलितानां सञ्चरतां कृष्णसाराणां तदाख्यहरिणानां शतेन आधिक्येन समुदायेनेत्यर्थः शबलाभिर्विचित्राभिः। उत्फुल्लाभिः प्रस्फुटिताभिः स्थलकमलिनीभिः स्थलपद्मिनीभिः लोहिन्यो रक्तवर्णाः ताभिः तादृशीभिः। मारीच एतन्नामाऽसुर एव मायामृगः व्याजेन मृगरूपधारी तेन अवलूनानि पूर्वं ग्रासाय छिन्नानि पश्चात् प्ररूढानि समुपजातानि वीरुधां लतानां दलानि पर्णानि यासु ताभिः तादृशीभिः 'पत्रं पलाशं छदनं दलः पर्णं छदः पुमान्' इत्यमरः। तथा दाशरथेः रामचन्द्रस्य चापकोट्या कार्मुकाग्रेण क्षतानि उत्खातानि यानि कन्दानि वृक्षमूलानि तेषां गर्त्तैः भूविवरैः विषमितानि उच्चनीचतां प्राप्तानि तलानि ऊर्ध्वदेशा यासां ताभिः तादृशीभिः, दण्डकारण्यस्य दण्डकसंज्ञकवनस्य स्थलीभिः स्थूलभूमिभिः उपशोभितः शोभां लम्भितः प्रान्तः पश्चात्प्रदेशो यस्य स तं तादृशम्।

आगृहीतेति। आगृहीताः पार्थक्येनाग्निहोत्रादिकार्यसाधनाय सम्यगात्ताः समिध एधांसि, कुशा दर्भाः, कुसुमानि प्रसूनानि, मृदो मृत्तिकाः यैस्ते तैस्तादृशैः। अध्ययनेन गुरुमुखोच्चारणानन्तरं तथाविधवेदपारायणेन मुखराः शब्दायमाना ये शिष्या अन्तेवासिनः तैरनुगतैः युक्तैः, सर्वतः समन्तात् प्रविशद्भिः प्रवेशं विदधद्भिः मुनिभिः ऋषिभिः ( करणैः ) अशून्यः अविरहितः परिपूर्णः उपकण्ठो निकटदेशो यस्य तं तादृशम्। उत्कण्ठितेति। उत्कण्ठितेन घटपूरणध्वनौ जलदगर्जनभ्रान्त्या समुत्पन्नोत्कण्ठेन शिखण्डिमण्डलेन

था, भ्रमरगणके झङ्कारसे परमसुगन्धित समस्त आम्रवृक्ष मुखरित हो रहा था, उन्मत्त कोकिलगण मधुर और अस्फुट कोलाहल करते थे, विकसित केतकी पुष्पके परागसमूहसे वह वन पिङ्गलवर्ण हो गया था, वनदेवतायें क्षुद्र गुवाक ( सुपारी ) वृक्षके दोला पर आरोहण कर रही थीं, पापविनाशसूचक, अत्यन्त शुभ्रवर्ण और वायुवेगसे कम्पितपुष्पसमूह नक्षत्र वृष्टिके समान अविश्रान्त पतित हो रहे थे। एवं उस वनमें वृक्षसमूह परस्पर संलग्न थे। और दण्डकारण्यके एक अंशसे उस आश्रमका प्रान्तभाग शोभायमान था, कृष्णसार ( मृग ) गण निर्भय चित्तसे रह कर दण्डकारण्यके उस अंशको विचित्र कर रहे थे, विकसित स्थलकमलसे वह रक्तवर्ण हो गया था, मारीचराक्षस मृगरूप धारण कर उस वनका जो समस्त लता–पत्रको भक्षण कर लिया था, वे पत्र सब फिरसे उत्पन्न हो गये थे, रामचन्द्रजीके धनुषके अग्रद्वारा जो समस्त कन्द उत्तोलन किये गये थे, उस समयमें भी उसका गर्त्त समूह था

१...केतकमञ्जरीरजः, केतकीरजः···। २ तारकावृष्टिम् ३ क्वचित् 'काननैः' इति पाठो नास्ति। ४ सारसारङ्ग। ५ क्वचित् 'स्थल' इति पाठो न विद्यते। ६ मारीचि। ७ रूढ। ८···कन्दर···। ९ मृत्तिकैः। १० शिष्यागतैः। ११ प्रसरद्भिः। १२ अविशून्य। १३ उत्कण्ठ··· ।

शिखण्डिमण्डल-श्रूयमाणजल-कलस-पूरणध्वानम्, अनवरताज्याहुतिप्रीतैश्चित्रभानुभिः सशरीरमेव मुनिजनममरलोकं निनीषुभिः, उद्धूयमान-धूम-लेखाच्छलेनाबध्यमान-स्वर्ग-मार्ग-गमन-सोपान-सेतुमिवोपलक्ष्यमाणम्, आसन्नवर्त्तिनीभिस्तपोधन-सम्पर्कादिवापगत-कालुष्याभिः, तरङ्ग-परम्परा-संक्रान्त-रविविम्ब-पङ्क्तिभिः, तापसदर्शनागत सप्तर्षि-माला विगाह्यमानाभिरिव, अतिविकच-कुमुदवनमृषिजनमुपासितुमवतीर्णं ग्रहगणमिव निशासूद्वहन्तीभिर्दीर्घिकाभिः परिवृतम्, अनिलावनमित-शिखराभिः प्रणम्यमानमिव वनलताभिः, अनवरत-

मयूरगणेन श्रूयमाणः निशम्यमानः जलैः सलिलैः कलसपूरणस्य घटपूरणस्य ध्वानः शब्दो यस्मिन् स तं तादृशम्।

अनवरतेति। अनवरतं निरन्तरम् आज्यानां सर्पिषाणां हविषाम् आहुतिभिः हवनैः प्रीताः सन्तुष्टाः तैः तादृशैः चित्रभानुभिः दक्षिणाग्निगार्हपत्याग्न्याहवनीयाग्निरूपैः त्रिभिर्वह्निभिः सशरीरमेव सविग्रहमेव मुनिजनम् ऋषिगणम् अमरलोकं देवलोकं निनीषुभिः नेतुमिच्छुभिः, उद्धूयमाना पवनेन सञ्चाल्यमाना या धूमलेखा उपरिगामिनी पारम्पर्येण वह्निकेतनश्रेणिः तस्याः छलेन कपटेन आबध्यमानः विरच्यमानः स्वर्गमार्गगमनाय देवलोकमार्गगमनार्थं सोपानसेतुमिव सोपानसदृशीं लोकद्वयसंयोजिकापङ्क्तिमिव उपलक्ष्यमाणं ध्वन्यमानम्।

इह धूमलेखां संगोप्य स्वर्गगमनसोपानसेतुत्वोत्प्रेक्षणात् सापह्नवोत्प्रेक्षा।

आसन्नेति। आसन्नवर्त्तिनीभिः निकटस्थायिनीभिः, तपोधनानां तापसानां मुनीनां सम्पर्कादिव सम्बन्धादिव अपगतं विलीनं कालुष्यं मालिन्यं यासां ताभिः। तरङ्गपरम्परासु कल्लोलपङ्क्तिषु सङ्क्रान्ताः प्रतिफलिताः रविविम्बपङ्क्तयः सूर्यविम्बराजयः यासु ताभिः तादृशीभिः, अत एव तापसानां जावाल्यादिमुनिजनानां दर्शनाय सजातिप्रेम्णा साक्षात्काराय आगतया प्राप्तया सप्तर्षिमालया मरीच्यप्रभृतिदेवर्षिपङ्क्त्या विगाह्यमानाभिः विलोड्यमानाभिरिव वर्तमानाभिः। अनेन सप्तर्षीणां रविप्रतिविम्बतुल्यत्वं सूचितम्। तथा निशासु क्षणदासु ऋषिजनं जावाल्यमुनिमण्डलम् उपासितुं सेवितुम् अवतीर्णम् उपरिष्टात्प्राप्तं ग्रहगणमिव नक्षत्रमण्डलमिव अतिविकचकुमुदवनं पूर्णविकसितकैरवविपिनम् उद्वहन्तीभिः धारयन्तीभिः दीर्घिकाभिः वापीभिः परिवृतं परिवेष्टितम्।

इह 'तपोधनसम्पर्कादिव' इत्यत्र हेतूत्प्रेक्षा, विगाह्यमानाभिः' इत्यत्र क्रियोत्प्रेक्षा, 'ग्रहगणमिव' इत्यत्र जात्युत्प्रेक्षा।

अनिलेति। अनिलेन पवनेन अवनमितानि अवनम्रीभूतानि शिखराणि अग्रभागा यासां ताभिः तादृशीभिः वनलताभिः वनव्रततिभिः प्रणम्यमानमिव नमस्क्रियमाणमिव। इह क्रियोत्प्रेक्षा।

अनवरतेति। अनवरतं निरन्तरं मुक्तानि त्यक्तानि कुसुमानि पुष्पाणि यैस्तैस्तादृशैः पादपैः तरुभिः अभ्यर्च्यमानमिव पूज्यमानमिव।

अत्र क्रियोत्प्रेक्षालङ्कारः।

वही वनको उच्च नीच किया हुआ था, मुनिगण समित्, कुश, पुष्प और मृत्तिका ग्रहण कर समस्त दिशाओंसे प्रवेश करते हुए इस आश्रमके समीपवर्ती स्थानको पूर्ण करते थे। उस समय उन लोगोंके शिष्यगण भी वेदपाठ करते करते उनके पीछे पीछे प्रवेश करते थे। मयूरगण मेघगर्जनभ्रमसे उत्कण्ठित होकर जलद्वारा कलश परिपूर्ण करनेका शब्द सुनते थे। अग्निदेव, अविश्रान्त घृतके आहुतिसे सन्तुष्ट होकर, मुनिगणको इस शरीरसे ही स्वर्ग जानेकी इच्छा उत्पन्न कर वायुके वेगसे कम्पित अविच्छिन्न धूमधाराके ब्याजसे स्वर्ग जानेके लिये मानो मृत्युलोकसे एक सोपानमय सेतु निर्माण करते थे। समीपवर्ती अनेकों दीर्घिकाद्वारा वह आश्रम परिवेष्टित था। तपस्विगणके संसर्गसे मानो वह दीर्घिकासमूह निर्मल हो गया था। उस दीर्घिकासमूहके प्रत्येक तरङ्गके ऊपर सूर्यका प्रतिविम्ब पतित हो रहा था, अत एव मानो यह बोध होता था कि जावालिप्रभृति तपस्विगणके सहित साक्षात् करनेके लिये आगत सप्तर्षिगण अवगाहन कर रहे थे। मुनिगणके उपासनाके लिये अवतीर्ण नक्षत्र समूहके समान कुमुदसमूह रात्रिमें उस दीर्घिकासमूहके मध्यमें विकसित हो रहा था। वनके लतासमूह, वायुके वेगसे अपने मस्तकको अवनतकर मानो प्रणामकर

१···मण्डली मण्डल···। २ तपोवन···। ३ क्वचित् 'विम्ब' इति पाठो नास्ति। ४ विकच···। ५...शिखाभिः।

मुक्त-कुसुमैरभ्यर्च्यमानमिव पादपैः, आबद्ध-पल्लवाञ्जलिभिः उपास्यमानमिव विटपैः, उटजाजिर-प्रकीर्ण-शुष्यच्छ्यामाकम्, उपसंगृहीतामलक-लवली-लवङ्ग-कर्कन्धू-कदली-लकुच-चूत-पनस-तालफलम्, अध्ययनमुखर-वटुजनम्, अनवरत श्रवण-गृहीत-वषटकार-वाचाल-शुककुलम्, अनेक-सारिकोद्घुष्यमाण-सुब्रह्मण्यम्, अरण्य-कुक्कुटोपभुज्यमान-वैश्वदेव-बलिपिण्डम्, आसन्न-वापी कलहंसपोत-भुज्यमान-नीवारबलिम्, एणी-जिह्वापल्लवोपलिह्यमान मुनिबालकम्, अग्निकार्य्यार्द्धदग्धसिमसिमायमान कुश समित्कुसुमम्, उपल-भग्न-नारिकेल-रसस्निग्धशिलातलम्, अचिर-क्षुण्ण-वल्कल-रस-पाटलभूतलम्, रक्तचन्दनोप-

आबद्धेति । आबद्धा विनिर्मिताः पल्लवा एव किसलयान्येव अञ्जलयः यैस्तैस्तादृशैः विटपैः स्कन्धैः उपास्यमानमिव सेव्यमानमिव । इह 'पल्लवा एवाञ्जलयः' इत्यत्र निरङ्गकेवलरूपकम्, 'उपास्यमानमिव' इत्यत्र क्रियोत्प्रेक्षा चेत्यनयोरङ्गाङ्गिभावेन साङ्कर्यात् सङ्करालङ्कारः ।

उटजेति । उटजानां पर्णशालानां 'पर्णशालोटजोऽस्त्रियाम्' इत्यमरः, अजिरेषु प्राङ्गणेषु प्रकीर्णाः प्रसारिताः; अत एव शुष्यन्तः सूर्यतेजसा शुष्कतां प्राप्नुवन्त श्यामाका धान्यविशेषाः यत्र स तं तादृशम् । एषां शोषणं पर्णशालाच्छदिषामावरणार्थमिति ज्ञेयम् ।

उपसंगृहीतेति । उपसंगृहीतानि तत्र तत्रैकत्रीकृतानि, आमलकं धात्री, लवली लताविशेषः, लवङ्गं स्वनामप्रसिद्धम्, कर्कन्धूर्बदरी, कदली रम्भा, लकुचो डहुः, चूत आम्रः, पनसं कण्टकी, तालं तृणराजश्च एतानि फलानि यत्र स तं तादृशम् । भक्षणार्थमेतेषामेकत्रानयनम् ।

अध्ययनेति । अध्ययनेन वेदानां गुरुमुखोच्चारणानुच्चारणेन मुखराः शब्दायमाना वटुजना ब्रह्मचारिवर्गाः यत्र स तं तादृशम् ।

अनवरेति । अनवरतश्रवणेन निरन्तराकर्णनेन गृहीताः शिक्षां प्राप्ताः ये वषट्काराः हविःसमर्पण-मन्त्राः तैः तदभ्यासैरित्यर्थः वाचालं शब्दायमानं शुककुलं कीरगणं यस्मिन् स तं तादृशम् ।

अनेकेति । अनेकाभिः बह्वीभिः सारिकाभिः पीतपादाभिः उद्घुष्यमाणम् उच्चस्वरेणाभ्यस्यमानं सुब्रह्मण्यं वेदो यत्र स तं तादृशम् । तासामपि तदाकर्णनेन शिक्षणादित्याशयः ।

अरण्येति । अरण्यकुक्कुटैः वनचरणायुधैः 'कुक्कुटश्चरणायुधः' इत्यमरः, उपभुज्यमाना भक्ष्यमाणा वैश्वदेवबलिपिण्डा पञ्चमयामार्द्धदत्तदेवयज्ञोद्देश्यकहन्तकारा यत्र तम् । एवंविधिः नित्यकर्मपद्धत्यादौ स्पष्टम् ।

आसन्नेति । आसन्नवापीनां निकटवर्त्तिदीर्घिकाणां ये कलहंसपोताः कलहंसशिशवः तैः भुज्यमाना भक्ष्यमाणा नीवाराणां मुन्यन्नानां बलय उपायनानि यस्मिन् तं तादृशम् ।

एणीति । एणीभिः हरिणीभिः जिह्वापल्लवैः प्रसारितरसनैः ( करणैः ) उपलिह्यमाना आस्वाद्यमाना स्पर्शनं क्रियमाणा इत्यर्थः मुनिबालका ऋषिकुमारा यस्मिन् स तं तादृशम् ।

अग्नीति । अग्निकार्ये हवने अर्द्धदग्धानि अर्द्धभस्मीभूतानि अत एव सिमसिमायमानानि 'सिम सिम' इत्येवं शब्दं विधीयमानानि कुशसमित्कुसुमानि दर्भैधःपुष्पाणि यत्र तं तादृशम् ।

उपलेति । उपलैः प्रस्तरैः भग्नानि प्रस्तरान्तरेषु निधाय मर्दितानि यानि नारिकेलानि लाङ्गलीफलानि तेषां रसैः द्रवैः सलिलैर्वा स्निग्धानि चिक्कणानि तैलाक्तीकृतानि वा शिलातलानि शय्याभूतप्रस्तरा यत्र तत्र ।

अचिरेति । अचिरक्षुण्णानां तरुभ्यः तत्कालनिःसरितानां वल्कलानां त्वचां रसैः निर्यासैः पाटलं श्वेत-रक्तरूपं भूतलं पृथ्वीतलं यस्मिन् स तं तादृशम् ।

रक्तेति । रक्तचन्दनेन पत्राङ्गेन उपलिप्ते आलिखिते आदित्यमण्डले रविबिम्बे निहितम् आदित्याय

रहे थे । वृक्षगण अविश्रान्त कुसुम निक्षेप कर मानो पूजा कर रहे थे । वृक्षके शाखासमूह पल्लवरूप अञ्जलि बन्धन कर मानो उपासना कर रहे थे । पर्णशालाके प्राङ्गणमें प्रसारित श्यामाक घास धूपमें सूख रहा था । आमलकी, लवली, लवङ्ग कर्कन्धू ( बेर ) कदली, लकुच, आम, कटहल और तालफल संगृहीत था । ब्राह्मण बालकगण वेदध्वनि कर रहे थे । शुकपक्षीगण, अनवरत श्रवण करनेसे अभ्यस्त आहुतिके समस्त मन्त्र उच्चारण कर रहे थे । बहुतेर सारिकायें उच्चस्वर से वेदपाठ करती थीं । वनकुक्कुटगण वैश्वदेवके अन्नभोजन करते थे । निकट दीर्घिकास्थित हंस-शिशुगण नीवार

१...पल्लवपुटाञ्जलिभिः । २ 'लवङ्ग' इति पाठः क्वचिन्नास्ति । ३ 'पनस' इत्यस्यापि पाठः क्वचिन्नास्ति । ४...मिसमिसायमान,...मिसिमिसायमान, सिमिसिमायमान । ५...समित्कुश । ६...नारिकेर...

लिप्तादित्यमण्डलं-निहित-करवीर-कुसुमम् , इतस्ततो विक्षिप्त-भस्मलेखा-लङ्कृतं-मुनिजन-भोजन-भूमिभागम् , परिचित-शाखामृग-कराकृष्टयष्टि-निष्काश्यमान प्रवेश्यमान-जरदन्ध-तापसम् , इभ-करभकार्द्धोपभुक्तपतितैः सरस्वती-भुजलता-विगलितैः शङ्खवलयैरिव मृणाल-शकलैः कल्माषितम् , ऋषिजनार्थमेणकैर्विषाण-शिखरोत्खन्यमानविविध-कन्दमूलम् , अम्बु-पूर्णपुष्कर-पुटैर्वनकरिभिरापूर्य्यमाण-विटपालबालकम् , ऋषिकुमारकाकृष्यमाणवनवराह-

समर्प्य स्थापितं करवीरकुसुमं हयमारपुष्पं यस्मिन् स तं तादृशम् ।

इत इति । इतस्ततः समन्तात् विक्षिप्ताभिः प्रसृताभिः भस्मनां भूतीनां 'भूतिर्भसितभस्मनि' इत्यमरः, लेखाभिः पङ्क्तिभिः अलङ्कृताः सीमाबद्धीविधानात् भूषिताः मुनिजनानाम् ऋषिगणानां भोजन-भूमिभागा भक्षणस्थलदेशा यस्मिन् स तं तादृशम् । पादस्पर्शाद्विनिवृत्तये भस्मरेखाचिह्नितत्वमित्याशयः ।

परिचितेति । परिचितैः पूर्वत एव समुत्पन्नपरिचयैः शाखामृगैः कपिभिः कराकृष्टयष्ट्या हस्ताकर्षित-लगुडेन निष्काश्यमानाः केचिद्भवनाद्बहिः निःसार्यमाणाः केचिद्भवनमध्ये पूर्यमाणाश्च जरन्तः परिणतवयाः अन्धाः नेत्रहीनाः तापसाः तपस्विनो यस्मिन् स तं तादृशम् ।

इभेति । इभकरभकैः हस्तिशावकैः अर्द्धोपभुक्तैः अर्द्धचर्वितैः पश्चात् पतितैः कथमपि तन्मुखेभ्यश्च्युतैः, सरस्वत्या भारत्या भुजलताया बाहुवल्ल्याः सकाशात् विगलितैः स्रस्तैः शङ्खवलयैरिव त्रिरेखकटकैरिव विद्यमानैः मृणालशकलैः विसखण्डैः कल्माषितं कर्बुरितम् । 'शङ्खवलयैरिव'इत्यत्र जात्युत्प्रेक्षा । ततश्च सरस्वत्या अनवरतस्थितत्वं गम्यते इत्यलङ्कारेण वस्तुध्वनिः ।

ऋषीति । ऋषिजनार्थं मुनिगणभक्षणार्थम् एणकैः हरिणैः ( कर्तृभिः ), विषाणशिखरैः शृङ्गप्रान्तैः ( करणैः ) उत्खन्यमानानि उत्पाट्यमानानि विविधानि अनेकानि विचित्राणीत्यर्थः कन्दाः शालूकानि पङ्कजादीनां मूलानीत्यर्थः, मूलानि मूलकप्रभृतीनि च यस्मिन् स तं तादृशम् ।

अम्बुपूर्णेति । वनकरिभिः अरण्यहस्तिभिः ( कर्तृभिः ) अम्बुभिः सलिलैः पूर्णानि भृतानि यानि पुष्करपुटानि शुण्डाग्राणि तैः तादृशैः ( करणैः ) 'शुण्डाग्रं त्वस्य पुष्करम्' इत्यमरः, आपूर्यमाणानि क्रियमाणानि विटपानां खण्डयित्वा समादाय रोपितानां स्कन्धानाम् आलवालानि आवापस्थानानि तरुमूलसलिलधारणगर्तानीत्यर्थः यस्मिन् स तं तादृशम् ।

ऋषीति । ऋषिकुमारकैः मुनिशिशुभिः आकृष्यमाणानि आकर्षणं क्रियमाणानि वनवराहाणाम् अरण्यशूकराणां दंष्ट्रान्तरालग्नानि दशनमध्यसंसक्तानि शालूकानि पद्मानां कन्दा मूलानीति तात्पर्यम् यस्मिन् तं तादृशम् । 'शालूकमेषां कन्दः स्यात्' इत्यमरः ।

धान्य भोजन करते थे । मृगीगण जिह्वाद्वारा तपस्विबालकोंको चाटती थी । होमकुण्डमें निक्षिप्त अर्द्धदग्ध कुश, समिध् और पुष्प 'सिम सिम' शब्द करते थे । प्रस्तरद्वारा नारिकेल भग्न करने पर उसके जलसे नीचेके प्रस्तर सिक्त होते थे । वृक्षसे तत्काल आनीत वल्कलके रससे भूतल लोहितवर्ण हो जाता था । भूतलमें रक्तचन्दनद्वारा चित्रित सूर्यमण्डलके ऊपर निवेदित करवीर पुष्प स्थापित था । अनेक भस्मरेखाद्वारा तपस्वीगणका भोजन स्थान-विभक्त किया हुआ था । परिचित वानरगण, हस्तद्वारा यष्टि आकर्षण कर किसी किसी प्राचीन अन्ध मुनिको गृहसे बाहर करते थे । और किसी किसी प्राचीन अन्ध मुनिको गृहमध्यमें प्रवेश करते थे । हस्तिशिशुगण अर्द्धांश भोजन कर किसी कारणसे उनके मुखसे निपतित मृणाल-खण्डशकल, वाग्देवीके हस्तसे स्खलित शङ्खवलयके समान रह कर आश्रमको विचित्र करता था । तपस्विगणके भोजनके निमित्त हरिणगण शृङ्गके द्वारा अनेकविध शालुक ( पद्ममूल ) और मूल उखाड़ते थे । वन्यहस्तिगण जलपूर्ण शुण्डाग्रद्वारा, रोपित शाखाके (कलमी पेड़के) आलबालको पूर्ण करते थे । तपस्वी-कुमारगण वन्यशूकरगणके दन्तमध्यमें संलग्न शालूकका आकर्षण करते थे । परिचित मयूरगण

१ मण्डलकनिहित । २ ...लेखाकृत...भोजनभूमिपरिहारम् । ३ ...कराकृष्टिनिष्काश्यमान... । ४ कलभक । ५...बाहुलताविभूषणैः ।

दंष्ट्रान्तराल-लग्न-शालूकम्, उपजात-परिचयैः कलापिभिः पत्त्रपुटपवन-सन्धुक्ष्यमाण-मुनि-होम-हुताशनम्, आरब्धामृत-चरु-चारुगन्धम्, अर्द्धपक्व-पुरोडाश-पुण्य-परिमलामोदितम्, अविच्छिन्नाज्यधारा-हुति-हुतभुग्हुङ्कार-मुखरितम्, उपचर्य्यमाणातिथिवर्गम्, पूज्यमान-पितृ-दैवतम्, अर्च्यमान हरि-हर-पितामहम्, उपदिश्यमान-श्राद्धकल्पम्, व्याख्यायमान-यज्ञविद्यम्, आलोच्यमान-धर्म्मशास्त्रम्, पठ्यमान-विविध-पुस्तकम्, विचार्य्यमाण-सकल-शास्त्रार्थम्, आरभ्यमाण-पर्णशालम्, उपलिप्यमानाजिरम्, उपमृज्यमानोटजाभ्यन्तरम्,

---

उपजातेति । उपजातपरिचयैः पूर्वस्मादेव ऋषीणामहिंस्रस्वभावज्ञायिभिरिति यावत् । कलापिभिः मयूरैः पत्त्रपुटानां छदपुटानां पवनेन वातेन सन्धुक्ष्यमाणाः प्रज्वाल्यमाना ऋषीणां हवनार्थं हुताशना अग्नयो यत्र तं तादृशम् । उक्तविशेषणदानैः तपोवनस्यात्यन्तशान्तत्वं व्यञ्जितम् ।

आरब्धेति । आरब्धः पचनाय प्रवर्तितः योऽमृतचरुः आज्ययुक्तयवौदनः तस्य चारुः मनोहरः गन्ध आमोदो यत्र स तं तादृशम् ।

अर्द्धेति । अर्द्धपक्वः अर्द्धविक्लितिमापन्नो यः पुरोडाशः हवनीयद्रव्यविशेषः तस्य पुण्यपरिमलेन सौरभेण आमोदितं हर्षितम् ।

अविच्छिन्नेति । अविच्छिन्ना अत्रुटिता या आज्यधारा सर्पिःसम्पातः तस्या आहुत्या हवनेन यो हुतभुजः अग्नेः हुङ्कारः 'हुं' इति शब्दः तेन मुखरितं वाचालितम् । अत्र 'हुतभुग्झङ्कार' इति पाठो न निर्दुष्टः, अग्नेः झङ्कारोत्पादनाभावनात् ।

उपचर्येति । उपचर्यमाणः सत्कारं प्राप्यमाणः अतिथिवर्गः अभ्यागतसमूहो यत्र तं तादृशम् ।

पूज्यमानेति । पूज्यमानानि आभ्युदयिकादिश्राद्धेन षोडशोपचारादिना पञ्चोपचारादिना वा अर्च्यमानानि पितरः पितृपितामहादयः दैवतानि देवताश्च यत्र तं तादृशम् । षोडशोपचाराणां पञ्चोपचाराणाञ्च आह्निककृत्यादौ नियमा द्रष्टव्याः ।

अर्च्यमानेति । अर्च्यमानाः पूज्यमानाः, हरिर्नारायणः, हरो महेश्वरः, पितामहः प्रजापतिश्च एते यस्मिन् स तं तादृशम् ।

उपदिश्येति । उपदेश्यमानः पाठ्यमानः श्राद्धकल्पः आश्वलादिनिर्मितः श्राद्धविधिर्यत्र तं तादृशम् ।

व्याख्ययेति । व्याख्यायमाना अर्थद्वारा प्रतिपाद्यमाना यज्ञविद्या दर्शपौर्णमासादियज्ञविधायकशास्त्रं यस्मिन् स तं तादृशम् ।

आलोच्येति । आलोच्यमानानि हृदये विचार्यमाणानि धर्मशास्त्राणि मन्वादिप्रणीतसंहिता यस्मिन् स तं तादृशम् ।

पठ्येति । पठ्यमानानि अधीयमानानि विविधानि अनेकप्रकाराणि पुस्तकानि शास्त्राणि यत्र तादृशम् ।

विचार्येति । विचार्यमाणा युक्त्या स्थाप्यमानाः सकलशास्त्रार्थाः समस्तवेदादिविषया यस्मिन् स तं तादृशम् ।

आरभ्येति । आरभ्यमाणाः नूतना विरचितुं प्रवर्त्यमानाः पर्णशालाः उटजा यस्मिन् स तं तादृशम् ।

उपलिप्येति । उपलिप्यमानानि गोमयादिना लिम्पनं क्रियमाणानि अजराणि प्राङ्गणानि यत्र तं तादृशम् । 'अजिरं चत्वरोऽङ्गणम्' इत्यमरः ।

उपमृज्येति । उपमृज्यमानानि शोधिन्यादिना परिष्क्रियमाणानि उटजानां पर्णशालानाम् अभ्यन्त-

---

पत्त्रपुटके वायुद्वारा तपस्वीगणके होमाग्नि प्रज्वलित कर देते थे । पच्यमान घृताक्त चरुके मनोहर गन्ध बहिर्गत होते थे । अर्द्धपक्व पुरोडाशके पवित्र गन्धसे आश्रम आमोदित किया जाता था । अविच्छिन्न घृतधाराके आहुतिद्वारा होमाग्निसे 'हुं हुं' शब्द उठकर आश्रमको मुखरित करता था । कोई कोई अतिथिवर्गकी सेवा करते थे । कोई पितृश्राद्धादिद्वारा पितरों एवं देवोंको तृप्ति कर थे । भिन्न भिन्न स्थानमें ब्रह्मा, विष्णु और शिवकी पूजा हो रही थी । कोई गोभिलादि प्रणीत श्राद्धकल्प पढ़ा रहे थे । कोई यज्ञशास्त्रकी व्याख्या कर रहे थे । बहुत लोग धर्मशास्त्रकीआलोचना कर रहे थे । किसी स्थानमें कोई अनेकविध पुस्तक पाठ कर रहे थे । बहुत लोग समस्त शास्त्रके अर्थ लेकर विचार करते थे । कोई पर्णशाला निर्माण करनेके लिये आरम्भ कर रहे थे । कोई चत्वरको लिम्पन (गोमयादि से) कर रहे थे । कोई

---

१...पुण्यपरिमला, पुरोडाशपरिमला··· । २ उग्रहुङ्कार..., झङ्कार··· । ३ अभ्यर्च्यमान··· । ४ उद्दिश्यमान... । ५ अवलोक्यमान । ६ वाच्यमान... । ७ अपमृज्यमान... ।

आबध्यमानध्यानम् , साध्यमान-मन्त्रम् , अभ्यस्यमान-योगम् , उपह्रियमाण-वनदेवताबलिम्[1], निर्वर्त्यमान-मौञ्जं-मेखलम्[2] , प्रक्षाल्यमान-वल्कलम्[3] , उपसंगृह्यमाण-समिधम्[4] , संस्क्रियमाण-कृष्णाजिनम् , गृह्यमाण-गवेधुकम्[5] , शोष्यमाण-पुष्कर-बीजम्[6] , ग्रथ्यमानाक्षमालम् , गृह्यमाण-त्रिपुण्ड्रकम्[7] , न्यस्यमान-वेत्रदण्डम्[8] , आपूर्यमाण-कमण्डलुम् , अदृष्टपूर्वं कलिकालस्य, अपरिचितमनृतस्य, अश्रुतपूर्वमनङ्गस्य, अब्जयोनिमिव त्रिभुवन-वन्दितम् , असुरारिमिव प्रक-

राणि मध्यानि यस्मिन् स तं तादृशम् ।

आबध्येति । आबध्यमानं विधीयमानं ध्यानम् एकप्रत्ययधारा यत्र तं तादृशम् ।

साध्येति । साध्यमानः हवनादिना सिद्धिं लभमानः मन्त्रो यस्मिन् तं तादृशम् ।

अभ्यस्येति । अभ्यस्यमानः मुहुर्मुहुः क्रियमाणः योगः चित्तवृत्तिनिरोधो यस्मिन् तं तादृशम् ।

उपह्रियेति । उपह्रियमाणा समर्प्यमाणाः वनदेवताभ्यः अरण्याधिष्ठातृभ्यो बलयः पूजावस्तूनि यस्मिन् तं तादृशम् ।

निर्वर्त्येति । निर्वर्त्यमाना निष्पाद्यमाना मौञ्जी मुञ्जनिर्मिता मेखला काञ्ची यस्मिन् तं तादृशम् ।

प्रक्षाल्येति । प्रक्षाल्यमानं जलेन निर्मलीक्रियमाणं वल्कलं त्वक् यस्मिन् तं तादृशम् ।

उपेति । उपसंगृह्यमाणा उपादीयमानाः समिध एधांसि यस्मिन् तं तादृशम् ।

संस्क्रीति । संस्क्रियमाणं पिच्छकादिना विशुद्धीक्रियमाणं कृष्णाजिनं [कृष्णसारमृगचर्म यस्मिन् तं तादृशम् ।

गृह्येति । गृह्यमाणा आदीयमाना गवेधुकाः कन्दा धान्यविशेषा यत्र तं तादृशम् ।

शोष्येति । शोष्यमाणानि घर्मेण शोषं प्राप्यमाणानि पुष्कराणां कमलानां बीजानि फलानि यस्मिन् तं तादृशम् । जपमालाविरचनायैतदित्यवगन्तव्यम् ।

ग्रथ्येति । ग्रथ्यमाना ग्रन्थिः विरच्यमाना यत्र एवम्भूता अक्षमालारुद्राक्षमाला यत्र तं तादृशम् ।

गृह्यमाणेति । गृह्यमाणं भाले धार्यमाणं त्रिपुण्ड्रकं भस्मना रेखात्रयं यस्मिन् तं तादृशम् ।

न्यस्येति । न्यस्यमानः दूरादेत्य पृथिव्यां स्थाप्यमानः वेत्रदण्डः वेतसलगुडो यस्मिन् तं तादृशम् ।

आपूर्येति । आपूर्यमाणः सलिलैः भ्रियमाणः कमण्डलुः पूजनार्थं जलाधारपात्रविशेषो यत्र तं तादृशम् । एतेषु यत्र यथायोग्यं कर्तृपदं 'कैश्चित्' 'केनचित्' इत्यादिकं निवेशनीयम् ।

अदृष्टेति । कलिकालस्य कलियुगस्य नास्ति दृष्टम् अवलोकनं पूर्वं यस्मिन् तं तादृशम् । एवमपरयोरपि । कलिप्रवेशानर्हमित्याशयः, अनेन सर्वथा अधर्माभाव इति प्रतीयते । अनृतस्य असत्यस्य अपरिचितम् अपरिचयः, सततं सत्याचारादित्याशयः । अनङ्गस्य कामदेवस्य, अश्रुतपूर्वम् अनाकर्णितपूर्वम्, कामजनितविकारानुपलम्भादित्याशयः ।

अब्जयोनिमिति । अब्जयोनिमिव प्रजापतिमिव, त्रिभुवनवन्दितं जगत्त्रयपूजितम्, असामान्यधर्मस्थानत्वात् सृष्टिकर्तृत्वाच्चेत्याशयः ।

असुरेति । असुराः राक्षसाः तेषाम् अरिः शत्रुः विष्णुः तमिव, 'रिपौ वैरिसपत्नारि' इत्यमरः, प्रकटितानि प्रकाशितानि वराहाः शूकराः, नरा मनुष्याः, सिंहा मृगेन्द्राः, रूपाणि मृगाश्च येन तं तादृशम् 'रूपं मृगेऽपि विज्ञेयम्' इति हलायुधः, पक्षे—प्रकटिते व्यक्तीकृते वराहनरसिंहयोः शूकरावतार-नृसिंहावतारयो रूपे स्वरूपे येन तं तादृशम् ।

पर्णशालाके अभ्यन्तर सम्मार्जन्यादिद्वारा परिष्कार कर रहे थे । कोई ध्यान, कोई मन्त्रसाधना और कोई योगाभ्यास कर रहे थे । कोई वनदेवताओंको पूजाका उपहार दे रहे थे । कितने मुञ्जद्वारा मेखला निर्माण करते थे । कितने कृष्णसार ( मृग ) के चर्मको पिच्छकादिद्वारा विशुद्ध करते थे । कितने गवेधुकाधान्य लाते थे । कितने कमलके बीजोंको आतप द्वारा सुखा रहे थे । कितने जपकी मालायें गूँथ रहे थे । कितने त्रिपुण्ड्रधारण कर रहे थे । कितने वेत्रयष्टि रखते थे । कितने कमण्डलुसे जलपूर्ण करते थे । कलिकाल उस आश्रमको नहीं देखा था । मिथ्याका परिचय वहां नहीं था, एवं कामदेवका उस आश्रममें संवाद सुननेमें नहीं था; और ब्रह्माके समान वह आश्रम त्रिभुवनका

१ उपहूयमान...। २ मुञ्ज...। ३ क्षाल्यमान···। ४ उपसंस्क्रियमाण...। ५ निगृह्यमाण...। ६ पोष्यमाण...। ७ त्रिपुण्ड्रकपूर्यमाण। ८ त्रिदण्डकम् , सक्रियमाणपरिव्राजकम् ।

टित वराहनरसिंहरूपम्, सांख्यमिव कपिलाधिष्ठितम्, मथुरोपवनमिव बलावलीढ-दर्पित-धेनुकम्, उदयनमिवानन्दितवत्स-कुलम्, किम्पुरुषाधिराज्यमिव मुनिजन-गृहीत-कलसा-भिषिच्यमान-द्रुमम्, निदाघसमयावसानमिव आसन्न-जलप्रपातम्, जलधरसमयमिव वन-गहन-मध्य-सुख-सुप्त-हरिम्, हनूमन्तमिव शिला-शकल प्रहार-सञ्चूर्णिताक्षा-स्थिसञ्चयम्,

सांख्यमिति । सांख्यं कपिलदर्शनं तमिव, कपिलया कनकाकृत्या गवा, कपिलेन सांख्यशास्त्रनिर्मात्रा ऋषिविशेषेण च अधिष्ठितम् आश्रितम् ।

मथुरेति । मथुराया एतन्नामकप्रसिद्धाया नगर्याः उपवनमिव द्वादशवनेषु गर्भितम् अरण्यमिव, बलावलीढा शारीरिकशक्तियुक्ताः अत एव दर्पिताः समुत्पन्नगर्वाः धेनवो नवप्रसवा गावो यत्र तं तादृशम् । अत्र 'शेषाद्विभाषा' इत्यनेन वैकल्पिककप्प्रत्ययः । पक्षे तु—बलावलीढः शक्तिमान् दर्पितो गर्वितश्च धेनुक एतन्नामा दैत्यो यस्मिन् तं तादृशम् ।

मथुरायां धेनुकासुरं श्रीकृष्णो निहतवानिति श्रीमद्भागवतीया कथा ।

उदेति । उदयनम् एतत्संज्ञकं पाण्डवकुलोत्पन्नं कौशाम्बीनृपतिमिव, आनन्दितं तृणसलिलदानादिना परितोषितं वत्सकुलं गोवत्सगुणो यत्र तं तादृशम्, पक्षे—आनन्दितं सदाचरणादिना सन्तोषितं वत्सकुलं वत्सप्रान्तीयजनमण्डलं येन तं तादृशम्, तस्य वत्सप्रान्तनृपतित्वात् ।

पुरा किल वत्सदेशाधिपतिरुदयनः स्वाः प्रजाः नीतिमार्गेण संरक्षन् ताः सन्तोषयामासेति कथा सोमदेवभट्टविरचिते कथासरित्सागरे जिज्ञासुभिरवलोकनीया ।

किम्पुरुषेति । किम्पुरुषाणां किन्नराणाम् अधिराज्यं प्रभुत्वमिव, मुनिजनैः ऋषिगणैः गृहीता आत्ताः कलसाः सलिलपूर्णघटाः तैः अभिषिच्यमाना आभिषेकं क्रियमाणा द्रुमा वृक्षा यत्र तं तादृशम्, पक्षे—मुनिजनगृहीतकलशैः ऋषिगणगृहीतघटैः अभिषिच्यमानः द्रुमो नामाधिपतिः यस्मिन् तत् तादृशम् ।

किम्पुरुषाणां द्रुमोनाम राजाभूदित्यस्ति प्रसिद्धिः । तञ्च मुनयः किम्पुरुषराज्ये अभिषेकञ्चक्रुरिति तत्रैव कथासरित्सागरे उपलभ्यते ।

निदाघेति । निदाघसमयो ग्रीष्मकालः तस्यावसानं शेषमिव, आसन्नौ समीपस्थायिनौ, जलं वापीसलिलं प्रपातो निर्झरश्च तौ यस्य तं तादृशम् 'प्रपातो निर्झरेऽतटे' इति मेदिनी, पक्षे—आसन्नः समीपस्थाय जलप्रपातः मेघजलपतनं यस्य तत् तादृशम् ।

जलधरेति । जलधरसमयो वर्षाकालः तमिव, वने विपिने यद्गहनं गह्वरं तस्य मध्येऽन्तः सुखेन विघ्नाभावादशङ्कितेन सुप्ता निद्रामुपगताः सिंहा मृगेन्द्रा यत्र तं तादृशम्, पक्षे—वनस्य क्षीरसमुद्रजलस्य गहने गह्वरमिव गम्भीरे मध्येऽन्तः सुखेन आनन्देन सुप्तो निद्रितो हरिर्विष्णुः यस्मिन् तं तादृशम् । 'वनं प्रस्रवणे गेहे प्रवासेऽम्भसि कानने' इति हैमः, 'गहनं गह्वरे दुःखे वने' इति त्रिकाण्डशेषः । आषाढश्रावणमासौ वर्षासमयौ, तत्राषाढे हरिः स्वपिति; भाद्रे च पार्श्वं परिवर्तते; कार्त्तिके च उत्तिष्ठतीति प्रसिद्धिः ।

हनूमन्तमिति । हनूमन्तमिव वायुतनयमिव, शिलाशकलस्य पाषाणखण्डस्य प्रहारेण निपातनेन सञ्चूर्णितः तैलसम्पादनार्थं पिष्टः अक्षाणां विभीतकफलानाम् अस्थिसञ्चयो मध्यप्रदेशसमूहो यस्मिन् ।

पूजनीय था । नारायण जिस प्रकार वराह और नरसिंह अवतार धारण किये थे, वह आश्रम भी उसी प्रकार वराह, मनुष्य, सिंह और हरिण इन सबोंको धारण किया हुआ था । सांख्यदर्शन जिस प्रकार कपिलके आश्रित है, वह आश्रम भी उसी प्रकार कपिलाधेनुगणसे आश्रित था । मथुरा नगरीके उपवनमें जिस प्रकार बलवान् एवं दर्पशाली धेनुकासुर था, उस आश्रममें भी उसी प्रकार बलवती एवं तेजस्विनी धेनुगण थी । उदयन राजा जिस प्रकार वत्सदेशीय प्रजागणको सद्व्यवहारादिद्वारा आनन्दित करते थे, उस आश्रममें मुनिगणभी उसी प्रकार गोवत्ससमूहको घासजलदानादिद्वारा आनन्दित करते थे । किंपुरुषोंके राज्यमें जिस प्रकार मुनिगण जलपूर्ण कलश धारण कर द्रुमनामक राजाको अभिषिक्त किये थे, उस आश्रममें भी उसी प्रकार मुनिगण जलपूर्ण कलशधारणकर वृक्षसमूहको अभिषिक्त करते थे । ग्रीष्मकालके शेषमें जिस प्रकार वृष्टिपात समीपवर्ती होता है, उस आश्रममें भी उसी प्रकार दीर्घिकाका और प्रस्रवण ( झरने ) का जल समीपवर्त्ती था । वर्षाकाल ( आषाढ़मास ) में नारायण जिस प्रकार गम्भीर समुद्रमध्यमें सुखपूर्वक निद्रित होते हैं, उस आश्रममें भी उसी प्रकार सिंहगण वनके अन्तर्गत गहन

१ नरहरिवराहरूपम् । २ मधुरोपवनमिव । ३...जलकलशा··· । ४ प्रत्यासन्न... । ५ प्रसुप्त । ६ अनिलसुतमिव । ७ शिलाशकलसञ्चूर्णिताक्षास्थि... ।

खाण्डव-विनाशोद्यतार्जुनमिव प्रारब्धाग्निकार्य्यम्, सुरभिविलेपनधरमपि सततविर्भूत-धूमगन्धम्, मातङ्ग-कुलाध्यासितमपि पवित्रम्, उल्लसित-धूमकेतुशतमपि प्रशान्तोपद्रवम्, परिपूर्णद्विजपति-मण्डल-सनाथमपि सदा-सन्निहित-तरु-गहनान्धकारम्, अतिरमणीयमपर-मिव ब्रह्मलोकमाश्रममपश्यम्।

---

तादृशम्, पक्षे शिलाशकलप्रहारेण सञ्चूर्णितः भञ्जितः अक्षस्य अक्षाभिधदशाननसुतस्य अस्थिसञ्चयो येन तं तादृशम्। 'अक्षो ज्ञानात्मशकटव्यवहारेषु पाशके। रुद्राक्षे रावणी सर्पबिभीतकतरावपि॥' इति हैमः।

वायुतनयो हि लङ्कादाहानन्तरं यथेच्छया चैत्यप्रासादभञ्जने प्रवृत्तस्तदा राक्षसा रावणमुपेत्य प्रोचुः। राजन्! नायं वानररूपधारी किन्तु लङ्काविनाशाय कश्चित् काल एव, अतस्तत्प्रतीकारोऽनुपदमेव चिन्तनीयः। तन्निशम्य जातक्रोधोऽक्षनामानमात्मजं सबलं तद्धननाय प्रेषयामास। तत्रोपेत्य च युयुधे, युध्यमानं तं हनूमान् निहतवान् इति रामायणीयलङ्काकाण्डीया कथा।

खाण्डवेति। खाण्डवस्य एतत्संज्ञकवनस्य विनाशे भस्मीकरणे उद्यतः तत्परो योऽर्जुनः पार्थः तमिव-प्रारब्धम् उपक्रान्तम् अग्निकार्यं हवनं यस्मिन् तं तादृशम्, पक्षे—प्रारब्धं भस्मोपद्रवनिकरणेनोपक्रान्तम् अग्निकार्यं वह्नितर्पणं येन तं तादृशम्। अत्रत्येतिवृत्तं प्रागेव प्रतिपादितम्।

'अब्जयोनिमिव' इत्यारभ्य 'खाण्डव-विनाशोद्यतार्जुनमिव' इत्यन्तं पूर्णोपमालङ्कारः। 'जलधरसमय-मिव' इत्यत्र हि पूर्णोपमा, 'वनगहन' इत्यत्र पुनरुक्तवदाभासालङ्कारश्चेत्यनयोः सङ्करः।

सुरभीति। सुरभि घ्राणतृप्तिजनकं 'सुरभिर्घ्राणतर्पणः' इत्यमरः, विलेपनम् अङ्गरागोचितं चन्दना-दिकं धरतीति सः, तं तादृशमपि, सततं निरन्तरम् आविर्भूतः प्रकटितो धूमगन्धः वह्निकेतनसौरभो य-स्मात्तं तादृशं सौरभप्रकटनसम्भवे धूमगन्धप्रकटनाद्विरोधः, सुरभेः गोः 'सुरभिर्गवि च स्त्रियाम्' इत्यमरः, विलेपनं गोमयं यस्यां सा तथोक्ता धरा पृथ्वी यत्र तं तादृशमिति तत्परिहारः।

मातङ्गेति। मातङ्गकुलेन अन्त्यजगणेन अध्यासितमपि आश्रितमपि पवित्रं पूतमिति विरोधः, मात-ङ्गकुलेन गजयूथेन अध्यासितम् इति तत्परिहारः। 'मातङ्गः श्वपचे गजे' इति विश्वः।

उल्लसितेति। उल्लसितम् ऊर्ध्वमुत्थितं धूमकेतुशतम् उत्पातग्रहशतं यत्र तथोक्तमपि प्रशान्तोपद्रवं प्रशमितविघ्नमिति विरोधः, धूमकेतवो वह्नयस्तेषां शतं समूहो यत्रेति तत्परिहारः। 'धूमकेतुः स्मृतो वह्ना-वुत्पातग्रहभेदयोः' इति विश्वः।

परिपूर्णेति। परिपूर्णेन समन्ताद्भृतेन द्विजपतिमण्डलेन चन्द्रमण्डलेन सनाथः संयुतस्तं तथोक्त-मपि, सदा सर्वस्मिन् काले सन्निहितः निकटस्थायी तरुगहनेषु वृक्षगह्वरेषु अन्धकारः तमो यत्र तं तादृश-मिति विरोधः, परिपूर्णेन ज्ञानपूर्णेन द्विजपतिमण्डलेन उत्तमब्राह्मणसमूहेन सनाथस्तं तादृशमिति तत्परि-हारः। 'द्विजराजः शशधरः' 'दन्ता विप्राण्डजा द्विजाः' इत्यमरः।

'सुरभिविलेपनधरमपि' इत्यारभ्य 'परिपूर्णे'त्यन्तं विरोधाभासोऽलङ्कारः।

अतीति। अतिरमणीयम् अत्यन्तमनोहरम् अपरम् अतिरिक्तं ब्रह्मलोकं सुरलोकमिव आश्रमं तपोभू-मिम् अपश्यम् अद्राक्षम्। इह ब्रह्मलोकमिवेति उत्प्रेक्षा।

---

बीचमें सुखपूर्वक निद्रित था। हनुमान्‌जी जिस प्रकार पाषाणखण्डके आघातसे रावणका पुत्र अक्षयकुमारका अस्थि-समूह चूर्ण किये थे, मुनिगण भी उसी प्रकार तैल निर्माण करनेके लिये पाषाणखण्डके आघातसे बहेड़ाके बीजको चूर्ण करते थे। खाण्डववन-दहन करनेमें प्रवृत्त अर्जुन जिस प्रकार अग्निके कार्य आरंभ किये थे, उस आश्रममें मुनिगण भी उसी प्रकार अग्निकार्य (होम) आरम्भ करते थे। उस आश्रममें सुगन्धि चन्दनप्रभृति अनुलेपन द्रव्य (परिहार पक्षमें—गोमयलिप्त भूमि) रहने पर भी सर्वदा धूमका गन्ध बाहर होता था। वह आश्रम चाण्डालगणद्वारा (परिहार पक्षमें—हस्तिसमूहद्वारा) आश्रित होने पर भी पवित्र था। बहुसंख्यक धूमकेतु (परिहार पक्षमें—होमको अग्नि) उदित होने पर भी उस आश्रममें उपद्रव नहीं था। समस्त चन्द्रमण्डल (परिहार पक्षमें—ज्ञानी ब्राह्मण लोकगण) संयुक्त होने पर भी उस आश्रमके वनमध्यमें सर्वदा अन्धकार था। इस प्रकार द्वितीय ब्रह्म-लोकके समान अतिरमणीय उस आश्रमको देखा।

---

१. हव्यधूमगन्धम्। २ मातङ्गक। ३ सहस्र...।

यत्र च मलिनता हविर्धूमेषु न चरितेषु, मुखरागः शुकेषु न कोपेषु, तीक्ष्णता कुशाग्रेषु न स्वभावेषु, चञ्चलता कदलीदलेषु न मनःसु, चक्षूरागः कोकिलेषु न परकलत्रेषु, कण्ठग्रहः कमण्डलुषु न सुरतेषु, मेखलाबन्धो व्रतेषु नेर्ष्याकलहेषु, स्तनस्पर्शो होमधेनुषु न वनितासु[1], पक्षपातः कृकवाकुषु[2] न विद्याविवादेषु, भ्रान्तिरनलप्रदक्षिणेषु[3] न शास्त्रेषु[4], वसुसङ्कीर्त्तनं दिव्यकथासु न तृष्णासु[5], गणना रुद्राक्ष-वलयेषु न शरीरेषु, मुनि-बाल-नाशः क्रतु-दीक्षया न मृत्यु-

यत्र चेति । अपि चेति चकारस्यार्थः । यत्र यस्मिन् आश्रमे, मलिनता मालिन्यं हविर्धूमेषु हुताग्निकेतुषु न चरितेषु लोकानां व्यवहारेषु हिंसामात्सर्यादिपापाचारस्तत्र नासीदित्यर्थः । सर्वत्रात्मभावनया स्वच्छान्तःकरणत्वादित्याशयः । मुखरागो मुखस्य रक्तिमा शुकेषु कीरेषु न कोपेषु, अत्र निमित्तसप्तमी अत एव कोपनिमित्तकं वैरूप्यं मुखे नासीदित्यर्थः क्रोधस्यैवानुदयात् । तीक्ष्णता चर्मास्थि भेदनयोग्यः सामर्थ्यविशेषः कुशाग्रेषु दर्भमूलप्रदेशेषु, स्वभावेषु प्रकृतिषु तीक्ष्णता क्रूरता नासीत् शुद्धान्तःकरणत्वात् । चञ्चलता चाञ्चल्यं कदलीदलेषु रम्भापत्रेषु न मनःसु चित्तेषु चञ्चलता अधीरता उपद्रवाभावात् । कोकिलेषु परभृत्सु चक्षूरागः लोचनारुण्यम् , न परकलत्रेषु अन्यस्त्रीषु चक्षूरागः लोचनयोरासक्तिः तदभिलाषाभावात् । कमण्डलुषु कुण्डिकासु कण्ठग्रहो गलधारणम् , किन्तु सुरतेषु आलिङ्गनेषु न, मुनीनामूर्द्धरेतस्त्वेन तदसत्त्वादित्याशयः । व्रतेषु उपनयनादिनियमेषु मेखलायाः काञ्च्याः बन्धोः बन्धनम् , किन्तु ईर्ष्याकलहेषु ईर्ष्यानिमित्तकविग्रहेषु मेखलाबन्धः खड्गमुष्टिधारणं न, मुनीनामीर्ष्याया एवानुपलम्भात् 'मेखला खड्गबन्धे स्यात् काञ्चीशैलनितम्बयोः' इति मेदिनी । होमधेनुषु होमनैमित्तिकगोषु स्तनस्पर्शः दुग्धदोहनम् , किन्तु न कामिनीषु वनितासु न स्तनस्पर्शः कुचमर्दनं विषयासक्त्यनुदयात् । कृकवाकुषु कुक्कुटपक्षिषु पक्षपातः छदाभ्यां पतनम् , किन्तु विद्याविवादेषु शास्त्रार्थेषु पक्षपातः निर्णायकस्य वादिप्रतिवादिनोरन्यतरस्य साहाय्यविधानं तस्यानुचितत्वात् 'कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः' इत्यमरः "विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय । खलस्य साधोर्विपरीतमेतज्ज्ञानाय दानाय च रक्षणाय ॥" इति । अत्र सर्वविधपक्षिण एव पक्षाभ्यां पतनसम्भवे ह्यत्र कृकवाकुमात्रस्यैव पक्षपतनदर्शनादविशेषे विशेषाख्यो दोषः समापतति तेनात्र 'पक्षिषु' इति पाठो विधेयः एवञ्च नोक्तशङ्कालेशः । अनलप्रदक्षिणेषु हवनाग्निप्रदक्षिणकर्मसु भ्रान्तिः चतुर्दिक्षु भ्रमणम् , किन्तु शास्त्रेषु वेदादिषु न भ्रान्तिर्भ्रमः अयथार्थज्ञानम् , तत्त्वतो निश्चयात् । दिव्यकथासु परलोकीयाख्यानप्रवचनेषु वसूनां द्युप्रभृतीनामष्टानां देवविशेषाणां सङ्कीर्तनं सम्यक्प्रकारेण कथनम् , किन्तु तृष्णासु वित्तलिप्सानिमित्तकं वसुना वित्तस्य सङ्कीर्त्तनं न, ऋषीणां धनलिप्साया एवाभावात् । रुद्राक्षाणां वलयेषु कटकाकारमालासु 'कटकं वलयोऽस्त्रियाम्' इत्यमरः, गणना जपादौ संख्या, किन्तु शरीरेषु देहेषु न गणना नापेक्षा, तत्र तेषामत्यन्तनिस्पृहत्वात् । क्रतुदीक्षया यज्ञप्रारम्भेण करणेन मुनीनाम् ऋषीणां बालनाशः केशकर्त्तनम् , पूर्वदिन एव संयमादिविधानायैवंविधानम्; किन्तु मृत्युना मरणेन बालनाशः बालकविध्वंसो न,

जिस आश्रममें होमाग्निके धूममें मलिनता ( धूमवर्ण ) थी, किन्तु किसीके चरित्रमें मलिनता ( पर हिंसादि पापप्रवृत्ति ) नहीं थी । शुकपक्षीगणका ही मुख रक्तवर्ण था, किन्तु क्रोधमें किसीका भी मुख रक्तवर्ण नहीं होता था । कुशाग्रमें ही तीक्ष्णता थी, किन्तु किसीके भी स्वभावमें तीक्ष्णता ( क्रूरता ) नहीं थी । कदलीपत्रमें ही चाञ्चल्य था, किन्तु किसीके भी मनमें चाञ्चल्य नहीं था । कोकिलगणका ही चक्षूराग ( नेत्ररक्तवर्ण ) था, किन्तु परस्त्री के प्रति किसीका भी चक्षूराग ( नेत्राकर्षण ) नहीं था । कमण्डलुका ही कण्ठधारण था, किन्तु सम्भोगके समय किसी स्त्रीका कण्ठग्रह नहीं था । उपनयनमें ही मेखलाबन्धन ( मौञ्जीधारण ) होता था, किन्तु ईर्ष्यामूलक विवादमें मेखलाबन्धन ( तलवारका मुष्टि धारण ) नहीं था । होमधेनुमें ही स्तनस्पर्श होता था, किन्तु स्त्रियोंका नहीं । कुक्कुट पक्षीगणमें ही पक्षपात (पक्षद्वारा भूमिसे पतन) होता था, किन्तु शास्त्रीय-तर्कमें कहीं भी पक्षपात नहीं था । होमाग्नि प्रदक्षिण करनेके समयमें ही भ्रान्ति (परिभ्रमण) होती थी, किन्तु शास्त्रमें भ्रान्ति (भ्रम) नहीं होती थी, स्वर्गके किसी उपाख्यान कहनेके समयमें ही वसुगणोंका ( अष्टवसुओंका ) उल्लेख होता था, किन्तु धनके लोभमें वसु ( धन ) का उल्लेख नहीं होता था । जपके समय रुद्राक्षमालासे ही गणना ( संख्या ) होती थी, किन्तु शरीरके प्रति गणना (आदर) नहीं होती थी । यज्ञ आरम्भके समयमें ही तपस्वीगणका बालनाश ( केशच्छेदन ) होता था, किन्तु मृत्युद्वारा

१ कामिनीषु । २ कुक्कुटेषु । ३...प्रदक्षिणासु । ४ शास्त्रार्थेषु । ५ जलतृष्णासु ।

ना, रामानुरागो रामायणेन न यौवनेन, मुखभङ्गविकारो जरया न धनाभिमानेन।

यत्र च महाभारते शकुनि-बधः, पुराणे वायु-प्रलपितम्, वयःपरिणामे[1] द्विज-पतनम्, उपवन-चन्दनेषु जाडयम्, अग्नीनां भूतिमत्त्वम्, एणकानां गीतश्रवण[2]व्यसनम्, शिखण्डिनां[3]

---

तपोमाहात्म्येनासामयिकमरणाभावात्। रामायणेन रामायणे गुणगणाकर्णनेन रामे दशरथात्मजे अनुरागः प्रेम, किन्तु यौवनेन तारुण्योचितमदाविर्भावेण रामायां कामिन्याम् नानुरागः नासक्तिः, तपःप्रभावेण तेषां युवावस्थायामपि कामोद्रेकाभावात्। जरया वृद्धावस्थया मुखस्य वदनस्य भङ्गविकारः त्वगादिशैथिल्यरूपो विकारः, किन्तु धनाभिमानेन वित्तगर्वेण मुखस्य भङ्गविकारः अन्येषु भ्रूकुट्यादिविकृतिर्न, तेषां वित्तगर्वयो र्ईर्योरप्यसत्त्वात्।

इह 'मलिनता हविर्धूमेषु न चरितेषु' इत्यारभ्य 'मुखभङ्गविकारो जरया न धनाभिमानेन' इत्यन्तं यावत् सर्वस्मिन्नपि वाक्ये प्रश्नाभावेऽपि नञा अन्यस्य निराकरणात् श्लेषसङ्कीर्णा शाब्दी परिसङ्ख्यालङ्कारः। तदुक्तं दर्पणे—

'प्रश्नादप्रश्नतोवापि कथिताद्वस्तुनो भवेत्। तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा॥

परिसङ्ख्या········ ।

यत्र चेति। इहापि चस्य अपिचेरयर्थः। यत्र आश्रमे महाभारत एव शकुनिवधः दुर्योधनमातुलस्य सहदेवेन मारणं श्रूयते स्म, न तु यस्मिन् कस्मिन् स्थले शकुनेः खगस्य बधो मारणम् अवलोकितः, तेषा हिंसाया अभावात्। पुराणे व्यासनिर्मिताष्टादशपुराणेषु मध्ये वायुपुराणशास्त्रे एव वायोः पवनदेवतायाः प्रलपितं जल्पितं श्रूयते, न त्वन्यत्र क्वापि भवने वायुना वायुविकारेणोन्मादादिना प्रलपितं कस्यापि व्यर्थवचनम् आसीत् तथाविधरुज अनुत्पन्नत्वात्। वयःपरिणामे वृद्धावस्थायामेव द्विजानां दन्तानां 'दन्ता विप्राण्डजा द्विजाः इत्यमरः, पतनं पातः, न तु महापातकादौ द्विजानां विप्राणां पतनं पातित्वं स्वाचारभ्रंशो वा तेषां तदभावात्। उपवनस्य आरामस्य चन्दनेषु चन्दनवृक्षेष्वेव जाडयं शीतलत्वम् न तु आश्रवमर्ति लोकेषु जाडयं प्रज्ञाहीनत्वं सर्वेषामेव पूर्णशिक्षितत्वात्। अग्नीनामेव वह्नीनामेव भूतिमत्वं भस्मवत्वम्, न तु मुनिजनानां भूतिमत्वं वित्तसम्पद्वत्वम्, वित्तैकत्रीकरणविधानाभावात्। एणकानां मृगाणामेव गीतश्रवणे गानाकर्णने व्यसनम् आसक्तिः, न तु ऋषीणाम्, तेषां क्वापि व्यसनाभावात्। शिखण्डिनामेव मयूराणामेव नृत्ये नर्तनसमये पक्षस्य छदस्य पातः पतनं कस्यापि भ्रंशनमित्यर्थः, न तु ऋषीणां नृत्ये लास्यविषये पक्षपातः अभिलाषा, तेषां सर्वस्मिन्नपि विषये निरभिलाषित्वात्। भुजङ्गमानां सर्पाणामेव भोगः शरीरम्, न तु ऋषीणां भोगो माल्यगन्धचन्दनकामिन्यादिसम्भोगोत्पन्नं सुखम्, सर्वभोगानां परित्यागात्। 'भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाय-

---

बालनाश ( शिशु विनाश ) नहीं होता था। रामायण सुनकर रामके प्रति अनुराग ( भक्ति ) होता था, किन्तु यौवनवशसे किसी रमणीके प्रति अनुराग ( आसक्ति ) नहीं होता था। वार्द्धक्यवशसे ही मुखकी विकृति होती थी, किन्तु धनके अहङ्कारसे नहीं।

इस प्रकार जिस आश्रममें महाभारतद्वारा ही शकुनिवध ( दुर्योधनका मातुलवध ) सुना जाता था, किन्तु आश्रमके किसी स्थानमें शकुनिवध ( पक्षी विनाश ) देखनेमें नहीं आता था। पुराणशास्त्रमें ही वायुप्रलाप ( वायुदेवका प्रकृष्ट वर्णन ) हुआ था, किन्तु किसी गृहमें किसीका भी वायुप्रलाप ( वातव्याधिसे प्रलाप ) सुननेमें नहीं आता था। वार्द्धक्यमें द्विजपतन (ब्राह्मणोंका पातित्य) नहीं होता था। उपवनके चन्दनवृक्षमें ही जाड्य (शीतलता) था, किन्तु किसी मनुष्यमें जाड्य ( मूर्खता ) नहीं था, अग्निमें ही भूतिमत्व ( भस्म ) था, किन्तु ऋषिगणकी भूति ( सम्पद् ) नहीं थी। हरिणगणके ही गान सुननेमें आसक्ति थी, किन्तु मुनिगणको नहीं। मयूरगणका ही नृत्यके समयमें पक्षपात होता (पक्षस्खलन) था, किन्तु ऋषिगणको नृत्यदर्शनमें पक्षपात ( अभिलाषा ) नहीं थी। सर्पगणका ही भोग ( शरीर ) था, किन्तु ऋषिगणका कोई भोग ( सम्भोग ) नहीं था। वानरगणके ही श्रीफलमें ( बिल्वफलमें ) स्पृहा थी, किन्तु ऋषिगणको श्रीफलमें ( धनसम्पद्रूप काम्यकर्मके फलमें ) स्पृहा नहीं थी। एवं तरु—लता प्रभृतिके

---

१ परिणामेन। २ इह 'श्रवण' इति पाठः क्वचिन्नास्ति। ३ शिखण्डिनीनां गीतनृत्यपक्षपातः।

नृत्य-पक्षपातः, भुजङ्गमानां भोगः, कपीनां श्रीफलाभिलाषः, मूलानामधोगतिः ।

( इति जाबाल्याश्रमवर्णनं समाप्तम् )



घोः' इत्यमरः। कपीनां मर्कटानामेव श्रीफलेषु बिल्वफलेषु अभिलाषः इच्छाविशेषः, न तु ऋषीणां श्रीर्लक्ष्मीः सैव फलं काम्येष्टिफलं तत्र अभिलाषः अत्युत्कटेच्छा, तेषां मोक्षाभिलाषित्वेन काम्यकर्मानुष्ठानविधानाभावात् । मूलानां वृक्षव्रतत्यादिकन्दानामेव मूलकानामेव वा अधोगतिः भूतलाधोदेशगमनम्, न तु ऋषीणाम् अधोगतिः नरकगमनं पापरहितत्वात् ।

इहापि पूर्ववदेव 'महाभारते शकुनिवधः' इत्यारभ्य 'मूलानामधोगतिः' इत्यन्तं यावत् सर्वस्मिन्नपि-वाक्ये प्रश्नाभावेऽपि स्वाभिप्रायेणान्यस्य निराकरणात् श्लेषानुप्राणिता आर्थीपरिसंख्यालङ्कारः । लक्षणन्तु पूर्वमेव प्रतिपादितम् । पूर्वत्र शाब्दी अत्र त्वार्थीति भेदो ज्ञेयः। अत्रत्य सन्दर्भः कीदृशोऽतिरमणीय इति सहृदया एव प्रमाणम् ।

इति 'चन्द्रकला' टीकायां जाबाल्याश्रमवर्णनं समाप्तम् ।



मूलकी ही अधोगति ( नीचे होकर गति ) थी, किन्तु ऋषिगणकी अधोगति ( नरकमें गमन ) नहीं होती थी।

इति मिथिलादेशावयव'मुङ्गेर'मण्डलान्तर्गत'बरौनी'ग्रामवासिदैवज्ञश्रील-
'श्रीलोकनाथ'शर्मात्मजव्याकरण-साहित्याचार्य-वेदान्त-मीमांसा
शास्त्रि-श्रीकृष्णमोहनशास्त्रिकृत-'चन्द्रकला' 'विद्योतिनी'
संस्कृतहिन्दीटीकायां जाबाल्याश्रमवर्णनं समाप्तम्



( जाबालिवर्णनम् )

तस्य चैवंविधस्य मध्यभागमलङ्कुर्वाणस्य, अलक्तकालोहित-पल्लवस्य मुनिजनालम्बित कृष्णाजिन-जल-करङ्क-सनाथशाखस्य तापसकन्यकाभिर्मूलभाग-दत्त-पीत-पिष्टातकानेक-पञ्चाङ्गुलस्य हरिणशिशुभिः परिपीयमानालवाल-सलिलस्य मुनिकमारकाबद्ध-कुशचीरदाम्नः हरितगोमयोपलेपन-विविक्ततलस्य, तत्क्षण-कृत-कुसुमोपहार-रमणीयस्य नातिमहतः परिमण्डलतया विस्तीर्णावकाशस्य रक्ताशोकतरोरधश्छायायामुपविष्टम्, अत्युग्रतपोभिर्भुवनमिव सा रैः कनकगिरिमिव कुलाचलैः क्रतुमिव वैतानैर्वह्निभिः कल्पान्तदिवस-

---

तस्येति। एवंविधस्य पूर्वोक्तदिशा वर्णितस्य तस्य आश्रमस्य मध्यभागं मध्यदेशम् अलङ्कुर्वाणस्य शोभमानस्य, रक्ताशोकतरोरधश्छायायामुपविष्टं 'भगवन्तं जाबालिमपश्यम्' इति वक्ष्यमाणेन क्रियया सम्बन्धः। अत्र षष्ठ्यन्तानि पदानि रक्ताशोकतरोः, द्वितीयान्तानि च जाबालिमित्यस्य विशेषणानि बोध्यानि। अलक्तकवत् यावकवत् आलोहितानि किञ्चिद्रक्तानि पल्लवानि किसलयानि यस्य तस्य तादृशस्य। मुनिजनैः ऋषिगणैः आलम्बिताः स्थापिताः कृष्णाजिनानि कृष्णमृगचर्माणि जलकरङ्काः नारिकेलास्थिरचिताः पात्रविशेषाश्च यद्वा जलकरङ्काः जलरक्षणार्थं कमण्डलवः तैः सनाथाः संयुताः शाखाः स्कन्धा यस्य तस्य तादृशस्य। 'करङ्को मस्तके शस्ये नारिकेलफलास्थिनि' इति विश्वः। 'करकस्तु पुमान् पक्षिविशेषे दाडिमेऽपि च। द्वयोर्मेघोपले न स्त्री करङ्के च कमण्डलौ ॥' इति मेदिनी।

तापसकन्यकाभिः मुनिकुमारिकाभिः मूलभागे आलवाले मूलप्रदेशे दत्तानि निहितानि पीतपिष्टातकैः हरिद्रारूपपटवासचूर्णैः अनेकानि विविधानि पञ्चाङ्गुलानि करस्थपञ्चाङ्गुललक्ष्माणि यस्य तस्य तादृशस्य। हरिणशिशुभिः मृगबालकैः परिपीयमानं समन्तादास्वाद्यमानम् आलवालस्य मूलप्रदेशस्थावापस्य सलिलं जलं यस्य तस्य तादृशस्य। मुनिकुमारकैः ऋषिबालकैः आबद्धानि समन्तात्परिवेष्टितानि कुशचीराणां दर्भैः विधास्यमानवस्त्राणां दामानि रज्जवो यस्मिन् तस्य तादृशस्य। हरितेन हरिद्वर्णेन सरसेन गोमयेन गोः पुरीषेण यदुपलेपनं लिम्पनं तेन विविक्तं पूतं तलम् अधोदेशो यस्य तस्य तादृशस्य। तस्मिन्नेव क्षणे काले कृतेन विहितेन कुसुमोपहारेण पुष्पढौकनेन रमणीयस्य कमनीयस्य। नातिमहतो नातिविस्तृतस्य परिमण्डलतया गोलाकारतया कारणेन विस्तीर्णः अतिदीर्घः अवकाशः अधःस्थायी छायाप्रदेशो यस्य तस्य तादृशस्य। रक्तानां लोहितानाम् अशोकानां पुष्पाणां तरुः वृक्षः तस्य इत्येवार्थः, न तु रक्तो यः अशोकतरुः तस्य प्रसिद्ध्यभावात्। अधश्छायायां नीचस्थानातपे 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः। उपविष्टम् आसीनम्।

अत्युग्रेति। अत्युग्राणि अतितीक्ष्णानि तपांसि येषां तैस्तादृशैः महर्षिभिरित्यस्य विशेषणानि। सागरैः समुद्रैः भुवनं विष्टपमिव, कुलाचलैः कुलाद्रिभिः कनकगिरिमिव सुमेरुपर्वतमिव, वितानस्य यज्ञस्य इम इति वैताना ये अग्नयः दक्षिणाग्निगार्हपत्याहवनीयाः तैः क्रतुमिव यज्ञमिव 'वितानो यज्ञविस्तारोल्लोचेषु

---

इस प्रकार उस आश्रमके मध्यस्थानको अलङ्कृत कर अनतिवृहत् ( न छोटा न बड़ा ) एक रक्त अशोकका वृक्ष था, उसका पल्लव अलक्तकके समान ईषद्रक्त वर्ण था। मुनिगण उसकी शाखामें कृष्णसारके चर्म एवं नारिकेलके करङ्क ( खोल ) रचित अनेक जलपात्र लटकाकर रक्खे हुए थे। तापस कन्याओंसे उसके मूलमें हरिद्रावर्ण 'पिष्टातक' द्वारा हाथके पञ्चाङ्गुलसे अनेक चिह्नकर रक्खा गया था। हरिणशावकगण चारों ओरसे उसके आलवालका जलपान करते थे। तपस्वीकुमारगण कुशमयवस्त्र निर्माण करनेके लिये उसका रज्जु निर्माण कर उस वृक्षमें बाँध कर रक्खे थे। हरितवर्ण गोमयद्वारा लेपन करनेसे उसका तल पवित्र था। उस समयमें अनेकविध पुष्पनिक्षेप करनेसे वह वृक्ष सुन्दर देखनेमें आ रहा था। और गोलाकार होनेसे उसके तलकी छाया विस्तृत थी। उस वृक्षके नीचे छायामें बैठे हुए भगवान् महर्षि जाबालिको देखा।

समुद्रगणसे परिवेष्टित भूमण्डलके समान, कुलपर्वतगणसे परिवेष्टित सुमेरुके समान, यज्ञीय वह्निपरिवेष्टित यज्ञके समान, द्वादशसूर्य परिवेष्टित प्रलयदिवसके समान एवं प्रलयपरिवेष्टित अखण्ड कालके समान, महर्षि

---

१ मध्यभागमण्डलम्। २ अलक्तलोहित'''। ३ लोकपल्लवस्य। ४'''अवलम्बित। ५'''करक'''। ६'''कुमारिकाभिरालवालवृक्ष'''। ७'''पीतपिष्ट'''। ८ पीयमान,'''आपीयमान। ९ आलवालक'''। १०'''उपलिप्त'''। ११ भूतलस्य। १२'''रचित'''। १३ उग्रतपोभिः। १४ कुलपर्वतैः। १५ वैतानिक...।

मिव रविभिः कालमिव कल्पैः समन्तान्महर्षिभिः परिवृतम्, उग्र-शाप-भीतयेव कम्पित-देहया[1] प्रणयिन्येव विहित-केशग्रहया क्रुद्धयेव कृत-भ्रूभङ्गया मत्तयेवाकुलितगमनया प्रसाधितयेव प्रकटित-तिलकया जरया गृहीतव्रतयेव भस्मधवलया धवलीकृत-विग्रहम्, आयामिनीभिः पलित-पाण्डुराभिः तपोभिर्विजित्य मुनिजनमखिलं धर्म्मपताकाभिरिवोच्छ्रिताभिः[3] अमरलोकमारोढुं पुण्य-रज्जुभिरिवोपसंगृहीताभिः अतिदूर-प्रवृद्धस्य तप-

क्रतुकर्मणि' इति विश्वः। रविभिः द्वादशसूर्यैः कल्पान्तदिवसमिव युगान्तदिनमिव तस्मिन् समये तत्पूर्वं च द्वादशसूर्योदयस्य पुराणविख्यातत्वात्। कल्पैः युगान्तैः कालमिव अखण्डं समयमिव, समन्तात् सर्वतः महर्षिभिस्तापसैः परिवृतं परिवेष्टितम्।

अत्रैकस्योपमेयस्य बहूनामुपमानानां निरूपणान्मालोपमालङ्कारः। तदुक्तं दर्पणे—

'मालोपमा यदेकस्योपमानं बहु दृश्यते'। इति।

उग्रेति। उग्रः कठिनो यो जाबालेः शापः अभिसम्पातः तेन भीतया त्रस्तया नार्येव, कम्पितः चालितो देहो वपुर्यया, पक्षे यस्यास्तया तादृश्या। प्रणयिन्येव कामिन्येव, विहितः केशग्रहः कचावलम्बनं यया तया तादृश्या। रतिकलहे कान्तापि केशग्रहं विधत्ते इयमपि केशे लग्नेत्यर्थः। क्रुद्धया कोपाविष्टया नार्येव, कृतो विहितो भ्रूभङ्गः भ्रुवोः शैथिल्यं भ्रुकुटी च यया तया तादृश्या। यथा क्रुद्धा भ्रूभङ्गं विधत्ते तथेयमपि कृतवतीत्यर्थः, मत्तया मद्यपानोन्मत्तया नार्येव, आकुलितम् उच्चावचीकृतं गमनं गतिर्यया, पक्षे यस्यास्तया तादृश्या, मद्यपानोन्मत्तापि स्खलद्गतिका भवति इयमपि तथैव सञ्जाता। प्रसाधितया भूषितया नार्येव, प्रकटितानि अभिव्यक्तानि तिलकानि देहे श्यामवर्णचिह्नानि, भाले तिलकञ्च यया तया तादृश्या। अलङ्कृता स्त्री यथा सतिलका भवति तथेयमपि शरीरे तिलकानामुत्पन्नत्वात्। तथा गृहीतव्रतया स्वीकृतकिञ्चिन्नियमया नार्येव भस्म भूतिः तद्वद्धवलया श्वेतया भस्मना धवलया च जरया वृद्धावस्थया धवलीकृतः शुभ्रीकृतः विग्रहो वपुर्यस्य तं तादृशम्।

अत्र 'उग्रशापभीतयेव' इत्यारभ्य 'गृहीतव्रतयेव' इत्यन्तं यावत् पूर्णोपमालङ्कारः। केवलं विशेषणस्योपादानेऽपि विशेष्यस्य 'नार्या' इत्यस्याध्याहारेण सामञ्जस्यं विधेयम्। केचिदुत्प्रेक्षां निरूपयन्ति, तन्मते 'नार्या' इत्यस्य नाध्याहार इत्यवधेयम्।

आयामीति। आयामिनीभिः विस्तीर्णाभिः, पलितेन वृद्धावस्थाप्रयुक्तश्वैत्येन पाण्डुराभिः। पाण्डुरूपाभिः तपसा तेजसा अखिलं समस्तं मुनिजनम् ऋषिगणं विजित्य अभिभूय, उच्छ्रिताभिः उर्ध्वीकृताभिः धर्मपताकाभिरिव धर्मद्योतकध्वजाञ्चलैरिव विद्यमानाभिः। अमरलोकं देवलोकम् आरोढुम् आरोहणं विधातुं पुण्यरज्जुभिरिव पवित्रप्रग्रहैरिव उपसंगृहीताभिः अङ्गीकृताभिः। अतिदूरप्रवृद्धस्य अत्यन्तवृद्धिमुपगतस्य तप एव तरुः वृक्षः तस्मात् उद्गताभिः उत्पन्नाभिः कुसुममञ्जरीभिरिव, पुष्पवल्लरीभिरिव जटाभिः सटाभिः उपशोभमानं भूषितम्।

अत्र 'धर्मपताकाभिरिव' इत्यत्र 'पुण्यरज्जुभिरिव' इत्यत्र च जात्युत्प्रेक्षालङ्कारः। 'तपस्तरोः' इत्यत्र

जाबालि अन्यान्य मुनिगण द्वारा चारों ओरसे परिवेष्टित थे। भयानक अभिशापके भयसे कोई स्त्री जिस प्रकार स्वकीय शरीर कम्पितकरती है, जरा (बुढ़ौती) भी उसी प्रकार उनके शरीरको कंपित करती थी। प्रियतमा जिस प्रकार केशग्रहण करती है, जरा भी उसी प्रकार केशग्रहणको हुई थी, (केश पक गया था); क्रुद्धा रमणी जिस प्रकार भ्रूभङ्ग करती है, जरा भी उसी प्रकार उनके भ्रूभङ्ग (भ्रूयुगल) को शिथिल कर रक्खी थी। मद्यपानमें मतवाली रमणी जिस प्रकार स्खलितभावसे गमन करती है (इधर-उधर पाँव फेंकती है), जरा भी उसी प्रकार गति स्खलित करती थी, भूषिता रमणी जिस प्रकार ललाटमें तिलक धारण करती है, जरा भी उसी प्रकार उनके शरीरमें तिलके समान श्याम चिह्न करदी थी। कोई व्रतकारिणी स्त्री जिस प्रकार भस्मकर श्वेतवर्ण होती है, जरा भी उसी प्रकार भस्मके समान श्वेतवर्ण हो गयी थी, (वह वृद्धावस्था जाबालिके शरीरको श्वेतवर्ण की हुई थी)। जाबालि, दीर्घ और वार्द्धक्यवशसे पाण्डुवर्ण जटासमूहद्वारा शोभा पा रहे थे। इस प्रकार जटासमूह रहनेसे प्रतीत होता था कि मानो, तपस्याद्वारा अन्याय मुनिगणको पराजित कर धर्मको पताकाको उठा दिये हैं। स्वर्गलोकमें आरोहण करनेके लिये मानो धर्ममय रज्जुसमूह संग्रह किये हुए हैं। एवं अत्यन्त

1 उग्रशापकम्पितदेहया। 2 तपसा। 3 उपार्जिताभिः।

स्तरो:[1] कुसुम-मञ्जरीभिरिवोद्‌गताभिर्जटाभिरुपशोभमानम्, उपरचित-भस्म-त्रिपुण्ड्रकेण[2] तिर्य्यक्प्रवृत्त-गङ्गा-स्रोतस्त्रयेण[3] हिमगिरि-शिलातलेनेव ललाटफलकेनोपेतम्[4], अधोमुख-चन्द्र-कलाकाराभ्यामवलम्बित-बलि-शिथिलाभ्यां भ्रूलताभ्यामवष्टभ्यमान-दृष्टिम्, अनवरत-मन्त्राभ्यास-विवृताधरपुटतया निष्पतद्भिरतिशुचिभिः सत्यप्ररोहैरिव स्वच्छेन्द्रिय-वृत्ति-भिरिव विद्यागुणैरिव[5] करुणारस[6]-प्रवाहैरिव दशनमयूखैर्धवलित-पुरोभागम्, उद्वमदमल-गङ्गा-प्रवाहमिव जह्नुम्, अनवरत[7]सोमोद्गारसुगन्धिनिश्वासार्वक्रष्टै[8]र्मूर्त्तिमद्भिरिव शापाक्षरै:[9]

निरङ्गकेवलरूपकम्, 'कुसुममञ्जरीभिरिव' इत्यत्र हि जात्युत्प्रेक्षेत्यनयोरेकाश्रयानुप्रवेशरूपसाङ्कर्यात् सङ्करालङ्कारः।

उपरचितेति। उपरचितानि विहितानि भस्मना त्रीणि पुण्ड्रकाणि तिर्यक् रेखामय तिलकानि यत्र तेन यादृशेन। अत एव तिर्यक्प्रवृत्तं कुटिलभावेन प्रचलितं त्रिपथगाया गङ्गाया स्रोतस्त्रयं त्रिप्रवाहो यत्र तथोक्तेन, हिमगिरेः हिमालयस्य शिलातलेनेव पाषाणफलकेनेव ललाटफलकेन भालपट्टकेन उपेतं युक्तम्।

इहोक्तविधशिलातलाप्रसिद्धेर्द्रव्योत्प्रेक्षा।

अधोमुखेति। अधोमुखी निम्नाश्रिता या चन्द्रकला सुधांशुरेखा तस्या आकारः स्वरूप इव आकारो ययोस्ताभ्यां तादृशाभ्याम्, अवलम्बिता वार्द्धक्यादाश्रिता या बलिः शिथिलं चर्म, तथा च—"बलिर्दैत्यप्रभेदे च करचामरदण्डयोः। उपहारे पुमान् स्त्री तु जरया श्लथचर्मणि॥" इति मेदिनी। तया शिथिलाभ्यां शैथिल्यान्नेत्रोपरि च्युताभ्यामित्यर्थः, अत एव ताभ्यां भ्रूलताभ्याम् अवष्टभ्यमाना अवलम्ब्यमाना दृष्टिः अवलोकनं सामर्थ्यं यस्य तं तादृशम्।

इह 'चन्द्रकलाया आकार इव आकार' इत्यत्र आर्थी समासगता लुप्तोपमा।

अनवरतेति। अनवरतं निरन्तरं यो मन्त्राभ्यासः मन्त्रजपावृत्तिः तेन विवृतं व्यादत्तम् अधरपुटम् ओष्ठद्वयं यस्य तस्य भावस्तया कारणेन, निष्पतद्भिः निःसरद्भिः, अतिशुचिभिः अत्यन्तस्वच्छैः, सत्यप्ररोहैरिव सत्यवचनसत्याचारयोरुद्‌गमैरिव, स्वच्छा अवदाताः पापरहिता या इन्द्रियवृत्तयः चित्तादीनामिन्द्रियाणां कर्माणि ताभिरिव, विद्यागुणैरिव विद्याया आन्वीक्षिक्याद्या ये गुणा विनयादयस्तैरिव, करुणारसप्रवाहैरिव दयारसस्रोतोभिरिव सर्वस्मिन् स्थले स्वच्छत्वादित्याशयः। दशनमयूखैः दन्तरश्मिभिः धवलितः शुभ्रीकृतः पुरोभागः अग्रदेशो यस्य तं तादृशम्। अत एव उद्वमन् दक्षिणश्रोत्राद्बहिरागच्छन् अमलः स्वच्छो गङ्गाप्रवाहो भागीरथी स्रोतो यस्मात्तं तादृशं जह्नुम् एतत्संज्ञकऋषिमिव विद्यमानम्।

अत्र 'सत्यप्ररोहैरिव' इत्यारभ्य 'करुणारसप्रवाहैरिव' इत्यन्तं यावत् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कार उपमा च तथा गुणोत्प्रेक्षेत्येतेतेषां मिथोऽङ्गाङ्गिभावेन साङ्कर्यात् सङ्करालङ्कारः।

अत्रायमितिहासः—पुरा किल स्वपूर्वजानुद्दिधीर्षया भगीरथो हि हिमाचलाच्चलितामथ च शङ्करजटायां लीनां गङ्गामवतारयितुं महेश्वरं सिषेवे, प्रसन्नो भगवान् सदाशिवः स्वशिरसस्तामवततार। अथ मार्गे व्रजन्ती सा जह्नोर्यज्ञभूमिं प्लावयामास, ततश्च क्रुद्धेन जह्नुना पीता सा पुनरपि भगीरथप्रार्थनया श्रोत्रविवरान्निःसारिता सती भूतलमाजगामेति। तत एव 'जाह्नवी' इति संज्ञामवाप।

अनवरतेति। इतो द्वितीयान्तानि 'आननम्' इत्यस्य विशेषणानि। अनवरतं निरन्तरं यः सोमः पीतसोमरसः तस्य उद्गारेण विस्रावेण वायुजनिशब्देनेत्यर्थः 'निगारोद्गारविस्रावोद्ग्राहा निगरणादिषु'

दूरमें फैले हुए तपस्यारूपतरुसे मानो पुष्पमञ्जरी प्रादुर्भूत हुई है। जाबालि, ललाटमें भस्मद्वारा त्रिपुण्ड्र धारण किये हुए थे, उससे प्रतीत हो रहा था मानो, हिमालयके कोई प्रस्तरफलकमें गङ्गाके तीन स्रोत तिर्यक्‌भावसे ( तिरछी भावसे ) प्रवाहित हुआ है। अधोमुख चन्द्ररेखाके समान भ्रूयुगल उनके दृष्टिरोध करते थे, कारण उस भ्रूयुगलके चर्म शिथिल होनेसे नेत्रके ऊपर गिर जाता था। अविश्रान्त मन्त्रजप करनेसे ओष्ठयुगल विवृत हो जानेके कारण मुखसे निःसृत अत्यन्त शुभ्रवर्ण सत्यके अङ्कुरके समान, निर्मल इन्द्रियवृत्तिके समान, विद्याके गुण विनयादिके समान एवं दयाके स्रोतके समान दन्तरश्मि उनके सम्मुखभागको श्वेतवर्ण किये थे। अत एव स्वच्छ गङ्गाप्रवाह निःसारणकारी जह्नुमुनिके समान वे देखनेमें आ रहे थे। उन्होंने जो सोमरस पान किये थे, अनवरत उसके उद्गार से

१ त्रिपथगा। २...त्रयेणेव...तलेन। ३...पट्टेनोपेतम्। ४...मन्त्राक्षराभ्यास। ५ क्वचिदयं पाठो नास्ति। ६ करुणारस...। ७ अविरत, अविरल...। ८...निःश्वासाकृ...। ९ मूर्त्तिमद्भिः शापाक्षरैरिव।

सदामुखभाग-सन्निहितैः[1] परिस्फुरद्भिरलिभिरविरहितम्, अतिकृशतया निम्नतर-गण्ड-गर्त्तम् उन्नततरं-हनु-घोणम् आकराल-तारकम् अवशीर्य्यमाण-विरल-नयन-पक्ष्ममालम् उद्गत-दीर्घ[6]रोम-रुद्ध-श्रवण-विवरम् आनाभिलम्बित[3]-कूर्चकलापमाननमादधानम्, अतिचपलाना-मिन्द्रियाश्वानाम्[4] अन्तःसंयमन-रज्जुभिरिवाततामिः कण्ठनाडीभिर्निरन्तरावनद्ध[5]-कन्ध-रम्, समुन्नत[2]-विरलास्थि-पञ्जरम्, अंसालम्बित[7]-धवल-यज्ञोपवीतम्, अनिल[8]-वश-जनित-तनु-तरङ्ग-भङ्गम् उत्प्लवमान-नव[9]मृणालमिव मन्दाकिनीप्रवाहम् अकलुषमङ्गमुद्व-

---

इत्यमरः, सुगन्धिना सौरभवता निश्वासेन पवनेन अवकृष्टैः आकर्षितैः मूर्त्तिमद्भिः देहवद्भिः शापाक्षरैरिव अभिसम्पातवर्णैरिव, सदा सर्वदा मुखस्य वदनस्य यो भागोऽग्रिमप्रदेशः तत्र सन्निहितैः विद्यमानैः परि-स्फुरद्भिः सञ्चरद्भिः अलिभिर्भ्रमरैः अविरहितम् अपरित्यक्तम् । अतिकृशतया अत्यन्तक्षीणशरीरतया निम्नतरौ अत्यन्तगम्भीरतरौ गण्डगर्त्तौ अवटीभूतौ कपोलौ यस्मिन् तत् तादृशम् । उन्नततरा अत्युच्चाः हनू चिबुकं कपोलोर्ध्वांशद्वयमिति यावत् घोणा नासिका च यत्र तत् तादृशम्, 'घोणा नासा च नासिके' इत्यमरः, अत्यन्तकृशशरीराणामेवम्भूतमाननं भवत्यवलोकनीयम् । आकराले तेजस्वित्वेन हेतुना अत्यन्तभीषणे तारके कनीनिकायुगलं यस्मिन् तत् तादृशम् । अवशीर्यमाणा नश्यमाना विरला असान्द्रा नयनपक्ष्ममाला नेत्ररोमपङ्क्तिः यस्मिन् तत् तादृशम् । उद्गतैः उत्पन्नैः दीर्घैः विस्तृतैः रोमभिः लोमभिः रुद्धे आच्छादिते श्रवणविवरे श्रोत्ररन्ध्रयुगलं यस्मिन् तत् तादृशम् । आनाभिलम्बितो नाभिपर्यन्तलम्बमानः कूर्चकलापः श्मश्रुसमूहः मुखलोमसमूह इत्यर्थः यस्मिन् तत् तादृशम् आननं मुखम् 'आननं लपनं मुखम्' इत्यमरः, आदधानं धारयन्तम् । अत्र 'शापाक्षरैरिव' इत्यत्र गुणोत्प्रेक्षालङ्कारः।

अतिचपलेति । इत आरभ्य 'अङ्गम्' इत्यस्य विशेषणानि । अतिचपलानाम् अतीवचञ्चलानाम्, इन्द्रियाणि घ्राणत्वक्श्रोत्रनेत्ररसनादीनि एव अश्वाः घोटकाः सांसारिकपदार्थान्प्रति जीवानामाकर्षणाद्वि-त्यागयः । तथा च कठोपनिषदि द्वितीयवल्ल्यां नाचिकेतसं प्रति धर्मराजस्यात्मनिरूपणप्रस्तावे उक्तिः— 'इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्' इति । तेषाम् अन्तर्मध्ये संयमनरज्जुभिरिव नियन्त्रणप्रग्रहैरिव, आततामिः अतिदीर्घाभिः कण्ठनाडीभिः गलप्रदेशस्थस्नायुभिः निरन्तरं सान्द्रं यथा स्यात्तथा अवनद्धा सम्बद्धा कन्धरा ग्रीवा यस्मिन् तत् तादृशम् । समुन्नतं शरीरस्यातिकृशत्वात् समुन्नतवत् अवलोक्यमानं विरलम् अनिबिडम् अस्थिपञ्जरं कङ्कालं यस्मिन् तत् तादृशम् । अंसे भुजान्तरे आलम्बितं लम्बमानं धवलं शुभ्रं यज्ञोपवीतं यज्ञसूत्रं यस्मिन् तत् तादृशम् । अतएव अनिलवशेन वायुप्रभावेण जनितः उत्पादितः तनूनां सूक्ष्माणां तरङ्गाणां कल्लोलानां भङ्गः कौटिल्यं यत्र तं तादृशम्, तथा उत्प्लवमानं सलिलोपरि विद्यमानं नवं नूतनं मृणालं बिसं यत्र तं तादृशम्, मन्दाकिन्या वियद्गङ्गायाः प्रवाहं स्रोत इव अकलुषम् अनाविलं स्वच्छमित्यर्थः अङ्गं शरीरावयवम् उद्वहन्तं धारयन्तम् ।

इह 'इन्द्रियाण्येव अश्वाः' इत्यत्र निरङ्गकेवलरूपकम्, 'संयमनरज्जुभिरिव' इत्यत्र जात्युत्प्रेक्षेत्यन-योरङ्गाङ्गिभावेन सङ्कराळङ्कारः । तथोक्तविधकुटिलकृशतरङ्गतुल्यम् अस्थिपञ्जरम्, सलिलोपरिप्लवमानन्-तनबिसतुल्यञ्च यज्ञसूत्रमित्युपमालङ्कारः ।

---

होनेसे सुगन्धि निःश्वासवायुसे आकृष्ट होकर अभिशापके मूर्तिमान् अक्षरके समान भ्रमरगण, सर्वदा मुखके समीप रहकर भ्रमण करते थे, शरीर अतिशय कृश होनेके कारण गालके गर्त्त दो गभीर एवं उसके ऊपरके दो हाड़ और नाक अत्यन्त उच्च था, नेत्रकी कनीनिका अत्यन्त उग्र और लोमगण जीर्ण और विरल थे, दीर्घ रोमराजि उत्पन्न होकर कर्ण-विवरको आच्छादित किया हुआ था एवं श्मश्रुसमूह (दाढ़ी) नाभिपर्यन्त लटका हुआ था, जाबालि इन सबोंसे युक्त मुखमण्डल धारण किये हुए थे, और अत्यन्त चञ्चल इन्द्रियरूप अश्वगणको अभ्यन्तरमें बन्धन कर रखलेनेसे रज्जुके समान विस्तृत शिरासमूह उनके ग्रीवादेशको सघनभावसे परिवेष्टित कर रक्खा था, पार्श्वके विरल अस्थिपञ्जर उच्च हो गये थे, एवं शुभ्रवर्ण यज्ञोपवीत स्कन्धदेशमें लम्बमान था, अत एव वायुके वेगमें क्षुद्र क्षुद्र तरङ्गगण उठे हो जानेपर एवं जलके ऊपर एक अभिनव मृणाल भासित रहने पर जिसप्रकार गङ्गाका प्रवाह देखनेमें आता है, जाबालि भी उसी

---

१ सन्निविष्टैः । २ समुन्नत...। ३ लम्बित ४ इन्द्रियाणाम् । ५...संबद्ध...। ६ उन्नत... । ७ अवलम्बित, लम्बियज्ञो...। ८ वायु । ९...म्लानमृणालमिव ।

हन्तम्, अमल-स्फटिक-शकल-घटितमक्ष[1]वलयमत्युज्ज्वल[2]स्थूल-मुक्ताफल-ग्रथितं सरस्वती-हारमिव चलदङ्गुलि-विवर-गतमावर्त्तयन्तम्, अनवरत-भ्रमित-तारका[3]चक्रमपरमिव ध्रुवम्, उन्नमता[4] शिरा-जालकेन जरत्कल्पतरुमिव परिणतलतासञ्चयेन निरन्तर-निचितम्, अम[5]लेन चन्द्रांशुभिरिवामृतफेनैरिव गुणसन्तान-तन्तुभिरिव निर्म्मितेन मानस-सरो-जल-क्षालन[6]शुचिना दुकूलवल्कलेन द्वितीयेनेव[7] जराजालकेन संच्छादितम्, आसन्नवर्त्तिना मन्दाकिनीसलिल-पूर्णेन त्रिदण्डोपविष्टेन स्फाटिक[8]-कमण्डलुना विकच-पुण्डरीक[9]-राशि-

अमल-स्फटिकेति। अत्युज्ज्वलानि अतिविशदानि स्थूलानि पृथुलानि मुक्ताफलानि मौक्तिकानि तैर्ग्रथितं गुम्फितं सरस्वत्या भारत्या हारमिव कण्ठमालामिव, चलन्तीनाम् अक्षवलयाकर्षणेन चपलीभूतानाम् अङ्गुलीनां करावयवानां विवरगतं छिद्रस्थितम्, अमलैः विशदैः स्फटिकानां स्फटिकमणीनां शकलैः खण्डैः घटितं रचितम् अक्षवलयं रुद्राक्षमालागुटिकाम् आवर्तयन्तं संख्याविशेषपूरणात् यथाक्रमं परिभ्रमयन्तम्, अतएव अनवरतं निरन्तरं भ्रमितं प्रवहसंज्ञकवातेन पर्यटितं तारकाचक्रं नक्षत्रसमूहो यत्र तथोक्तम् अपरं द्वितीयं ध्रुवम् उत्तानपादजमिव विद्यमानम्। इह च यथा बहोः कालात् स्थिरयोः ध्रुवयोरन्तर्बद्धस्तारकासमूहः प्रवहानिलैरजस्रं पर्येति तथा आसीनेन स्थिरतरेण ऋषिणा सव्यकराग्रनिहिता स्फटिकमाला जपसंख्याविशेषावधारणायानवरतं सञ्चालितेति साम्यमवगन्तव्यम्। उक्तं च सूर्यसिद्धान्ते—

"भचक्रं ध्रुवयोर्बद्धमाक्षिप्तं प्रवहानिलैः। पर्येत्यजस्रं तन्नद्धा ग्रहकक्षा यथाक्रमम्॥"

इह उपमा, पदार्थहेतुकं काव्यलिङ्गम्, द्वयोरुत्प्रेक्षा चेत्येषां परस्परमपेक्षाभावेन विद्यमानत्वात् संसृष्टिः।

उन्नमतेति। परिणतानां पाकमुपगतानां लतानां प्रततीनां सञ्चयेन समूहेन निरन्तरनिचितं सान्द्रभावेन व्याप्तं जरत्कल्पतरुमिव प्राचीनकल्पवृक्षमिव, उन्नमता उपरि स्फुरता शिराजालकेन धमनिसमूहेन निरन्तरनिचितम्। इह 'जरत्कल्पतरुमिव' इत्युपमा।

अमलेनेति। अमलेन विशदेन, अत एव चन्द्रांशुभिरिव शशिचन्द्रिकाभिरिव अमृतफेनैरिव पीयूषडिण्डीरैरिव गुणानां कारुण्यतपश्चर्यादीनां सन्तानाः समूहा एव तन्तवः सूत्राणि तैरिव निर्मितेन रचितेन, मानसरसो मानसाख्यसरोवरस्य जलेन सलिलेन यत् क्षालनं मलनिराकरणं तेन शुचिना पवित्रेण, द्वितीयेन अपरेण जराजालकेनेव श्वैत्यात्परिणतावस्थासमूहेनेव, दुकूलवत् पट्टवसनवत् वल्कलं वृक्षत्वक् तेन तादृशेन, संच्छादितम् आच्छादितनाभ्यधोभागम्।

अत्र काव्यलिङ्गालङ्कारः, द्वे चोत्प्रेक्षे, परस्परमेषामङ्गाङ्गिभावेन सङ्करालङ्कारः।

आसन्नेति। आसन्नवर्त्तिना निकटस्थायिना, मन्दाकिनी गङ्गा तस्याः सलिलं जलं तेन पूर्णेन भृतेन त्रिदण्डत्रिपदिका तत्रोपविष्टेन तदुपरिस्थापितेन, राजहंसेन कादम्बेन 'राजहंसस्तु कादम्बे कलहंसे नृपोत्तमे' इति हैममेदिन्यौ, विकचः प्रस्फुटितः पुण्डरीकराशिः सिताम्भोजसमूहस्तमिव, स्फाटिककमण्डलुना स्फटिकमणिनिर्मितकमण्डलुना उपशोभमानं विराजमानम्। अत्रोपमा।

प्रकार अलङ्कृत किये हुए थे। अतिशय उज्वल और बृहत् मुक्तासमूहसे ग्रथित सरस्वतीके कण्ठहारके समान, स्वच्छ स्फटिक-खण्ड-निर्मित जपमालाको अङ्गुलीके अन्तरालमें रखकर परिवर्त्तित कर रहे थे, अत एव जिसप्रकार आबद्ध रह कर नक्षत्रचक्र घूमते रहते हैं, वैसे द्वितीय ध्रुवनक्षत्रके समान जाबालि देखनेमें आ रहे थे, पुरातन कल्पवृक्ष जिसप्रकार परिपक्व लतासमूहसे घनभावमें परिवेष्टित रहता है, जाबालिका शरीर भी उसीप्रकार उच्च २ शिरासमूहसे घनभावमें परिवेष्टित था, मानससरोवरके जलमें प्रक्षालन करनेसे परम पवित्र एवं क्षौम (रेशमी) वसनके समान स्वच्छ एक वल्कल वे पहने हुए थे, वह वल्कल मानो चन्द्रबिम्बद्वारा या अमृतफेनद्वारा, अथवा दया-धर्म-प्रभृति-गुणसमूहरूपसूत्रद्वारा निर्मित था, और द्वितीय वार्धक्यके समान उधर उनके शरीरमें लगा हुआ था, गङ्गाजलसे परिपूर्ण स्फटिकनिर्मित एक कमण्डलु समीपवर्ती त्रिपदिकाके ऊपरमें स्थापित था, अत एव समीपवर्ती राजहंसद्वारा परिशोभित प्रस्फुटित श्वेतपद्मसमूहके समान जाबालि देखनेमें आ रहे थे, जाबालि, स्थैर्यद्वारा पर्वतोंको, गाम्भीर्यद्वारा समुद्रोंको, तेजद्वारा सूर्यको, शमगुणद्वारा चन्द्रमाको एवं स्वच्छताद्वारा आकाशको मानो विभक्त कर दिये थे, गरुड़ जिसप्रकार अपने प्रभावसे समस्त पक्षिगणका आधिपत्य लाभ किया था, जाबालि

१ घटिताक्ष...। २ उज्ज्वल। ३ तारक ४ उन्नसता। ५ अमलैः। ६...क्षालित...। ७ अद्वितीयेन। ८ स्फटिक...। ९...कमल...।

मिव राजहंसेनोपशोभमानम्, स्थैर्य्येणाचलानां गाम्भीर्य्येण सागराणां तेजसा सवितुः प्रशमेन तुषाररश्मेः निर्म्मलतयाऽम्बरतलस्य संविभागमिव कुर्व्वाणम्, वैनतेयमिव स्वप्रभावोपात्तसकल-द्विजाधिपत्यम्, कमलासनमिवाश्रमगुरुम्, जरच्चन्दनतरुमिव भुजङ्गनिर्म्मोक-धवलजटाकुलम्, प्रशस्त-वारणमिव प्रलम्ब-कर्णवालम्, बृहस्पतिमिवाजन्मवर्द्धित-कचम्, दिवसमिवोद्यदर्क-बिम्ब-भास्वर-मुखम्, शरत्कालमिव क्षीणवर्षम्,

स्थैर्येणेति । स्थैर्येण स्थिरतया अचलानां गिरीणाम्, गाम्भीर्येण गाम्भीर्यगुणेन सागराणां सरित्पतीनाम्, तेजसा प्रतापेन सवितुः आदित्यस्य प्रशमेन शान्त्या तुषाररश्मेश्चन्द्रमसः, निर्मलतया अतिस्वच्छतया अम्बरतलस्य आकाशस्य संविभागं स्वीयवस्तुनः परेभ्यः किञ्चिद्विभज्य प्रतिपादनं कुर्वाणं विदधानमिव स्थैर्यगाम्भीर्यप्रभृतीन् स्व गुणान् अचलादिभ्यः सम्यग्विभज्य दत्वेव स्थितमित्यर्थः स्वस्मिन् तथाविधस्थैर्यादिगुणयुक्तत्वादित्याशयः । तत्र अचलानां स्थैर्यं कम्पशून्यत्वं ऋषेः स्थैर्यन्तु चित्तस्थिरता, समुद्राणां गाम्भीर्यम् अगाधत्वम्, ऋषेः गाम्भीर्यन्तु दुरवगाहप्रकृतित्वम्, आदित्यस्य तेजः तीक्ष्णरश्मित्वम्, ऋषेस्तेजस्तु तपोमाहात्म्यवत्त्वम्, चन्द्रमसः प्रशमः सौम्यस्वरूपत्वम् ऋषेः शमस्तु इन्द्रियाणामन्तर्मुखेन प्रवृत्तिकरणम्, ऋषेर्निर्मलता पापराहित्यमिति परस्परं भेदसत्त्वेऽपि श्लेषमहिम्ना अभेदाध्यवसायादतिशयोक्त्यलङ्कारः, कुर्वाणमिवेति क्रियोत्प्रेक्षा चेत्युभयोरङ्गाङ्गिभावेन सङ्करालङ्कारः ।

वैनतेयमिति । गरुडमिव 'गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः' इत्यमरः, स्वप्रभावेण स्वतेजसा उपात्तम् अर्जितं सकलेषु समस्तेषु द्विजेषु विप्रेषु पक्षिषु च आधिपत्यं स्वामित्वं येन तं तादृशम् 'दन्तविप्राण्डजा द्विजाः' इत्यमरः ।

कमलेति । कमलासनो विरञ्चिः 'विरञ्चिः कमलासनः' इत्यमरः, तमिव, आश्रमस्य तत्तपोभूमेः ब्रह्मचर्यादीनां चतुर्विधानामाश्रमाणाञ्च गुरुः शिक्षयिता नियामकश्च तं तादृशम् । ब्रह्मणैव वर्णाश्रमाश्च नियमिता इति पौराणिकीवार्त्ता ।

जरदिति । जरत् पुरातनो यश्चन्दनतरुः मलयजवृक्षः तमिव, भुजङ्गानां सर्पाणां ये निर्मोकाः कञ्चुकाः तद्वत् धवलाः श्वेताः जटाः सटाः, अन्यत्र भुजङ्गनिर्मोका धवला जटा इव ताभिः आकुलं सङ्कीर्णम् । प्राचीनचन्दनवृक्षेष्वेव परिमलविशेषाधिक्यात्सर्पाधिक्यसम्भव इति प्रतिपादनार्थं जरद्विशिष्टतरुग्रहणमित्यवधेयम् ।

प्रशस्तेति । प्रशस्तो निखिललक्षणोपेतः वारणपतिः हस्तिनायकः तमिव प्रलम्बाः छेदनाभावादतिविस्तृताः कर्णवालाः श्रवणलोमानि यस्य तं तादृशम्, पक्षे—प्रलम्बाः लम्बमानाः कर्णौ श्रोत्रे वालाः पुच्छकेशाश्च यस्य तं तादृशम् ।

बृहस्पतीति । बृहस्पतिः सुराचार्यः तमिव, आजन्म जन्मप्रभृति क्षौराभावात् वर्द्धिता वृद्धिं प्रापिताः कचाः केशा येन तं तादृशम्, पक्षे—कचः कचाभिधः सुतो येन तं तादृशम् ।

पुरा किल बृहस्पतेः कचनामा पुत्र उत्पन्न इति पौराणिकी वार्ता ।

दिवसमिति । दिवसो वासरः तमिव, उद्यत् उद्गच्छत् यत् अर्कबिम्बं सूर्यमण्डलं तद्वत् भास्वरं दीप्तिमत् मुखम् आननं यस्य तं तादृशम्, पक्षे—उद्यदर्कबिम्बेन भास्वरमुखं प्रारम्भिकप्रकाशो यस्य तं तादृशम् ।

शरदिति । शरत्कालः वर्षात्ययसमयः तमिव, क्षीणानि व्यतीतानि वर्षाणि 'शतायुर्वै पुरुषः'

भी उसी प्रकार अपने प्रभाव से समस्त ब्राह्मणगणका आधिपत्य लाभ किये थे, ब्रह्मा जिसप्रकार ब्रह्मचर्यप्रभृति आश्रमचतुष्टयके नियन्ता हैं, वे भी उसी प्रकार उस आश्रमके नियन्ता ( अथवा अध्यापक ) थे, पुरातन चन्दनवृक्ष जिसप्रकार धवलजटाके समान सर्पकञ्चुकसे व्याप्त रहता है, वे भी उसीप्रकार सर्पकञ्चुकके समान धवलजटासे व्याप्त थे, प्रकाण्ड हस्तीका जिसप्रकार कर्णयुगल और पुच्छका लोम वृहद रहता है, जाबालिका भी उसीप्रकार कर्णके लोम बड़े २ थे, बृहस्पति जिसप्रकार निजपुत्र कचको जन्मसे वर्द्धित किये थे, ये भी उसी प्रकार जन्मसे केशकलाप को वर्द्धित किये हुए थे, दिनका प्रथमभाग जिसप्रकार उदीयमान सूर्यमण्डलद्वारा दीप्तिमान् होता है, जाबालिका मुखमण्डल भी उसीप्रकार उदीयमान सूर्यमण्डलके समान दीप्तिमान् था, शरत्कालमें जिस

१ अचलेः स्थैर्य्येण सागराणां गम्भीर्येण । २ क्वापि सकलपदं न विद्यते । ३ भुजग... । ४...वारणपतिमिव । ५ कर्णतलम् कर्णतालम् ।

